BENARES SANSKRIT SERIES

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH M. A.

AND

G. THIBAUT PH. Dr.

No. 45

---

# महर्षिकात्यायनप्रणीतम् शुक्लयजुःसर्वानुक्रमसूत्रम् ।

याज्ञिकानन्तदेवविरचितभाष्यसमन्वितम् ।

श्रीकाशिकराजकीयप्रधानपाठशालाधीतविद्येन श्रीमिथिला
धीशतो लब्धवैदुष्यप्रतिष्ठेन काशीस्थप्रसिद्धविद्वज्जनसं
स्थापितवेदविद्यालयप्रधानाध्यापकेन च पाठको
पाह्वश्रीमद्युगलकिशोरशर्मणा लिखितया सर्वा-
नुक्रमकीर्तिप्रकाशाख्यटिप्पण्या समेतम् ॥

# KÁTYÁYANA'S SARVANUKRAMA SUTRAS OF THE WHITE YAJUR VEDA,

WITH THE COMMENTARY OF YÁJÑIKANANTADEVA

EDITED AND ANNOTATED BY PANDIT YUGALAKISORA PATHAKA

LATE SCHOLAR OF THE BENARES SANSKRIT COLLEGE.

**Fasciculus I.**

---

*BENARES*

**PUBLISHED BY MESSRS. BRAJ B. DAS & CO.**

PRINTED AT THE BENARES PRINTING PRESS

BY CHHANNULAL.

1893

# शुक्लयजुस्सर्वानुक्रमसूत्र...



योगयोगाय नमः ॥

माध्यन्दिनीयशाखाया कात्यायनकृता तु या । सर्वानुक्रमणी त-
।स्या व्याख्यानं क्रियते मया ॥ १ ॥ इह हि भगवान्कात्यायनाचार्यः
[प्रा]रीप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्तये प्रचयगमनाय चेष्टदेवता-
[नु]ध्यानलक्षणं मङ्गलाचरणं विधाय श्रोतृबुद्धेरव्याकुलत्वार्थं ग्रन्थ-
[प्र]तिपाद्यं प्रकटी करोति ।

मङ्गलं दर्शितमपि हृदयं चाधिष्ठितं येन मुक्ता-
न यजूंष्यपि भगवान्याज्ञवल्क्यो यतः प्राप तं
विवस्वन्तं नमोमयमर्चिष्मन्तमभिध्याय माध्यन्दिनीये
(१)वाजसनेयके यजुर्वेदाम्नाये सर्वे सखिले सशुक्रिय-
ऋषिदैवतछन्दांस्यनुक्रमिष्याम इति ।

तत्रैवमन्वयः । अथ यजुर्वेदाम्नाये ऋषिदैवतछन्दांस्यनुक्रमिष्याम ।
ऋषयश्च दैवतानि छन्दांसि च । ऋषिदैवतछन्दांसि तान्यनुक्रमिष्याम-
स्तान ॥ तत्र यजुर्वेदस्य षडशीतिभेदात्मकत्वात् प्रायते कस्मिन्यजु-
र्वेदाम्नाय इत्यतस्तं विशेषयति । वाजसनेयके इति । वाजसनेयके
[य]जुर्वेदाम्नायस्यापि पञ्चदशभेदात्मकत्वात् प्रायते कस्मिन्वाजसने-
यके पुनरपि तं विशेषयति माध्यन्दिनीय इति वाजसनेयशाखान्तरभेदे
[मा]ध्यन्दिनीयसंज्ञे यजुर्वेदाम्नाये इत्यर्थः । कीदृशे यजुर्वेदाम्नाये
सर्वे सह ऋषिभिर्वर्त्तत इति सर्षं तस्मिन्सर्षे सो यजुषा वेदो

(१) काण्वीय,शत काण्वशाखीयसर्वानुक्रमण्यामयम्पाठो नोप ॥

यजुर्वेदइत्युक्ते पर्युदासो मा भूदिति। सकांडत्युक्तं। पुनः की-दृशे। सखिले खिलशब्देनागारध्याधीताः कपिलागंप्रविनियु-क्तामन्त्रगणा उच्यन्ते। प्रवायुमच्छ, सुचन्तु मा प्रपथ्या, दृन्तिच पृथि-वी चेत्येवमादय.। सह खिलैर्वर्त्ततदृति सखिल.। तस्मिन्सखिले। न नु खिलानामपि यजुर्वेदमध्यएव सत्वात्किमर्थं पृथगुपदेश। उच्यते। एषां च चित्तागंप्रविनियुक्तत्वाद्ध्यादिज्ञानं निष्प्रयोजन स्यादिति, न निष्प्रयोजनं स्यादिति शङ्कानिरासायेत्यदोषः। एषामपि ब्रह्मयज्ञा-ध्ययनपारायणवाक्सोमादौ विनियोगस्य सत्वात्। एतान्यविदि त्वेत्यादिना ऋष्याद्यज्ञात्वाऽध्ययनादावनिष्टमाप्लुक्तेर्ज्ञात्वाऽध्ययना-ध्यापनादिक्रियायामिष्टसिद्ध्युक्तेरेषामप्यृष्यादिज्ञानमपेक्ष्य यत एवे त्यभिप्राय'। स्वाध्यायमपि योऽधीते मन्त्रदैवतज्ञः सोऽमुष्मिँल्लोके सेरपीयते इति। तथा सर्वमेतच्छन्दोदैवतमार्षं च विज्ञाय यत्किंचिद्य पद्दोमादि करोति तस्य फलमश्नुते इत्यृष्यादिज्ञाने फलश्रुतेश्च। पु नः कीदृशे यजुर्वेदाम्नाये। सशुक्रिये। शुक्रआदित्य'। शुश। "तद एष एव शुक्रो यएष तपतीति श्रुते," आदित्यश्च घर्मः। "असौ वा आ दित्यो घर्म इति श्रुते"। अतो घर्म आदित्य. शुक्रइत्येकोऽर्थः। अत शुक्रस्य घर्मस्य सम्बन्धी यो मन्त्रविभागः। ऋचँवाचमित्यादिक स शुक्रियशब्देनोच्यते तेन सह वर्त्ततइति स शुक्रियस्तस्मिन्सशुक्रिये अयं च शुक्रियो भागो दिवैव पठ्यते न रात्रौ। तथा श्रयणरण्ये एव पठ्यते न ग्रामे। शुक्रियादन्यो यो वेदभागः स तत्नियमेनोभ यत्र पठ्यते। अतो धर्मेदाच्छुक्रियस्य पृथङ्निर्देशः। किं कृत्वा। तं विवस्वन्तं सूर्यं त्रयीमय वेदत्रयात्मकमर्चिष्मन्तं दीप्तिमन्तं अभिध्याय चाभीत्यत्वाटरे। अत्यादरेण भक्तियद्धापूर्वकं माराध्यत्वेन मनसि चि-न्तयित्वा(१)। "सैषा त्रय्येव विद्या तपतीति श्रुते," त्रयीमयमित्युक्तं

(१) शतपथब्राह्मणस्य दशमकाण्डाग्निरहस्यस्य दशम्या कण्डिकायामुक्तेयोति॥

एवंविधस्य सूर्यस्य स्मरणं कृत्वा ऋषिदैवतछन्दसामनुक्रमणं करिष्यामः। इत्यर्थः। तं विवस्वन्तमित्युक्तं। तत्र तं कमित्यपेक्षायामाह ये-न विवस्वता सूर्येण मण्डल दक्षिणमक्षि हृदय वाऽधिष्ठितं श्रितं। मण्डल आकाशे जगत्प्रकाशकत्वेन परिदृश्यमान तेजोमय सूर्यमण्डलं, दक्षिणमक्षीति पुरुषस्य दक्षिण चक्षु। पुरुषस्य हृदयं च। एतत्त्र-यमाक्रम्य यः स्थितवानित्यर्थः। तथा च श्रूयते(१)। "स एषऽएव मृत्युर्यऽ एष एतस्मिन्मण्डले पुरुषो यश्चाय दक्षिणेऽक्षन्पुरुषस्तस्य हैतस्य हृदये पादावति ष्ठतोताविति"। पुन कं त। यतो यस्माद्विवस्वतो, भगवान्याज्ञवल्क्यो मुनिः शुक्लानि विशुद्धानि अपौरुषेयत्वाद्दष्टदो-षरहितानि यजूंषि प्राप प्राप्तवान्। तथा च श्रूयते(२)। "आदित्यानी मानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्त" इति। तत्र केषां चिन्मते यजुषां छन्दो नास्तीत्याह।

## यजुषामनियताक्षरत्वादेकेषां छन्दो न विद्यते.

एकेषामाचार्याणां मते यजुषां इषे त्वेत्यादीनां छन्दो न विद्यते। गायत्र्युष्णिगादिनामक छन्दो नास्ति, कुतो न विद्यते इत्यपे-क्षायामाह। अनियताक्षरत्वादिति। गायत्र्यादि छन्दो हि नि-यताक्षरं चतुर्विंशत्यक्षरा गायत्रीत्याद्यक्षरसङ्ख्यानियमश्रवणात्। न च यजूꣳष्यपि नियताक्षराणि। अतस्तेषु नियताक्षरसङ्ख्या-स्वरूपं छन्दो नास्तीत्यर्थः। एकेषामित्युक्तत्वात्केषां चिन्मते य-जुषामपि छन्दोनास्तीति प्रतीयते। तत्र छन्दसद्भावपक्षे। छ-न्दोगायत्री "दैव्येक"मित्यादिपिङ्गलादुक्तप्रकारैरेकाक्षरद्व्यक्षरत्र्य-क्षरादीनि छन्दांसि यजुःषु कल्पनीयानि। तानि चाग्निमन्थने गोभा-दिः। अतः प्रथमं तान्यष्टप्रकाराणि गायत्र्यादीनि छन्दांसि प्रदर्श्यन्ते॥

(१) पूर्वोक्तकाण्डकाण्डिकेयेति॥

(२) शतपथब्राह्मणीयचतुर्दशबृहदारण्यकाण्डस्थ कण्डिका तातस्येति॥

पादतइति। छन्दसा पादतो या या सम्पद् मन्येत ता ता सम्यक् पूर्वं मभिसमीक्ष्य पादाय पदा न।मभेदेन तु पादानां विभाग कर्त्तव्य । प्रायोऽर्थो वृत्तमितीति पादज्ञानस्य हेतव । प्राय अर्थं वृत्त। इत्येते त्रय पादज्ञानस्य हेतवो भवन्ति। प्रायस्त्रिष्टुब्प्राय, अनुष्टुप्प्राय इति। विप्रतिषेधपाते तु पूर्वं पूर्वं पर पर । एषामेव प्रायाऽर्थवृत्तरूपाणां विप्रेयाणा सन्निपाते तु पूर्वं निमित्त पूर्वं भवति । पर निमित्त पर भवति पूर्वो हेतुरुत्तराद्बलीयानित्यर्थ, प्रायाऽर्थयोर्विरोधे प्रायो बलीय ।प्रायो बलीयस्त्वा'दूर्ध्वो व्याजस्य सनिता यद् व्यभिरिष्यपादा जिज्ञासेत् । पिङ्गलोऽप्याह छन्द । गायत्री दैव्येक। आसुरी पञ्चदश । प्राजापत्याऽष्टौ । यजुषा षट । साम्ना द्वि । ऋचा त्रि । द्वौ साम्ना वर्धेत । त्रीस्त्रीनृचा । चतुरश्चतुर प्राजापत्याया । एकैकशेषे । जह्यादासुरी । तान्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः इत्येवं सञ्ज्ञानि, एकविंशति सङ्ख्याश्च पराण्यपि छन्दांसि सन्ति । तत्र चतुर्विंशत्यक्षरा गायत्री अष्टाविंशत्यक्षरा उष्णिक॥ द्वात्रिंशदक्षराऽनुष्टुब्षट्त्रिंशदक्षरा बृहती। चत्वारिंशदक्षरा पङ्क्ति । चतुश्चत्वारिंशदक्षरा त्रिष्टुप्, अष्टाचत्वारिंशदक्षरा जगती। द्वापञ्चाशदक्षरा अतिजगती। षटपञ्चाशदक्षरा शक्वरी । षष्ट्यक्षरा अति शक्वरी । चतु षष्ट्यक्षरा अष्टि । अष्टषष्ट्यक्षरा अत्यष्टि । द्वासप्तत्यक्षराधृति । षटसप्तत्यक्षरा अ तधृति । अशीत्यक्षरा कृति । चतुरशीत्यक्षरा प्रकृति । अष्टाशीत्यक्षरा आकृति । द्वानवत्यक्षरा विकृति ॥ षण्णवत्यक्षरा सस्कृति । शताक्षराऽभिकृति । चतु शताक्षरोत्कृतिरिति । एकमेकाक्षर छन्दो दैवी गायत्री ।एक द्व्यक्षर दैव्युष्णिक् । एकं त्र्यक्षरदैव्यनुष्टुप । एक चतुरक्षर दैवी बृहती । पञ्चाक्षर दैवीपङ्क्ति । द्वे षडक्षरे यजुर्गायत्री दैवीत्रिष्टुप् । द्वे सप्ताक्षर दैवी जगती । यजुरुष्णिक । द्वे अष्टाक्षरे यजुरनुष्टुप् ।प्राजापत्या गाय

ची च। द्वे नवाक्षरे आसुरीजगती यजुर्बृहती च। द्वे द्वादशाक्षरे आसुरी त्रिष्टुप् यजुः पङ्क्तिश्च। द्वे एकादशाक्षरे आसुरीपङ्क्तिर्याजुषी त्रिष्टुप् च। चत्वारि द्वादशाक्षराणि सामगायत्री यजुर्जगती आसुरी बृहती॥ प्राजापत्योष्णिक्। एकं त्रयोदशाक्षरं आसुर्यनुष्टुप्। द्वे चतुर्दशाक्षरे आसुर्युष्णिक्। सामोष्णिक्। एकं पञ्चदशाक्षरं आसुरी गायत्री। द्वे षोडशाक्षरे प्राजापत्यानुष्टुप्। सामानुष्टुप् च। सप्तदशाक्षरं नास्ति। द्वे अष्टादशाक्षरे सामबृहती ऋग्गायत्री च। एकोनविंशत्यक्षरं नास्ति। द्वे विंशत्यक्षरे प्राजापत्या बृहती सामपङ्क्तिः एकविंशत्यक्षरं ऋगुष्णिक्, एकं द्वाविंशत्यक्षरं साम्नीत्रिष्टुप्। त्रयोविंशत्यक्षरं नास्ति। चत्वारि चतुर्विंशत्यक्षराणि। प्राजापत्या पङ्क्तिः, सामजगती। ऋगनुष्टुप्। आर्षी गायत्री च। पञ्चविंशतिषड्विंशत्यक्षरे नस्तः। एकं सप्तविंशत्यक्षरं ऋग्बृहती। द्वे अष्टाविंशत्यक्षरे प्राजापत्या त्रिष्टुबार्षी चोष्णिक्। एकोनत्रिंशदक्षरं नास्ति। एकं त्रिंशदक्षरं ऋचां पङ्क्तिः। एकत्रिंशदक्षरं नास्ति। द्वे द्वात्रिंशदक्षरे प्राजापत्या जगती। आर्षी अनुष्टुप् च। एकं त्रयस्त्रिंशदक्षरं ऋचां त्रिष्टुप्। चतुस्त्रिंशदक्षरे नस्तः। त्रीणि षट्त्रिंशदक्षराणि ऋग्जगती। ब्राह्मी गायत्री आर्षी बृहती च। अन्यानि न सन्ति। एकं चत्वारिंशदक्षरमार्षीपङ्क्तिः। एकं द्विचत्वारिंशदक्षरं ब्राह्मी उष्णिक्। एकं चतुश्चत्वारिंशदक्षर आर्षी त्रिष्टुप्। द्वे अष्टाचत्वारिंशदक्षरे आर्षी जगती। ब्राह्मी अनुष्टुप् च। एकं चतुष्पञ्चाशदक्षरं ब्राह्मी बृहती। द्वे षष्ट्यक्षरे ब्राह्मी पङ्क्तिरतिशक्वरी च। एकं षट्षष्ट्यक्षरं ब्राह्मी त्रिष्टुप्। द्वे द्वासप्तत्यक्षरे ब्राह्मी जगती धृतिश्चेति। एषु पठिताक्षरैर्यत्राक्षरसङ्ख्या न पूर्यते तत्र वक्ष्यमाणेन व्यूहेन पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरी भावान् व्यूहेदित्यनेन पूरणं। तदसम्भवे न्यूनाधिकभेदेन निचृद्भुरिजौ द्वाभ्यां विराट्स्वराजावि-

न्युपायेन छन्दः कल्पनीयं ॥ एवमेकाक्षरप्रभृत्येकैकाक्षरवृद्ध्या चतुरधिकशताक्षरपर्यन्तानि छन्दांसि सन्ति । ततोऽप्यधिकाक्षराणां यजुषां छन्दो नास्ति छन्दोगपरिशिष्टेऽपि । सर्वछन्दःस्वेकेन पञ्चाक्षरेण शङ्कुमती भवति । अथैकाक्षरहीना निचृदेवाक्षराभूरिक् । न्यूना विराट् । द्व्यधिका स्वराट् । अल्पीयसाध्यापिपीलिकमध्या यवमध्येति । यथाभ्यां यकारवकारविकर्षेण न्यूनानि छन्दांसि पूरयेत् । नशब्देन च तदन्तवर्जं पदप्रकृत्या च । स्वशब्देन च । न्यूनत्वे तु मन्द पूरयःति । तदेवं सर्वयजुषामक्षराणि गणयित्वा गणयित्वा अनेन प्रकारेण यजुःषु कल्पनीयं । सूत्रस्य चायमेवार्थः । यानि यजूंषि नियताक्षराणि तेषां छन्दो नास्त्येव ॥ यानि च नियताक्षराणि तेषां छन्दोऽस्त्येव । यानि च नियताक्षराणि इषेत्वेत्यादीनि भिन्नान्यूनछन्दोलक्षणयुक्तानि तेषां छन्दो विद्यत एवेति । युक्तोऽयं पक्ष, अन्यथा एकाक्षरप्रभृतीनां चतुरधिकशताक्षरपर्यन्तानां छन्दसां पाठिकवैयर्थ्यापत्ते । तस्मादेवमेव व्याख्येयं । एकेषां यजुषामनियताक्षराणां सप्ताधिकशताक्षरपर्यन्तानां छन्दो नास्त्येव । ततोऽर्वाचीनसङ्ख्याक्षराणां त्वस्त्येवेति कथिदेवतछन्दांस्यनुक्रमिष्याम इति पूर्वं प्रतिज्ञातं । तत्र के ऋषय इत्याकाङ्क्षायामाह ॥

## द्रष्टार ऋषयः स्मर्त्तारः परमेष्ठ्यादयः ।

परमेष्ठि आदि प्रथमो येषां ते परमेष्ठ्यादय, संहितायामादौ दर्शपूर्णमासमन्त्रा पठिता । तेषां च परमेष्ठी ऋषि ॥ परमेष्ठ्यादय इति परमेष्ठीप्रजापतिप्रभृतयो मन्त्राणां द्रष्टार ऋषय इत्युच्यन्ते । द्रष्टार इत्यस्यैव व्याख्यानं स्मर्तार इति । परमेष्ठ्यादयो हि पूर्वस्मिन्कल्पे नानाविधदुष्करतपश्चरणादिविशिष्टकर्मजनितस्मृतिसंस्कारादशंछिन्नधर्माण, सुप्तप्रतिबुद्धवत्कल्पादौ स्व विषयाभिव्यज्यमाना

कस्याग्नेर्धेनुपयादृक्सामाम्नान् कस्मात्? ऋषतीति धातोरृ-ष्युच्यते। अतश्च यः परमेष्ठी देवं मन्त्रं पश्यति तस्य मन्त्रस्य स ऋ-षिरित्युच्यते। अतएवाह यास्कः "ऋषिर्दर्शनादिति"। दर्शनमत्र ज्ञा-नम् ॥ छन्दसां स्वरूपमाह।

छन्दांसि गायत्र्यादीनि।

(१)अथ छन्दांसि गायत्र्युष्णिगनुष्टुबित्यभिधानानि गायत्र्यादीनि न्दांसि ज्ञेयानि। न ऋषिदैवतछन्दसां ज्ञानं विनाऽपि मन्त्राणामध्य-यनादिसिद्धेः, किमर्थं तत्कथनमित्याशङ्क्य तदज्ञानेऽनिष्टमाह।

एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवति।

एतानि ऋषिदैवतछन्दांस्यविदित्वा अज्ञात्वा योऽधीते यो वेदं पठति योऽनुब्रूते अन्यं पाठयति रुद्राध्यायादिकं जपति व्याहृत्यादिमन्त्रेण वा यजते स्वार्थं यागं कुरुते याजयते स्वयमृत्विग्भूत्वा परान्याजयति तस्य पुरुषस्य ब्रह्म वेदो निर्वीर्यं स्वकार्यसाधने शक्तिहीनं यातयामाकिञ्चित्करं निष्फलं भवति। ऋष्यादिकमज्ञात्वाऽध्ययनेऽध्यापने जपे होमे यजने याजने वा प्रयुक्ता मन्त्रा निर्वीर्यत्वात्स्वकार्यसाधका न भवन्तीत्यर्थः। अनिष्टान्तरमाह।

अथान्तरा श्वगर्तं वाऽऽपद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान्भवति॥

अथ ऋष्याद्यज्ञात्वाऽध्ययनादिकरणानन्तरं श्वगर्तमन्तरा आपद्यते श्वगर्तमध्यं प्राप्नोति। शुनां गर्तः अशुचिस्थानं नरकमुच्यते।

(१) गायत्र्यादिछन्दसां दैवतनिर्वचनानि सामवेदैवतब्राह्मणे प्रतिपादितान्यतस्तत्र द्रष्टव्यानीति ॥

मत्वं। मन्त्राणां वर्णात्मकत्वेन चक्षुषा दर्शनासम्भवात्। अतएव अ-
त्तार इति पर्यायोपादानम्। श्रुतिगतानामपश्यदित्यादीनां व्याख्या-
नार्थं द्रष्टारइत्युक्तम्। अथ देवतास्वरूपमाह।

**देवता मन्त्रान्तर्भूता अग्न्यादिका हविर्भाजः स्तुति-
भाजो वा।**

या मन्त्रान्तर्भूता मन्त्रमध्यपठिता मन्त्राक्षरप्रमेयस्वरूपा हविर्भाजः
स्तुतिभाजो वा। अग्न्यादिकास्ता देवताः। मन्त्रवर्णोदिता अग्निसो-
मेन्द्रविष्ण्वादयो देवता इत्यर्थः। तत्र कायन हविर्भजन्ते कायन स्तु-
तिम्। तथा च यास्कः। "यस्यै सूक्तं यजति यस्मै हविर्निरूप्यतइति"।
तथा इतीमा देवता अनुक्रान्ताः सूक्तभाजो हविर्भाजइति। तथा यत्का-
मऋषिर्यस्यां देवता या सार्थऽपत्यमिच्छं स्तुतिं प्रयुङ्क्ते तद्दैवतः स
मन्त्रो भवतीति च। ननु भवतु महाप्रभावानामग्न्यादीनां देवतात्वं
अतः ग्रावादीनां त्वचेतनानां कथं। नहि तानि हविष्प्रतिग्रहणसम-
र्थानि। नच कृतां स्तुतिं जानन्तीत्यतआह।

**अतः ग्रावोखाग्न्योपवेषकपालेध्मोलूखलादयश्च
प्रतिमाभूताः।**

यथा विष्ण्वादिदेवतानां सुवर्णादिमय्यः प्रतिमा भवन्ति ताश्च
देवतारूपा अपि देवतावत्पूज्यन्ते स्तूयन्ते वाञ्छितं प्रयच्छन्ति। एवमतः
ग्रावादयो देवतारूपा अपि देवतानां प्रतिमाभूता देवता ज्ञेयाः।
तथा च यास्कः। "अपि ह्यदेवता देवतावत्स्तूयन्ते तथाऽश्वप्रभृतीन्यो-
षधिपर्यन्तानीति"। अत ग्रावादिषु प्रतिमाभूतासु विष्ण्वादिप्रतिमा-
स्विवाधिष्ठात्र्यो देवताः सन्ति ताश्चाभिमतं सर्वं करिष्यन्तीत्यभिप्रायः।
एतच्च देवतानां च विग्रहवत्वाङ्गीकारे पक्षे। अग्न्यादिशब्दानामेव
देवतात्वपक्षे त्वियमाशङ्कापि नास्ति। यथा। अग्न्यादिशब्दानां देवतात्वं

तथाऽनः शाखादिशब्दानामपि भविष्यति शब्दत्वाविशेषात् ॥ अथ छन्दसां स्वरूपमाह ।

**छन्दाꣳसि गायत्र्यादीनि ।**

(१)अथ छन्दाꣳसि गायत्र्युष्णिगनुष्टुबित्यत्रोक्तानि गायत्र्यादीनि न्दाꣳसि ज्ञेयानि । न ऋषिदैवतछन्दसां ज्ञानं विनाऽपि मन्त्राणामध्ययनादिसिद्धेः, किमर्थं तत्कथनमित्याशङ्क्य तदज्ञानेऽनिष्टमाह ।

**एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजते तस्य ब्रह्म निर्वीर्यं यातयामं भवति ।**

एतानि ऋषिदैवतछन्दांस्यविदित्वा अज्ञात्वा योऽधीते यो वेद पठति योऽनुब्रूते अन्यं पाठयति रुद्राध्यायादिकं जपति व्याहृत्यादिमन्त्रेण यो यजते स्वार्थं याग कुरुते याजयते स्वयमृत्विग्भूत्वा परान्याजयते तस्य पुरुषस्य ब्रह्म वेदो निर्वीर्यं स्वकार्यसाधने शक्तिहीन यातयामाकिञ्चित्करं निष्फल भवति । ऋष्यादिकमज्ञात्वाऽध्ययनेऽध्यापने जपे होमे यजने याजने वा प्रयुक्तो मन्त्रो निर्वीर्यत्वात्स्वकार्यसाधको न भवतीत्यर्थः । अनिष्टान्तरमाह ।

**अथान्तरा श्वगर्तं वाऽऽपद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान्भवति ॥**

अथ ऋष्याद्यज्ञात्वाऽध्ययनादिकरणानन्तर श्वगर्तमन्तरा आपद्यते श्वगर्तमध्य प्राप्नोति । शुनां गर्तं अशुचिस्थानं नरकमुच्यते । अनेन पापेन नरके पततीत्यर्थः । तथा स्थाणु वा ऋच्छति । ऋच्छगतीन्द्रियप्रलयमूर्तिभावे, स्थाणुं मूर्तिभावं स्थाणुरूपत्वं प्राप्नोति वाता-

(१) गायत्र्यादिछन्दसां दैवतनिर्वचनानि सामगदैवतब्राह्मणे प्रतिपादितान्यतस्तस्माद्बोध्यानीति ॥

दिना भग्नशाख' शुष्को वृक्ष. स्थाणुरित्युच्यते । एवंविधवृक्षयोनिं या-तीत्यर्थः। तथा प्रमीयते वा एतेन पापेन प्रमीयते अचिरान्मरणं प्राप्नोति। परमायुष' परैवापमृत्युना म्रियतइत्यर्थः। "अथवा प्रमी-यते अन्धो वा बधिरो वा भवति"। एष ह वै प्रमायुर्योऽन्धो वा बधिरो भवति। प्रपूर्वस्यास्य धातोरेवमर्थत्वादर्शनात्। तथा। पापीयान्भ-वति। अतिशयेनपापकारी भवति "पुण्यो वै पुण्येन कर्मणा भ-वति पाप पापेनेति श्रुते"। अतिशयेन पाप पापीयान्। चाण्डाल म्लेच्छादिजातिषु जायतइत्यर्थं। तथा च स्मृति। अविदित्वा ऋ-षि छन्दो दैवत योगमेव च। अध्यापयेज्जपेद्वापि पापीयाञ्जायते तु स.। इति। तथा। ऋषिछन्दो दैवतानि ब्राह्मणार्थं स्वरानपि। अविदित्वा प्रयुञ्जानो मन्त्रकण्टकउच्यते। इति। कण्टक पीडक इ-त्यर्थं। तथा मन्त्राणा दैवत छन्दो निरुक्त ब्राह्मणानृषीन्। कृ-त्तद्धितादीश्चाज्ञात्वा यज ते यागकण्टकाइति। छन्दोगानामार्षेयब्रा-ह्मणेऽपि श्रूयते। "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याज-यति वाऽऽध्यापयति वा स्थाणुं वर्च्छति गर्त वाऽऽपद्यते वा प्रमीयते पापीयान्भवति। यातयामान्यस्य छन्दांसि भवन्ति। तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति"। तदेवमृष्यायज्ञानेऽनिष्टप्राप्तिमभिधायाथ तेषां ज्ञाने यद्भवति तदाह ॥

अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत् ॥

एतानि ऋषिदैवतछन्दांसि विज्ञाय विशेषेण ज्ञात्वा योऽधीते वेदं पठति। तस्य ब्रह्म वीर्यवद्भवति। प्रबलशक्तियुक्त यदर्थं प्रयु-ज्यते तत्कारणसमर्थं भवति ॥ ब्रह्मशब्देन वेदमुच्यते। अर्थज्ञाने च फलविशेषमाह ॥

अथ योऽर्थवित्तस्य वीर्यवत्तरं भवति ॥

यो द्विजो मन्त्राणामृष्यादिज्ञानवानर्थञ्च मन्त्राणां मर्थमभिजानाति । तस्य ब्रह्म वीर्यवत्तरं अतिशयेन वीर्यवत् । स्वकार्यसाधने अतिप्रबलशक्तिमद्भवति वेदेऽप्यर्थज्ञानशून्यस्य निन्दा सन्दृश्यते । अर्थज्ञानवतः प्रशंसा च । स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थवित्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मेति' । ऋष्यादिमन्त्रार्थज्ञतया कृत जपादिकमपि सकलसाधकं भवतीत्यतआह ॥

जपित्वा हुत्वेष्ट्वा
तत्फलेन युज्यते ॥१॥

ऋषिदैवतछन्दोमन्त्रार्थज्ञानवान्पुरुषो जपहोमयागान्कृत्वा तत्फलेन जपादिफलेन युज्यते सम्बन्धं प्राप्नोति । तादृशैर्वीर्यवत्तरैर्ज्ञातर्षिज्ञातर्षिदैवतछन्दस्कैश्च मन्त्रैः कृतं जपहोमयागादिकमवश्यं फलदं भवतीत्यर्थः । अथ संहितापठितं सर्वमन्त्रसाधारणमेकं ऋषिमाह ॥

इषे त्वादि खमृग्ब्रह्मान्तं विवस्वानपश्यत् ॥ (१)

इषे त्वोर्ज्जे त्वेत्यत आरभ्यों३म् खं ब्रह्मेत्यन्तं सर्वं मन्त्रजातं विवस्वानपश्यत् । तत्सर्वं स्मृतवान् । "आदित्यानीमानि यजूंषि वा आहुरिति श्रुतेः" ॥

ततः प्रतिकर्मविभागेन ब्राह्मणानुसारेण ऋषयो वेदितव्याः ॥

तत इति सर्वकर्मसु सर्वसाधारणं विवस्वन्तं ऋषिं विदित्वा तस्मादनन्तरं प्रतिकर्म कर्मणि कर्मणि सर्वकर्मसु विभागेनेति । ए-

(१) इषे त्वादिखमर्वाक् विधेमेत्यन्तानि ते कात्यायनीयसर्वानुक्रमपाठ. ॥

तत्कर्मसम्बन्धिमन्त्रगणस्यायमृषिरस्यायं अस्यायमित्येवं रूपेण वि-
भागेन ब्राह्मणानुसारेणेति तत "एतं परमेष्ठीप्राजापत्यो यज्ञमपश्य-
द्दर्शपूर्णमासौ प्रजापतिः प्रथमां चितिमपश्यदित्यादि" ब्राह्मणवा-
क्यानुसारेण वक्ष्यमाणा ऋषयो वेदितव्या ज्ञातव्या। अथ सर्वेषां
दर्शपूर्णमासमन्त्राणां साधारणमृषिमाह॥

## परमेष्ठी प्राजापत्यो दर्शपूर्णमासमन्त्राणामृषिः॥

प्रजापतेरपत्यं परमेष्ठीसंज्ञ। सर्वेषां दर्शपूर्णमासमन्त्राणामृ-
षिर्ज्ञातव्य। "तत एतं परमेष्ठीप्राजापत्यो यज्ञमपश्यद्यद्दर्शपूर्ण-
मासाविति श्रुतेः"। यत्र तु ऋषिविशेषोऽभिधीयते॥ तथा पुरा।
वषट्कारोऽपश्यदीतिस्तोत्रं विश्वावसुरित्यादौ तत्रोभावृषी भव-
त। दर्शपूर्णमासमन्त्राणामेव पुनरपि वैकल्पिकानृषीनाह॥

## देवा वा प्राजापत्याः॥

अथ वा प्रजापतेः पुत्रा देवा दर्शपूर्णमासमन्त्राणामृषय। ते दे-
वा अकामयन्तेत्युपक्रम्य "एतद्वै हविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासा-
विति श्रुतेः"॥ अत उभयश्रवणाद्विकल्प॥ (१)

## इषे त्वा शाखाऽनुष्टुप्॥

इषेत्वेत्यस्य यजुष शाखादेवता अनुष्टुप्छन्द इयं दैव्यनुष्टुप्
अष्टाक्षरत्वात्। एतच्च यजुषां छन्दःसद्भावपक्षे ज्ञेयम्॥

## विनियोगः कल्पकारोक्तः॥

वेदितव्य इति शेष। अस्य मन्त्रस्य। तस्मिन्कर्मणि विनियो-
ग। अनेन मन्त्रेणेदं कर्म कर्तव्यं। अनेनेदमित्येवं विधो मन्त्रा-

---

(१) अत्राप्यादौ विशेषऽउक्त एव इति कारेण। ममाग्ने वर्चो विहवेष्वस्तु व-
यन्त्वेन्धानास्तन्वं पुषेम॥ मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम। इ-
त्यस्य मन्त्रस्य परमेष्ठी प्राजापत्य ऋषिर्देवा वा प्राजापत्या ऋषय शाखा दे-
वता दैव्यनुष्टुप्छन्द शाखाछेदने विनियोग॥ इति कात्याय। तैत्ति०सं०४का०
७ प्रपा० अ०२४॥

पां विनियोगः । कल्पकारोक्तएवेह वेदितव्यः । कर्मानुष्ठानवेलायां मन्त्राणां विनियोगज्ञानमावश्यकं । तदज्ञाने दोषस्य प्रागुक्तत्वात् । यतः कल्पकारेण कात्यायनेन इषेत्वेति शाखां छिनत्ति । ऊर्जेत्वेत्यनुमार्ष्टि वायवस्थेति वत्सानपाकरोति इत्यादिसूत्रैरुक्तः अतः स इह नोच्यते । तत एव ज्ञेय इति भावः । तत्र इषे त्वेत्यस्य शाखाछेदने विनियोगः ॥

एवमूर्ज्जे त्वा ॥

पूर्वोक्तस्य शाखानुष्टुवित्यस्यात्रैवमित्यतिदेशः तेनोर्ज्जेत्वेत्यादि यजुषः शाखादेवता दैव्यनुष्टुप्छन्दः त्र्यक्षरत्वात् । शाखाया अनुमार्जने पर्णादिपातनेन समीकरणे विनियोगः ॥

वायवो वायव्यं ॥

वायवस्थेतीद यजुर्वायव्यं वायुर्देवता यस्य तद्वायव्यं "वायवृतुपित्रुषसो यदिति यत्" । दैवी बृहतीछन्दः । चतुरक्षरत्वात् । वत्सापाकरणे विनियोगः ॥

देवो वऽऐन्द्रम् ॥

देवो वः सवितेतादं यजुरैन्द्रं इन्द्रो देवता यस्य तदैन्द्रं । अथ द्वादशाक्षरत्वात् । द्वाभ्यामक्षराभ्यामूना विराड्छन्दः । अथ वा द्वाभ्यामधिका अतिजगती वा स्वराट् द्वाभ्यामधिका साम्नीपङ्क्तिर्वा स्वराट् । गाः शाखयोपस्पर्शने विनियोगः ॥ (१)

यजमानस्य शाखा ॥

यजमानस्य पशूनित्यस्य शाखादेवता यजुर्बृहती वा आसुरी जगती वा । नवाक्षरत्वात् । शाखोपगूहने विनियोगः ॥

---

(१) अत्र वृद्धातिकारेण विशेषोऽभिहित. । येषोऽध्युषवेषो दिपतोऽउपवेत्यादि- र्वी ॥ ऽअग्ने सुभगभारव ॥ ध्रुवा कर्म्मण्या ऽअनमीवनो यक्ष्मा-नुयेषः । इति मन्त्रस्य परमेष्ठी ऋषि उपवेषो देवता ब्राह्मी उष्णिक् छन्द उपवेषकरणे विनियोग. । इति वक्ष्यः ॥

वसोर्वायव्यं ॥

वसो पवित्रमसीत्येतद्यजुर्वायव्यं वायुर्देवतं दैवीजगती यजुरप्येकाक्षरा । मत्ताक्षरत्वात् । शाखायां पवित्रबन्धने विनियोगः ॥

द्यौर्मातरिश्वनऽउखा ।

द्यौरसि मातरिश्वनस्त्वनयोरुखा देवता । द्यौरिति दैवीजगतीकृष्णाक्षरा । सप्ताक्षरत्वात् । स्थाल्यादाने विनियोगः । मातरिश्वनइति द्वाविंशत्यक्षरत्वात्पार्थ्यनुष्टुप्प्राजापत्या जगती वा स्थाल्यधिश्रयणे विनियोग ॥

वसोर्वायव्यम् ॥ (१)

द्वितीय वसोः पवित्रमिति वायव्य वायुरस्य देवता प्राजापत्या पंक्तिर्वा साम्नजगती वा ऋचामनुष्टुब्वा । चतुर्विंशदक्षरत्वात् । उखा याउपरि पवित्रस्य निधाने विनियोगः ॥

देवस्त्वा पयः ॥

देवस्त्वा सवितेत्यस्य यजुष पयो देवता साम्नत्रिष्टुप् द्वाविंशत्यक्षरत्वात् । दोग्ध्र्याउखायामासिच्यमाने पयसि जपे विनियोग ॥

कामधुक्षः प्रश्नः ॥

कामधुक्षइत्यस्य यजुषः प्रश्नो देवता दैवी बृहतीछन्द । चतुरक्षरत्वात् गोनामप्रश्ने विनियोग ।

सा विश्वायुस्त्रीणि गव्यानि ॥

सा विश्वायुरित्यादीनि त्रीणि यजूंषि गव्यानि । एषां गोर्देवतेत्यर्थः । आद्यस्य दैवीबृहती चतुरक्षरत्वात् उत्तरयोर्दैवीपङ्क्तिः पञ्चाक्षरत्वात् गोराख्यादाने विनियोगः ।

(१) द्वितीय कण्डिका खण्डपञ्चकरूपपाठ. कात्यायनसर्वानुक्रमे नास्त्यत बोध्य. ॥

इन्द्रस्यैन्द्रम् ।

इन्द्रस्य त्वा भागोसीत्येतदैन्द्रं इन्द्रदैवतं द्वादशाक्षरत्वात् । प्राजापत्योष्णिक्सामगायत्री वा यजुर्जगती वा आसुरी बृहती वा आतञ्चने विनियोगः ॥

विष्णो पयः ॥ २ ॥

विष्णो हव्यं रक्षस्व पयो देवता । दैवीत्रिष्टप्यजुर्गायत्री वा षडक्षरत्वात् ।(१) अविधाने विनियोगः ॥ २ ॥

अग्नऽइदमाग्नेये ॥

अग्ने व्रतपते इदमहमित्येते यजुषी आग्नेयौ अनयोरग्निर्देवतेत्यर्थः । प्रथमा स्वगुष्णिक् एकविंशत्यक्षरत्वात् ॥ द्वितीया प्राजापत्योष्णिक् सामगायत्री वा । आसुरी बृहती वा प्राजापत्योष्णिग्वा । द्वादशाक्षरत्वात् । व्रतग्रहणे पर्यायेण विनियोगः ।

कस्त्वा प्राजापत्यम् ।

कस्त्वेत्येतत्प्रजापतिदेवतं । साम्नी त्रिष्टुप्द्वाविंशत्यक्षरत्वात् । प्रणीतानामाहवनीयस्योत्तरतो निधाने विनियोगः ।

कर्म्मणे स्रुक्शूर्पम् ।

कर्मणे वामित्य स्रुक्शूर्पं देवता स्रुक्च शूर्पंच स्रुक्शूर्पे इहैकवद्भावे निर्देशः । अष्टाक्षरत्वात् । प्राजापत्यागायत्री यजुरनुष्टुब्वा । शूर्पाग्निहोत्रहवण्योरादाने विनियोगः ॥

प्रत्युष्टं द्वे राक्षसे ।

प्रत्युष्टं निष्टप्तमिति द्वे यजुषी राक्षसे । अनयोरक्षो देवतेत्यर्थः । द्वादशाक्षरत्वात् सामगायत्री । यजुर्जगती वा आसुरी बृहती वा । प्राजापत्योष्णिग्वा शूर्पाग्निहोत्रहवण्योः प्रतपने विनियोगः । अग-

(१) अभिधाने इति पद्धतिपुस्तकपाठः ॥

यीरुचारणानन्तरं चर्या सर्वैः कार्यः राक्षसमन्त्रत्वात् ॥

उरु बह्म रक्षोघ्नं सर्वेन ।

उर्वन्तरिक्षमन्वेमीत्यितच-

तुर्वेद्म रक्षोघ्नं । एतेन यजुषा ब्रह्मरक्षसोः हननं क्रियतइत्यर्थः । न केवलमत्र किं तु सर्वमेतद्यजुरित्येव विधमेवेत्यर्थः । लिङ्गादन्तरिक्षं देवता । अथ वा अयमर्थः । उर्वन्तरिक्षमित्यस्य रक्षोघ्नं ब्रह्मदेवतेति एवं काण्वसंहिताभाष्ये व्याख्यातमस्ति । प्राजापत्या गायत्री यजुरनुष्टुब्वा । अष्टाक्षरत्वात् । अनः प्रतिगमने विनियोगः

धूरसि धूः ।

धूरसीत्यस्य धूर्देवता । चतुर्विंशत्यक्षरत्वात् । प्राजापत्या पंक्तिर्वा । साम्नजगती वा । परचामनुष्टुब्वा । युगधुरोऽभिमर्शने विनियोग ।

देवानां विष्णुस्त्वा नः ।

देवानामसि विष्णुस्त्वा क्रमतामित्यनयोरनो देवता । देवानामिति ब्राह्मी अनुष्टुप् अष्टाचत्वारिंशदक्षरत्वात् । ईषाभिमर्शने विनियोगः । विष्णुस्त्वा दैवी त्रिष्टुप् । यजुर्गायत्री वा । षडक्षरत्वात । अनसमारोहणे विनियोगः । पात्नीमी हविर्ग्रहणपक्षे धूरसि देवानां विष्णुस्त्वेतीया पात्नीविले जपे विनियोग: ॥

उरु हविष्या: ॥

उरुवातायेत्यस्य यजुषो हविषा व्रीहियवादयो देवता: दैवीपंक्तिः पञ्चाक्षरत्वात् । हविःप्रेक्षणे विनियोग ।

अपहतꣳ० रक्षः ।

अपहतमित्यस्य रक्षोदेवता दैवीत्रिष्टुप् यजुर्गायत्री वा । षडक्षरत्वात् । अपद्रव्यनिरसने तदभावे हविरभिमर्शने वा विनियोगः ।

राक्षसत्वादृषां सर्गः ॥

यच्छन्ताए हविष्याः ।

यच्छन्तां पञ्चेत्यस्य हविष्या देवता । पञ्चाक्षरत्वाद्दैवीपंक्तिश्छंदः । हविरालम्भने विनियोगः । ·

देवस्य त्वा सावित्रम्० ।

देवस्य त्वा सवितुरित्येतत्सावित्रं सवितृदेवतं ॥ न केवलमत्र । किंतु सर्वत्र देवस्त्वेत्येतत्सवितृदेवत्यमेव। प्राजापत्याबृहती साम्पंक्तिर्वा विंशत्यक्षरत्वात् । अत्र हविर्ग्रहणे विनियोगः ॥

अग्नये लिंगोक्ते।

अग्नये जुष्टमग्नीषोमाभ्यां जुष्टमित्यनयोर्लिंगेनैवाग्निरग्नीषोमौ च यथाक्रमं देवते उक्ते,अग्नये प्राजापत्या गायत्री याजुषी अनुष्टुब्वा । अष्टाक्षरत्वात् । अग्निषोमाभ्यां आसुरीत्रिष्टुप् । याजुषी पंक्तिर्वा । द्वयोर्हविर्निर्वापे विनियोगः ॥

भूताय त्वा हविः

भूतायत्वेत्यस्य हविर्देवता । अष्टाक्षरत्वात्प्राजापत्या गायत्रीछंदः यजुषीअनुष्टुब्वा । शेषाभिमर्शने विनियोगः ॥

स्वः सूर्यः

स्वरभित्यस्य सूर्यो देवता । षडक्षरत्वाद्दैवीत्रिष्टुप् यजुर्गायत्री वा प्राचीक्षणे विनियोगः ॥

दृऌ० हन्तां गृहाः ।

दृऌ०हन्तान्दुर्यादित्यस्य गृहा देवता नवाक्षरत्वादासुरी जगती । यजुर्बृहती वा छंदः अनसोहविर्ग्रहणपदे अनसोऽवरोहणे विनियोगः । पात्रीतो ग्रहणपदे तूष्णीं ॥

पृथिव्यास्त्वा हव्यम् ।

पृथिव्यास्त्वेत्यस्य हव्यं देवता प्राजापत्या बृहती साम्नपंक्तिर्वा छंदः । विंशत्यक्षरत्वात् । यपपस्य पयाद्धविःसादने विनियोगः ॥

पवित्रे लिंगोक्तं ।

पवित्रे स्थ इत्यस्य यजुषो लिंगेनैव पवित्रे दैवतमुक्तं । सप्ताक्षरत्वाद्दैवी गायत्री यजुरुष्णिग्वा पवित्रच्छेदने विनियोगः ।

सवितुर्दैवीः प्रोक्षिताश्चापानि ।

सवितुर्व. देवीरापः । प्रोक्षितास्थेत्येतानि त्रीणि यजूंष्यापानि एतमापो देवता इत्यर्थः । सवितुर्वः प्राजापत्या पङ्क्तिः साम्नजगती वा । स्त्रयामनुष्टुब्वा । चतुर्विंशत्यक्षरत्वात् प्रोक्षण्युत्पवने विनियोगः । देवीरापअष्टाविंशदक्षरत्वाद्द्वाभ्यां न्यूना आर्षी पङ्क्तिः । उद्दिङ्गने विनियोगः । प्रोक्षिता दैवीबृहती चतुरक्षरत्वात् । प्रोक्षणीनाम् प्रोक्षणे विनियोगः ।

अग्नये लिङ्गोक्ते ।

अग्नये त्वाऽग्नीषोमाभ्यां त्वेत्यनयोर्लिङ्गेनैवाग्नीरग्नीषोमौ च तानीय देवते उक्ते । अग्नये त्वा आसुरीजगती । यजुर्बृहती वा । नवाक्षरत्वात् । हविःप्रोक्षणे विनियोगः ।

अग्नीषोमाभ्यांत्वा ।

एकादशाक्षरत्वादासुरीपङ्क्ति । याजुषी त्रिष्टुब्वा हविःप्रोक्षणे विनियोगः ॥

दैव्याय पात्राणि

दैव्याय कर्मण इत्यस्य पात्राणि देवताः, अष्टाविंशदक्षरत्वात् प्राजापत्यात्रिष्टुप् पात्रप्रोक्षणे विनियोगः ॥ १ ॥

शर्मास्यदित्याः कृष्णाजिनम् ।

---

(१) इद सूत्रखण्ड कात्यायनसर्वानुक्रमे नास्ति पाठ. ॥

\

शर्मासि अदित्यास्त्वगित्यनयो कृष्णाजिनं देवता । शर्मदेव्यनुष्टुप्चतुरक्षरत्वात् । कृष्णाजिनादाने विनियोगः. अदित्या आसुर्यनुष्टुप्चयोदशाक्षरत्वात् । कृष्णाजिनास्तरणे विनियोगः ॥

अवधूतं॰ रक्षसम् ।

अवधूतमित्यस्य रक्षोदेवता आसुर्यनुष्टुप्त्रयोदशाक्षरत्वात् । राक्षसत्वादुदकालम्भः । अवधूनने विनियोगः ॥

अद्रिर्ग्रावोलूखले

अद्रिरसि ग्रावासिद्दत्येते द्वे यजुषी उलूखले । अनयोरुलूखलम् देवता । षोडशाक्षरत्वात्प्राजापत्यानुष्टुप्सामानुष्टुब्वा उलूखलस्थापने विनियोगः ॥

अग्नेर्हविः

अग्नेस्तनूरित्यस्य हविर्देवताएकविंशत्यक्षरत्वात् । ऋगुष्णिक् हविरावपने विनियोगः ॥

बृहत्स इदम् मौसले, ।

बृहद्ग्रावाऽसि स इदम्देवेभ्यदत्येते यजुषी मौसले । मुसलदेवते । बृहत्आसुरी जगती यजुर्बृहती वा नवाक्षरत्वात् । मुसलादाने विनियोगः । सइदम् प्राजापत्यानुष्टुप्साम्नामनुष्टुब्वा मुसलावधाने विनियोगः ॥

हविष्कृदधिदैवतं वागधियज्ञं पत्नी ।

हविष्कृदेहीत्यस्याधिदैवतं दैवतेषु वा देवता । अनियतम् यज्ञविषये पत्नी देवता । पञ्चाक्षरत्वाद्दैवीपङ्क्ति. पत्न्याआग्नीध्रस्य वा आह्वाने विनियोग' ॥

कुक्कुटो वाक् ।

कुक्कुटोसीत्यस्य वाग्देवता । सप्तविंशत्यक्षरत्वादृग्बृहती दृषदुपलयोराहनने विनियोग. ॥

वर्षवृद्धमसि । शूर्पम् ।

वर्षवृद्धमित्यस्य शूर्पं देवता दैवीत्रिष्टुप्यजुर्गायत्री वा षडक्षरत्वात् शूर्पादाने विनियोगः ॥

प्रतिष्ठा हविः

प्रतिष्ठितमित्यस्य हविर्देवता आसुरीजगती यजुर्बृहती वा नवाक्षरत्वात् । हविरुद्वपने विनियोगः ॥

परापूतमपहतᳪ᳭ राक्षसे

परापूतᳪ᳭ रक्षोऽपहतᳪ᳭ रक्षइत्येते यजुषी राक्षसे रक्षोदैवते प्रथमा साम्नीउष्णिक् आसुरी त्रिष्टुब्वा चतुर्दशाक्षरत्वात् । निष्पवने विनियोगः । अपहतम् षडक्षरत्वाद्यजुर्गायत्री दैवीत्रिष्टुब्वा तुषनिरसने विनियोग । राक्षसत्वादुदकालम्भने ॥

वायुर्वो देवो वस्सवृत्ताः ।

वायुर्वो विविनक्तु॥ देवो व सविता इत्यनयोस्तन्त्वा देवता । वायुर्वः । दैवी जगती यजुरुष्णिग्वा सप्ताक्षरत्वात् । विवेचने विनियोगः । देवो व साम्नित्रिष्टुप् द्वाविंशत्यक्षरत्वात् । अभिमन्त्रणे विनियोग ॥

धृष्टिरसीत्युपवेष. ।

धृष्टिरसीत्यस्योपवेषो देवतादैवी बृहती चतुरक्षरत्वात् उपवेषादाने विनियोगः ॥

अपाग्नेऽग्निमामादं जहि निष्क्रव्याद्ᳪ᳭ सेध आदेवयजं वह ।

अपाग्ने इत्येतं आदेवयजमित्येते यजुषी अग्निदैवते । अपाग्ने प्राजापत्यानुष्टुप् । साम्नानुष्टुब्वा । अङ्गाराणाम् प्राकरणे विनियोग । आदेवयजं दैवी जगती यजुरुष्णिग्वा । सप्ताक्षरत्वात् । अङ्गाराहरणे विनियोगः ॥

ध्रुवमसि पञ्चाम् कपालानि ।

ध्रुवमसि; धरुणमसि । धर्त्रमसि विश्वाभ्यस्त्वा । चितस्थ । भृगूणामित्येतेषाम् पञ्चाम् यजुषाम् कपालानि देवता । आद्यानाम् पञ्चानाम् कपालोपधाने विनियोगः । भृगूणामित्यस्याङ्गारैरभ्यूहने । ध्रुवमसि ऋक् चतुर् । एकाधिका चतुस्त्रिंशदक्षरत्वात् । धरुणमसि ब्राह्मी गायत्री ऋग्जगती वा षट्त्रिंशदक्षरत्वात्, धर्त्रमसि । ऋचाम्निष्टुप्त्रयस्त्रिंशदक्षरत्वात्, विश्वाभ्यस्त्वा याजुषीत्रिष्टुप् ऽआसुरी पङ्क्तिर्वा । एकादशाक्षरत्वात । चितस्थ दैवीत्रिष्टुप्यजुर्गायत्री वा षडक्षरत्वात् । भृगूणाम् । आसुर्यनुष्टुप् नवी दशाक्षरत्वात् ॥

अग्ने ब्रह्मग्निदम् ।

अग्ने ब्रह्मग्टभ्णीष्वेत्येतदग्निदेवतम् । मध्यमकपालस्योपर्यङ्गाराभिधाने विनियुक्तम् । दैवीजगती याजुषी उष्णिग्वा । सप्ताक्षरत्वात् ॥

धिषणाऽसि दार्षदम् ।

धिषणासीत्येतद्दृषद्देवतम् । कृष्णाजिनस्योपरि दृषदउपधाने विनियुक्तम । आसुरी गायत्री पञ्चदशाक्षरत्वात् । अथ धर्मासि अवधूतम् अदित्यास्त्वगित्येतेषाम् सर्वं प्रागुक्तमिति । पुनर्नोक्तम् ॥

दिवः शम्या ।

दिवस्कम्भनीरित्यस्य शम्यादेवता दृषदोऽधस्ताच्छम्योपोहने विनियोगः । दैवी जगती यजुरुष्णिग्वा सप्ताक्षरत्वात् ।

धिषणोपलम् ।

धिषणाऽसि पार्वतेयीत्येतद्यजुरोपलं । उपलदेवतं । उपल निधाने विनियुक्तं प्राजापत्यानुष्टुप् । साम्नानुष्टुप् षोडशाक्षरत्वात् ।

धान्यमसि पशाद्ठं॰ हविः ।

धान्यमसि । प्राणाय । उदानाय । व्यानाय । दीर्घामनु । चक्षुषे त्वा इत्येतेषां सप्तानां यजुषां हविर्देवता धान्यमसि आसुरीजगती यजुर्बृहती वा । नवाक्षरत्वात् । प्राणाय दैवी बृहती चतुरक्षरत्वात्, उदानाय दैवीपङ्क्तिः पञ्चाक्षरत्वात्, व्यानाय दैवीबृहती चतुरक्षरत्वात् । दीर्घामनु त्रिष्टुप् । त्रयस्त्रिंशदक्षरत्वात् । चक्षुषे त्वेति दैवीबृहती चतुरक्षरत्वात् । धान्यमसीत्यस्य तण्डुलावापे विनियोगः । प्राणायेत्यादित्रयाणां पेषणे । दीर्घामित्यस्य प्रोक्षणे । चक्षुषे त्वेत्यवेक्षणे ।

महीनामाज्यम् ।

महीनां पयोऽसीत्यस्याज्यं देवता । यजुर्गायत्री दैवीत्रिष्टुब्वा षडक्षरत्वात् । आज्यनिर्वापे विनियोगः ॥ ४ ॥(१)

सँव्वपामि हविः ।

सव्वपामीत्यस्य हविर्देवता । दैवीबृहती चतुरक्षरत्वात् । पात्र्यां संवापे विनियोगः । देवस्य त्वेत्यस्य प्रागुक्तम् ।

समापऽश्रापम् ।

समापऽओषधीभिरित्येतद्यजुरापं । आपोऽस्य देवता इत्यर्थः । एकोनाप्रार्षीपङ्क्तिः एकोनचत्वारिंशदक्षरत्वात् । उपसर्जनीप्रतिपदे विनियोगः ।

जनयत्यै त्वेदठं॰ हविः

जनयत्यै त्वा । इदमग्ने रिदं अग्नीषोमयो रित्येतेषां त्रयाणां हविर्देवता । जनयत्यै त्वा । प्राजापत्या गायत्री याजुषीत्रनुष्टुब्वा अष्टाक्षरत्वात् । संयवने विनियोगः । इदमग्नेः, दैवीबृहती चतुरक्षर-

(१) वेदोऽसि वेदयठं॰ इति कात्यायनसर्वानुक्रमात्.॥

त्वात्। इदमग्नीषोमयोरिति दैवीजगती यजुरुष्णिग्वा सप्ताक्षरत्वात्। उभयो वैभज्यालभने विनियोगः[1]।

इषे त्वाऽऽज्यम् ।

इषे त्वेत्यस्याज्यम् देवता। दैव्यनुष्टुप्त्र्यक्षरत्वात् आज्याभिमर्षणे विनियोगः ॥

घर्मोऽसि पर्थ्यां पुरो डाशः । (१)

घर्मोऽसि विश्वायु, उरु प्रथाः। अग्निष्टे। देवस्त्वा। मा भेः। अनतमेरु, इत्येषाम् पञ्चानाम् पुरोडाशो देवता। घर्मोसि यजुर्गायत्री। दैवी त्रिष्टुब्वा। षडक्षरत्वात्। पुरोडाशाभिमर्षणे विनियोगः। उरुप्रथा। साम्नीबृहती ऋग्गायत्री वा अष्टाक्षरत्वात्। प्रथने विनियोगः। अग्निष्टे। प्राजापत्या गायत्री। यजुरनुष्टुब्वा अष्टाक्षरत्वात्। अद्भिरभिमर्शने विनियोगः। देवस्त्वा। प्राजापत्यानुष्टुप्। सामानुष्टुब्वा। षोडशाक्षरत्वात् श्रपणे विनियोगः, मा भेः यजुर्गायत्री दैवी त्रिष्टुब्वा। षडक्षरत्वात् आलभने विनियोगः। अनतमेरः। सामबृहती गायत्री अष्टादशाक्षरत्वात् शृताभिवासने विनियोगः॥

त्रिताय त्वयाणाम् त्रितो द्वितऽएकतः क्रमेण ।

त्रितो द्वित एकतः। क्रमेण। त्रिताय त्वेत्यादीनाम् त्रयाणाम् यजुषां क्रमेण त्रितो द्वित एकतः त्रयाणाम् देवता। त्रिताय त्वेत्यस्य त्रित, द्विताय्रेत्यस्य द्वित, एकतायेत्यस्यैकतः। आद्ययोर्दैवीबृहती चतुरक्षरत्वात्। एकताय दैवी पङ्क्तिः पञ्चाक्षरत्वात्। अग्रामयोदकनिनयने विनियोगः॥

आददऽइन्द्रस्य रम्यः ।

---

(१) अन्तरिक्षर्ठ०राक्षसम्। इति कराबशालीयसर्वानुक्रमगाठः॥ अन्तरिक्षमित्यस्य परमेष्ठी ऋषीरक्षो देवताऽऽसुर्यनुष्टुप्छन्दः पर्यग्निकरणे विनियोग.॥

आददेऽध्वरकृतम्, इन्द्रस्य बाहुरसीत्यनयोः स्फ्यो देवता । आद्य-
स्य दशाक्षरत्वादासुरीत्रिष्टुप् । यजु पङ्क्तिर्वा स्फ्यादाने विनियो-
गः, इन्द्रस्य प्राजापत्या जगती धार्यो यजुष्ट्वा जपे विनियोगः ॥

पृथिवि वेदिः । (१)

पृथिवि देवयजनीत्यस्य वेदिर्देवता । साम्नी बृहती ऋग्गायत्री वा ।
जन्योपदध्यादित्यत्र यण्व्यूहेनाष्टादशाक्षरत्वात् । प्रहरणे विनियोगः ।

व्रजम् पुरीषम् ।

व्रजङ्गच्छेत्यस्य पुरीषन्देवता । दैवी जगती यजुरुष्णिग्वा । सप्ता-
क्षरत्वात् । पुरीषादाने विनियोगः ॥

वर्षतु वेदिः ।

वर्षतु ते इत्यस्य वेदिर्देवता । दैवी पङ्क्तिः पञ्चाक्षरत्वात् । वेदि-
प्रोक्षणे विनियोगः ॥

बधान सावित्रम् ।

बधान देव सवितरित्येतद्यजु सावित्रम् । सविताऽस्य देवता इ-
त्यर्थः, ऋग्जगती वा । ब्राह्मी गायत्री वा । योऽस्मानित्यत्रैकादशपू-
र्वरूपव्यूहेन षट्त्रिंशदक्षरपूरणात् । (२) पुरीषस्योत्करे प्रक्षेपे विनि-
योगः ॥

अपाररुमररोऽआसुरे ।

अपाररुम् । अररो दिवमिति द्वे यजुषी आसुरे अनयोरररो
देवता । अतऽइदकालभः, अपाररुम् आसुरीगायत्री पञ्चदशाक्षर

(१) पृथिव्यै पृथिवि वेदिरिति काण्वशाखीयसर्वानुक्रमपाठः । पृथिव्यै वर्मासी-
त्यस्य परमेष्ठी ऋषिस्तृणम् देवता दैवी त्रिष्टुप्तृणनिधाने विनियोगः ॥ पृथिव्यै व-
र्मोऽसि पृथिवि देवयजनि ।

(२) पुरीषस्योत्करे इति 'क,, पुस्तकपाठः ॥

त्वात्। अरत्नी प्राजापत्या गायत्री यजुरनुष्टुब्वा । अष्टाक्षरत्वात्। प्रथमस्य प्रहरणे (१) विनियोगः। द्वितीयस्योत्काराभिन्यासे विनियोग॥

द्रप्सस्ते वेदिः

द्रप्सस्ते द्यामित्यस्य वेदिर्देवता । दैवी त्रीष्टुप् यजुर्गायत्री वा षडक्षरत्वात् तृतीयप्रहरणे विनियोगः॥

गायत्रेण त्रीणि वैष्णवानि ।

गायत्रेण त्वा, त्रैष्टुभेन त्वा, जागतेन त्वेत्येतानि त्रीणि यजूंषि वैष्णवानि विष्णुदेवतानि पूर्वपरिग्रहे विनियुक्तानि । त्रयाणामपि त्रयोदशाक्षरत्वादासुर्यनुष्टुप्छन्दः ॥

सुक्ष्मा त्रयाणाम् वेदिः

सुक्ष्मा चासि । स्योना चासि । ऊर्ज्जस्वती चेत्येषाम् त्रयाणाम् वेदिर्देवता । उत्तरपरिग्रहे विनियोग. । सुक्ष्मा प्राजापत्यागायत्री यजुरनुष्टुब्वा अष्टाक्षरत्वात् स्योना नवाक्षरत्वादासुरीजगती यजुर्बृहती वा । ऊर्ज्जस्वती एकादशाक्षरत्वात् । यजुस्त्रिष्टुप् आसुरी पङ्क्तिर्वा ॥

पुराऽक्रूरं०सोऽमस्यश्चान्द्रमसीं त्रिष्टुभम् ।

पुराक्रूरस्येत्येतामृचम् चान्द्रमसम् चन्द्रमो देवताम् त्रिष्टुपछन्दस्काम्, अथर्वसञ्ज्ञमृषिरपश्यत् । दृष्टवान् । अनुमार्जने . चास्या विनियोगः, यस्याएकादशाक्षरश्चत्वारः पादाः सा चतुश्चत्वारिंशदक्षरा त्रिष्टुप्शब्देनोच्यते, अथान्त्यः पादो द्वादशाक्षरस्तेनैकाक्षराधिका: ॥

प्रोक्षणीः प्रैषः ।

प्रोक्षणीरासादयेत्ययम् प्रैषः । तस्य सम्प्रैष्यत्वात् । एवम् स-

(१) प्रहारे इति 'ख, पुस्तकपाठश्च ।।

वर्षं पाणाम् प्रेयम् । यजुष् प्राकृदैवी जगती वा छन्द.सप्ताक्षरत्वा-
त् । प्रयोगेऽपणे विनियोगः ॥

## द्विषतऽआभिचारिकम् ।

दिषतो वधोसीत्येतद्यजुराभिचारिकम् । अभिचारसाधकमि-
त्यर्थः । लिङ्गादस्य स्फयो देवता । कर्मणा शत्रोः पीडनमभिचारः
सप्रयोजनमस्य तदाभिचारिकम् ।"प्रयोजनमिति ठक्" । यदा चाभि-
चारबुध्या द्विषतइत्यस्य स्थाने यद्नाम गृह्यते तदा तस्योच्चारणान-
न्तरमुदकासर्गः कर्तव्यो, न परथा । इयम् दैवीत्रिष्टुप् यजुर्गायत्री
वा । षडक्षरत्वात् । स्फयस्योत्करे प्रक्षेपे विनियोगः ॥ (१)

## अनिशित स्रुवः ॥

अनिशितोऽसीत्यस्य स्रुवोदेवता स्रुवसम्मार्जने विनियोगः । प्रा-
जापत्या बृहती सामपङ्क्तिर्वा विंशत्यक्षरत्वात् ॥

## अनिशिताः स्रुचः ।

अनिशिताऽसीत्यस्य स्रुग्देवता प्राजापत्या बृहती सामपङ्क्तिर्वा
विंशत्यक्षरत्वात स्रुक्संमार्जने विनियोगः ।

## अदित्यै विष्णोर्योक्त्रम् ।

अदित्यै रास्ना, विष्णोर्वेष्पइत्यनयोर्योक्त्रम् देवता, अदित्यै दैवीत्रि-
ष्टुप् यजुर्गायत्री वा षडक्षरत्वात् । योक्त्रपरिहरणे विनियोगः । वि-
ष्णो. । दैवीपङ्क्तिः । पञ्चाक्षरत्वात् । ऊर्ध्वमृद्गूहने विनियोगः ।

## ऊर्ज्जे वयाणामाज्यम्

ऊर्जे त्वा, अदब्धेन, त्वा स.वितुस्त्वा,इत्येतेषाम् त्रयाणाम् यजुषा-
माज्यम् देवता । ऊर्जे त्वा दैव्युष्टुप् । त्र्यक्षरत्वात् आज्यासादने-

(१) प्रत्युष्ट निष्टप्तमरातयइत्यनयोः परमेष्ठी देवता रक्षो देवता सामगायत्री छन्द.
प्रतपने विनियोग. ।। इति पद्धत्या पाठ. ।।

विनियोगः, अदब्धेनेति एकाक्षराधिकात्रक त्रिष्टुप् गाय वा चैमसं-
योगैकाक्षरीभावव्यूहेन षट्त्रिंशदक्षरा ब्राह्मी गायत्री वा जगत्
गती वा आर्षी बृहती वा । आज्यावेक्षणे विनियोगः ॥

## सवितुराप्यम् ।

सवितुर्वइत्येतद्यजुराप्यम् । अस्यापो देवता इत्यर्थः । छन्दस्तु प्रा
जापत्यादिपूर्वोक्तम् चतुर्विंशत्यक्षरत्वात् । (१) प्रोक्षणोत्पवने वि
नियोगः ॥

## तेजोऽसि धामाज्यम् ॥५॥(२)

तेजोऽसि, धाम नामासीत्येतयोराज्यम् देवता । तेजोऽसि यजु-
स्त्रिष्टुबासुरी पङ्क्तिर्वा । एकादशाक्षरत्वात् । आज्यावेक्षणे वि
नियोगः । धाम नाम एकविंशत्यक्षरा ऋगुष्णिक् आज्यग्रहणे विनि-
योगः ॥

## कृष्णोऽसीध्मः ।

कृष्णोऽसीत्यस्येध्मो देवता चतुर्दशाक्षरा आसुर्युष्णिक्साम्नी वा
स्वा । इध्मोक्षणे विनियोगः ॥

## वेदिर्बर्हिर्लिङ्गोक्ते ।

(१) आज्योत्पवने इति पाठान्तरम् । सवितुरित्यापो दे० प्राजा प०मो० ॥

(२) अत्र काण्वीयसर्वानुक्रमे यस्ते प्राणश्च त्रिष्टुप् प्रथमा कण्डिका ॥ यस्ते प्राण-
पशुषु प्रविष्टो देवानां विष्टामनु यो वितस्थे ॥ आत्मन्वान्त्सोम घृतवान् हि भूत्वाऽऽग-
न्त स्वर्यजमानाय विन्द ॥ इति शुक्लयजुः काण्वशाखीयसंहितायां दशानुवाके पञ्चाश-
त्कण्डिका ॥ यथा माध्यन्दिन्यां शाखायां संहितायां अनुवाकसूत्रमात्र मुद्रितं, प-
रन्तु काण्वशाखीयसंहितायां अनुवाकक्रमसूत्राणि सर्वाध्यायशेषे लिख्यन्ते । इ-
षे त्वा तिस्रो धौरसि चतस्रोऽग्नेस्तनूरसि पवित्रे द्वाभ्यां चतस्रः शर्मासि सप्त धूरसि
चतस्रः शर्मासि पुरा पञ्च देवस्य त्वा चतस्रः देवस्य त्वा पुरा षट् प्रत्युष्टं०र
क्षः पञ्च प्रथमं, दश, पञ्चाशत् ॥१।१०।५०॥ इत्यनुवाक ॥

वेदिरसीत्यस्य वेदिर्देवता । बर्हिरसीत्यस्य बर्हिर्देवता लिङ्गे-क्तोक्तौ वेदिरसि चर्यादशाक्षरा आसुर्यनुष्टुप्वेदिर्मार्जने विनियुक्ता । बर्हिरसि बर्हिर्मोक्षणे विनियोगः ॥

अदित्यास्नापम् ।

अदित्यै व्युन्दनमसीत्येतद्यजुरापम् । आपोऽस्य देवताः । अष्टाक्षरा यजुरनुष्टुप्प्राजापत्या गायत्री वा मूलोपसेचने विनियोगः ॥

विष्णोः प्रास्तरम् ।

विष्णोः स्तुपऽइत्येतत्प्रास्तरम् । प्रस्तरदेवतम् । प्रस्तरग्रहणे विनियुक्तम् । पञ्चाक्षरा दैवी पङ्क्तिः ॥

ऊर्णम्रदसं वेदिः ।

ऊर्णम्रदसमित्येतस्य वेदिर्देवता । पञ्चदशाक्षरा आसुरी गायत्री वेदिस्तरणे विनियोग ॥

भुवपतये त्रीण्याग्नेयानि । (१)

भुवपतये स्वाहेत्यादीनि त्रीणि यजूंष्याग्नेयानि । एषामग्निर्देवता । आद्यस्य दैवीजगती यजुरुष्णिग्वा सप्ताक्षरत्वात् । अन्त्ययोरष्टाक्षरा यजुरनुष्टुप् । प्राजापत्या गायत्री वा करस्याभिमर्शने सर्वेषां विनियोगः ॥

गन्धर्वस्त्रयाणाम् परिधयः

गन्धर्वस्त्वा । इन्द्रस्य बाहु,र्मित्रावरुणौ त्वेति त्रयाणाम यजुषाम् परिधयो देवता । आद्या सवर्णदीर्घयणादेशव्यूहने षड्विंशदक्षरा ब्राह्मी जगती ब्राह्मी गायत्री वा । द्वितीया यणादेशव्यूहने द्वात्रिंशदक्षरा ब्राह्मी उष्णिक् । त्रयाणाम् परिधिपरिधाने विनियो

(१) भुवपतये इति काण्वपाठः ॥

गः ॥ ।

## वीतिहोत्रम् विश्वावसुराग्नेयीं गायत्रीम् ।

वीतिहोत्रम् त्वेत्येतामृचमाग्नेयीमग्निदेवताम् गायत्रीछन्दस्काम् विश्वावसुऋषिरपश्यत् । यस्याः अष्टाक्षराः त्रय पादाः सा चतुर्विंशत्यक्षरा गायत्री शब्देनोच्यते । अत्र प्रथमपादे त्वाशब्दे तु वा इति व्यूहेनाष्टाक्षरपूरणम् । समिदाधाने विनियोगः ॥ । १

## समिदाग्नेयम् ।

समिदसीत्येतद्यजुराग्नेयम् । अग्निरस्य देवता । चतुरक्षरा दैवीबृहती समिदाधाने विनियोगः ॥

## सूर्यस्त्वा लिङ्गोक्तम् ।

सूर्यस्त्वेत्येतल्लिङ्गोक्तम् देवतम् । आहवनीयाग्निर्देवतमित्यर्थः । पञ्चदशाक्षरासुरी गायत्री आहवनीयप्रोक्षमाणस्याध्वर्योर्जपे विनियोगः ॥

## सवितुर्विष्टती ।

सवितुर्बाहूस्थइत्यस्य विष्टतिर्देवता । यजुर्गायत्री । विष्टत्योस्तरणे विनियोगः ॥

## ऊर्णम्रदसमास्त्वा प्रास्तरे

ऊर्णम्रदसं । त्वास्तृणामीति प्रास्तरे प्रस्तरदेवते ऊर्णम्रदसम् पञ्चदशाक्षरा आसुरी गायत्री । प्रस्तरस्तरणे विनियोगः । आ त्वा त्रयोदशाक्षरा आसुर्यनुष्टुप् । प्रस्तरा भिध्याने विनियोगः ॥

## घृताच्यसि त्रयाणाम् जुहूपभृद्ध्रुवाः क्रमेण ।

घृताच्यसि जुहूरित्यादित्रयाणाम् यजुषां क्रमेण जुहूपभृद्ध्रुवाः देवता । घृताच्यसि जुहूरित्यस्य जुहूर्देवता जुह्वासादने विनियोगः । घृताच्यस्युपभृदित्यस्योपभृद्देवता उपभृदासादने विनियो-

गः । ध्रुवा नामित्यस्य ध्रुवादेवता ध्रुवासादने विनियोगः । तिस्रोऽपि द्वाविंशत्यक्षराः साम्नीत्रिष्टुप् ।

प्रियेण हविः ।

प्रियेण धाम्नेत्यस्य हविर्देवता । द्वादशाक्षरा साम्नगायत्री यजुर्जगती वा आसुरी बृहती वा । प्राजापत्या[illegible]वा । आज्यपुरोडाशाद्यासादने विनियोगः ॥

ध्रुवाऽअऽसद—न्पाहि माँ वैष्णवे ।

इमे द्वे यजुषी विष्णुदेवते पञ्चविंशत्यक्षरत्वादेकाक्षराधिका प्राजापत्या पङ्क्तिर्वा साम्नजगती वा । ऋचामनुष्टुब्वा । सर्वहविरालम्भने विनियोगः । पाहि मां षडक्षरा दैवी त्रिष्टुप् । यजुर्गायत्री वा आज्यालम्भे विनियोगः ॥

अग्ने वाजजिदाग्नेयम् ।

अग्ने वाजजिदित्येतदग्निदेवतम् । एकोनविंशत्यक्षरत्वादेकाक्षराधिका साम्नबृहती । ऋग्गायत्री वा । अग्निसंमार्गे विनियोगः ।

नमो दैवम् ।

नमो देवेभ्य इत्येतद्यजुर्दैवम्, देवा देवता अस्येत्यर्थः । पञ्चाक्षरा दैवीपङ्क्तिः । अञ्जलिकरणे विनियोगः ॥

स्वधा पित्र्यम् ।

स्वधा पितृभ्य इत्यस्य पितरो देवताः पञ्चाक्षरा दैवीपङ्क्तिः अञ्जलिकरणे विनियोगः । पितृत्वादुदकस्पर्शः

सुयमे स्रुचौ ।

सुयमे मे इत्यस्य स्रुचौ देवता एकविंशत्यक्षरा आर्च्युष्णिक् । स्रुचोरादाने विनियोगः ॥

अङ्घ्रिणा वैष्णवम्।

पङ्घ्रिणा विष्णविरयेतद्यजुर्वैष्णवम्। विष्णुरस्य देवता। एकादशाक्षरा याजुषी त्रिष्टुब्वा। आसुरीपङ्क्तिर्वा दक्षिणातिक्रमणे विनियोगः॥

वसुमतीमाग्नेयम्

वसुमतीत्येतदग्निदैवतम्। एकोनविंशत्यक्षरत्वादेकाक्षराधिका साम्नीबृहती। आर्चीगायत्री वा। होमार्थे (१) ममस्थाने विनियोगः॥

हृतऽऐन्द्रम्।

हृतऽइन्द्रइत्येतद्यजुरिन्द्रदैवतम्। एकाक्षराधिका शक्वरीछन्दः। शतपञ्चाशदक्षरत्वात् उत्तराघारहोमे विनियोगः॥

संज्योतिषाऽऽज्यम्। (२)

अस्याज्यम् देवताः षडक्षरा दैवीत्रिष्टुप् यजुर्गायत्री वा। ध्रुवासमञ्जने विनियोगः॥

मयीदमाशीःप्रतिग्रहणम्।

मयीदमित्येतद्यजुराशीः प्रतिग्रहणम् आशासनमाशीः प्रमातस्य वस्तुनः प्रार्थना। आशीः प्रतिगृह्यते प्रार्थ्यते येन तदाशीः प्रतिग्रहणम्। लिङ्गोक्ता मघवा देवता अथवाऽऽशीः प्रतिग्रहणे देवता जपे वा रूपकथनस्याप्रस्तुतत्वात्। सवर्णदीर्घयणादेशयोरन्यतरव्यूहेन षड्विंशदक्षरा। ब्राह्मीगायत्री ऋग्जगती वा

उपहूता द्यावापृथिव्यम्।

---

(१) ममस्थाने इति भाष्यपाठः।

(२) अत्रामीमदन्त पितरो इति कात्यायनसूत्रक्रमपाठः॥ एतस्माने उपहूता तस्यामे मयीदमाशीस्तस्यामे अग्ने वाजजिदित्यत्र व्युत्क्रमेण पाठः॥

उपहूता पृथिवी उपहूतो द्यौरितीदं यजुर्द्वयम् व्युत्क्रमेण द्यावापृथिव्यौ अस्य देवते । द्यावापृथिव्यां प्रथमस्य पृथिवी देवता ऋग्बृहती । द्वितीययोः सामत्रिष्टुप् पृषदाज्यप्राशने अनयोर्विनियोगः ॥६॥

**ब्रह्मन्त्वं प्रतिष्ठान्तं बृहस्पतिराङ्गिरसोऽपश्यत्**

' देवस्य त्वेत्यस्य प्राशित्रप्रतिग्रहणे विनियोगः, अत्र देवस्य त्वेत्यस्य प्रागुक्तम् । प्रतिष्ठास्यामीति षडक्षरा दैवी पंक्तिः

**अग्निष्ट्वा प्राश्नितम् । (१)**

अग्नेष्ट्वेत्यस्य प्राशित्रम् देवता । षडक्षरा यजुरनुष्टुप्प्राजापत्या गायत्री वा । प्राशने विनियोगः ॥

**एतं ते वैश्वदेवम् ।**

---

(१) एतस्मात्सूत्रखण्डात्पूर्वं कात्यायनसर्वानुक्रमण्याम् "देवसवितरेतमित्यादीनि सर्वाणि यजूंषि लिङ्गोक्तदेवत्यानि बृहस्पतिर्वाणां बार्हस्पत्य निरस्तः पाप्माराक्षोऽग्निदमहम्बार्हस्पत्य मित्रस्य त्वा मैत्रम्,, । इति पाठो मन्त्रश्चाधिकः ॥ पुनरस्मादग्रे "योऽअप्सु नाभ्य प्रजापतेर्भागोऽन्वाहार्यम् ॥ ते मन्त्रा यथा देव सवितरेतं त्वां वृणते बृहस्पतिम्ब्रह्माणम् ॥ तदहम्मनसे प्रब्रवीमि ॥१॥ मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभे ॥ अनुष्टुप्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यः ॥२॥ बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम् ॥ भूर्भुवः स्वर्निरस्तः पाप्मेदमहं बृहस्पतेः सदसि सीदामि ॥३॥ मित्रस्य त्वा चक्षुषा प्रतीक्षे ॥ देवस्य० पूषदत्वारस्त्रा एतस्यामे कात्यायनीयमिदं सूत्रं "योऽअप्सु नाभ्य प्रजापतेर्भागोऽन्वाहार्यम्, ॥ देव सवितः प्रसवे ॥ ४ ॥ आददेऽग्निर्वा देवेन प्राश्नामि बृहस्पतेर्मुखेन ॥ योऽअप्स्वन्तर्देवतास्तत इदं० शमयन्तु ॥५॥ इन्द्रस्य त्वा जठरे मिन्द्रस्य गच्छ ॥ प्रसिता मे मांसम्पृक्या ऊदुर्स्येम्ने नाभे सीद ॥ ६ ॥ इन्द्रस्य त्वा जठरे सादयामि ॥ प्रजापते भागधेयो असि स्वाम्प्रपस्वान् ॥ ७ ॥ प्राणापानौ मे पाहि समानव्यानौ मे पाहि उदानव्यानौ मे पाहि ॥ ऊर्गस्यूर्जम्मयि धेह्यक्षितिरसि मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोके इह च ॥ ८ ॥ एते मन्त्राः स्वशाखातोऽधिकाः कात्यायनशाखीयाः समधिकाः सन्ति ॥

एतन्मइत्येतद्यजुर्वैश्वदेवम् विश्वे देवा अस्य देवतेत्यर्थः । नभोविरिष्ट-मित्यत्र यथा व्यूहेन चतुरशीत्यक्षरा प्रकृतिप्रसवे विनियोगः ॥

## एषा तेऽनुष्टुबाग्नेयी । (१)

एषा त इत्येषा ऋगनुष्टुबुक्ता । आग्नेयी अग्निरस्या देवतेत्यर्थः । समिदनुमन्त्रणे विनियोगः, अस्या अष्टाक्षराश्चत्वारः पादाः सा द्वात्रिंशदक्षराऽनुष्टुबित्युच्यते । अत्र तु प्रथमः । पादसप्तकः । द्वितीये दशकः, ततोऽष्टकः, ततः सप्तकइति । इयमानुष्टुप्पादानामनियताक्षरत्वात् ॥

## अग्ने वाजजिदाग्नेयम् । (२)

अग्ने व्याजजिदित्येतदाग्नेयम् । अग्निदेवतम् । एकाक्षराधिका ऋग्गायत्री वा सामबृहती वा एकोनविंशत्यक्षरत्वात् । अग्निसम्मार्जने विनियुक्तम् ॥

## अग्नीषोमयोश्चत्वारि लिङ्गोक्तानि ।

अग्नीषोमयोरुज्जितिम् । अग्नीषोमौ तमप । इन्द्राग्न्योरुज्जितिम् । इन्द्राग्नीतमपेत्येतानि चत्वारि यजूंषि लिङ्गोक्तानि । पूर्वयोर्द्वयोरग्नीषोमौ देवता । उत्तरयोर्द्वयोरिन्द्राग्निदेवतेत्यर्थः । प्रथमस्य एकादिव्यूहेन चतुर्विंशत्यक्षरत्वात् । आर्षी गायत्री द्वितीयस्यैकादशव्यूहेन द्वात्रिंशदक्षरत्वात्प्राजापत्या जगती । तृतीयस्य भुरिगुष्णिक् । एकविंशत्यक्षरत्वात् । चतुर्थस्य त्रिंशदक्षरत्वादार्षी पंक्तिश्छन्दः प्रथमतृतीययोर्जुह्वाव्यूहने विनियोग, द्वितीयचतुर्थयोरुपभृद्व्यूहने ॥

## वसुभ्यस्त्रयाणाम् परिधयः ।

वसुभ्यस्त्वा, रुद्रेभ्य, आदित्येभ्यइत्येतेषाम् त्रयाणाम् परिधयो दे-

---

(१) पुस्तकान्तरे एतन्ते वैश्वदेवानीति व्युत्क्रमेण पाठोऽस्ति ॥

(२) पुस्तकान्तरे परसूत्रमत्राऽस्ति तत्पूर्वमुक्तम् ॥

यतः परिध्यञ्जने विनियोगः ॥

**सञ्ज्ञानायाम् व्यन्तु प्रास्तरे ।**

सञ्ज्ञानायाम् व्यन्तु यदीत्यस्येते द्वे यजुषी प्रास्तरे । प्रस्तरदैवते । प्रस्तारादाने प्रस्तराञ्जने च यथाक्रमं विनियुक्ते आद्यस्य व्यूहेन विंशत्यक्षरत्वात् प्राजापत्या बृहती सामपङ्क्तिर्वा । द्वितीयस्याष्टाक्षरत्वाद्यजुरनुष्टुप् ।

**मरुतां कपिञ्जर्हतीं प्रास्तरीं । (१)**

मरुतां पृषतीरित्येतामृचम् कपिञ्जर्हिरपश्यत् । कीदृशीं बृहतीं बृहतीछन्दस्काम् । पुनः कीदृशीं प्रास्तरीं प्रस्तरदेवताम् । नीचैर्हरणे,ऽस्या विनियोगः, इयमेकाधिकाक्षरार्षी बृहती । पादानामनियताक्षरत्वात् ।

**चतुष्पाऽऽग्नेयम् ।**

**अन्त्यः पादऽग्नेय. (२)**

अन्त्ययजुः ऽन्त्ययम् पाद,आग्नेयो,ऽग्निदेवत आघारार्थे विनियुक्तः ।

**यं परिधिं (३)देवलऽआग्नेयीं, त्रिष्टुभम् विराड्रूपां यजुरन्ताम् ।**

यं परिधिमित्येतामृचम् यजुरन्ताम् देवलऋषिरपश्यत् । आग्नेयीम्ग्निदेवताम् । विराड्रूपाम् । त्रिष्टुभम् । एकादशिनस्त्रयो,ऽष्टकश्च विराड्रूपेति, विराड्रूपालक्षणम् । तेन यस्याऽएकादशाक्षरास्त्रयः

---

(२) बृहतीमित्यत्र बार्हतमिति कात्यपाठः प्रास्तरीमित्यत्रापि प्रास्तरमिति पाठश्च ॥

(१) इदं सूत्रसकलं कात्यशाखीयसर्वानुक्रमे नास्ति ॥

(३) देवलआग्नेयीमित्येव तत्र पाठ । एतत्सूत्रार्थैकादशाक्षरास्त न सन्ति कात्यशाखायामिति ॥

पादा एकोण्टाचरः सा विराड्रूपा । अत्र पादानाम् क्रमनियमो न । तेन प्रथमोऽष्टाचरः अन्यत्र यदेकादशाचरः । चतुर्थस्य न, इत्यादौ येकाचराभावव्यूहेन पूरणम् । तथा च यजुरन्ताम् । यजुरन्ते यस्याः सा यजुरन्ता ताम् यजुःपर्यन्तायाएवैव देवताएवएव च कथितेति । किं तद्यजुरित्यपेक्षायामाह ॥

अग्नेः प्रियम् (१) यजुः ।

अग्नेः प्रियम्पाथोपीतमित्येतद्यजुः । अष्टाचरत्वात् । प्राजापत्या गायत्री यजुरनुष्टुब्वा परिध्यनुप्रहरणे विनियोग उभयोः ॥

सर्ठ॰स्रवभागाः (२) सोमसूचमो वैश्वदेवी त्रिष्टुप् यजुरन्ता ।

इत्यनेन यजुषोऽप्येष एव ऋषिर्देवता चेति गम्यते किं तद्यजुरित्याकांक्षायामाह ॥

स्वाहा वाड्यजुः ।

स्वाहा वाडित्यनेन यजुःप्रत्येतव्यम् दैव्यनुष्टुप्यचरत्वात् । संस्रवे होमेऽस्या यजुःसंहितायाम् विनियोगः ॥

घृताची स्रुचौ ।

घृताचीस्थइत्यस्य स्रुचौ देवता षोडशाचरा प्राजापत्यानुष्टुप् । सामानुष्टुब्वा । अत्र पदे धुरिनिधाने । पाचीपदे स्फ्यनिधाने विनियोगः ॥

यज्ञनमः शूर्पं (३)यवमानृचपिदृशालवान्यानान्त्वी-

---

(१) प्रिय इति कात्यायनीयसर्वानुक्रमपाठः । यजुरिति पदमधिकमस्ति ॥

(२) सोमसुक्ष्म इति "स, पुस्तकपाठ । सोमशुष्म इति कात्यायपाठः ॥ वैश्वदेवामिति च, त्रिष्टुब् यजुरन्ता इति पदमस्ति ॥

(३) यज्ञमानृचीरिति कात्यायनीयसर्वानुक्रमपाठ. ॥

## निति पश्चार्षयो यज्ञो देवता ।

यज्ञ नमश्च तइत्येष मन्त्र.। पश्चार्षेय. पश्चार्षेयाणि ऋषयो य
स्यासौ पश्चार्षेयः। के ते पञ्चऋषयइत्यतआह। सूर्ये, यवमान् । ऋ-
षिः। उद्दालवान्। धामान्तर्वानित्येते । एतस्य मन्त्रस्य यज्ञो देवता
वेद्यामालम्भे विनियोगोऽस्य पञ्चविंशत्यक्षरत्वादेकाधिका आर्षी
गायत्री ॥ सामजगती वा ॥

### अग्ने दब्धायो गार्हपत्यः ।

अग्ने दब्धायोऽशीतमेत्यस्य गार्हपत्योऽग्निर्देवता । पञ्चचत्वारिंश-
दक्षरत्वादेकाधिका आर्षी त्रिष्टुप् । संस्रवहोमे विनियोग. ॥

### अग्नये दक्षिणाग्निः ।

अग्नये सर्वेशपतयइत्यस्य दक्षिणाग्निर्देवता । आसुरीपङ्क्तिः
याजुषी त्रिष्टुब्वा । एकादशाक्षरा दक्षिणाग्निहोमे विनियोगः ॥

### सरस्वत्यै लिङ्गोक्तम् ।

सरस्वत्याइत्येतल्लिङ्गोक्तम् । लिङ्गैर्योक्तदैवमित्यर्थः । दक्षिणा-
ग्निहोमे विनियुक्त । छन्दःपूर्वसूत्रोक्तम् ॥

---

(१) उलूखल इविराप्यायता ध्रैवाज्यमिति कात्यायना सर्वानुक्रमेऽधिक पाठः ॥ उलूखले मुसले इति परमेष्ठी ऋषिर्विश्वेदेवा देवता त्रिष्टुप्छन्द प्रायश्चित्तहोमे विनियोग । उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत्कपाले ॥१॥ अवप्रुषो विप्रुष संजुहोमि सत्या. सन्तु यजमानस्य कामा स्वाहा ॥ आप्यायतां ध्रुवो हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः ॥ सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञेऽअस्मिन् ॥ ३ ॥

वेदोऽसि वेदः । (१)

वेदोऽसि येन त्वमित्यस्य वेदो देवता । स्वराडुष्णिगूहेन सप्तविंशत्यक्षराऽऽर्षी बृहती (२) वेदनिर्मोके विनियोगः ॥

देवा मनसस्पतिर्वातदैवत्याम् विराजम् । (३)

देवा गातुविद इत्येतामृचम् वातदैवत्याम् विराट्छन्दस्कां मनसस्पतिरृषिरपश्यत् । द्वाभ्यामक्षराभ्यामूना विराडनुष्टुबियम् त्रिंशदक्षरा विराडिति श्रुतेः, ऋचां पङ्क्तिर्वा । पादानामक्षरनियमाभावात् । आर्षी अनुष्टुब्वा । सा च द्वाभ्यामूनत्वाद्विराडुच्यते । (४)

(५) सं बर्हिर्लिङ्गोक्ता त्रिष्टुब्विराड्रूपा ।

सं बर्हिरित्येषा ऋक् लिङ्गोक्तदेवता दिव्यम् नभोऽप्या देवता । बर्हिर्देवता वेत्यर्थः, विराड्रूपा त्रिष्टुप्छन्दोऽस्याः । त्रयः पादा एकादशाक्षराः, एकोऽष्टाक्षर इति । विराड्रूपालक्षणम् । अत्र तृतीयो दशाक्षरः । तेनैकोना बर्हिर्होमेऽस्या विनियोगः ॥

कस्त्वा प्राजापत्यम् ।

कस्त्वा विमुञ्चतीत्येतत्प्रजापतिदैवतम् । एकोनत्रिंशदक्षरत्वादेकाक्षरोना ऋचां पङ्क्तिः प्रणीताविमोचने विनियोगः ।

---

(१) इदं सूत्रखण्डं कात्यायनसर्वानुक्रमे नास्ति ॥

(२) वेदकर्मविनिर्मोके इति पञ्चस्याः पाठः ॥

(३) देवा गातुविदो मनसस्पतिर्वातदेवत्या विराजमिति कात्यायनीयपाठः ॥

(४) अनुष्टुप्त्र्यवो. सामिष्टयजुर्होमे विनियोग । इति पञ्चापरः पाठः ॥

(५) सम्बर्हिर्लिङ्गोक्तदेवत्यामिति नास्त्येव पाठश्चेति ॥

रक्षसां० राक्षसम् । (१)

रक्षसां भागोऽसीत्येतद्राक्षसं रक्षोदैवतम् । अस्योच्चारणानन्तरमपां स्पर्शः कार्यः । षडक्षरा दैवी त्रिष्टुप् यजुर्गायत्री वा कषापासने विनियोगोऽस्य ॥ ७ ॥

अथ याजमानम् ।

अथानन्तरम् याजमानस्येदम् याजमानकर्म । तत्सम्बन्धीनि ऋषिदैवतच्छन्दांसि । वक्ष्यन्त इति शेषः । अत्र याजमानपदार्थेन तन्मन्त्रा लक्ष्यन्ते ।

संवर्चसा त्वाष्ट्री त्रिष्टुप् । (२)

संवर्चसेत्येषा त्वाष्ट्री । त्वष्टास्या देवता । त्रिष्टुप्छन्दः. अत्र चतुर्थे व्यूहः । पूर्णपात्रजलप्रतिग्रहणे विनियोगः ॥

दिवि विष्णुस्त्रीणि वैष्णवानि ।

दिवि विष्णुः । अन्तरिक्षं विष्णुः, पृथिव्यां विष्णुरित्यादीनि त्रीणि वैष्णवानि विष्णुदेवतानि । प्रथमा ऋचा पङ्क्तिः । याज्ञानिति । पूर्वरूपव्यूहेन त्रिंशदक्षरत्वात् द्वितीया व्यूहेन द्वात्रिंशदक्षरा आर्ष्यनुष्टुप् प्राजापत्या जगती वा तृतीया त्रिंशदक्षरा ऋचां ,पङ्क्तिरेव

---

(१) एतस्य सत्रस्याग्रे "वेषोऽसि जुहोम्युपवेष ॥ अस्य मन्त्रस्य परमेष्ठी ऋषिरुपवेषो देवता ब्राह्मी उष्णिक्छन्दः उपवेषकरणे विनियोगः ॥ वेषोऽस्युपवेषो विष्णो मीढा ऊर्ध्वावतद्दिः ॥ वेशां ॥ २ ॥ ऽअग्ने सुमनं धारयेह ॥ १ ॥ अद्या कर्मण्या अनपायिनो यथासन् ॥ जुहोमि त्वा सुमनसोऽवनाय पुरुत्तम पुरुहूतश्रवस्यन् ॥ २ ॥ इति कात्यायनसंहिता मन्त्रद्वयाधिकपाठः ॥

(२) यत्र शूर्पे यमपानित्यादि पूर्वोक्तसूत्रमन्त्र पठितं पाठभेदेन मन्त्रोऽयं यत्र पठित उक्त ॥ शिवं मे सान्तम एतारेष्टे मे सान्तमस्य शिवे मे सान्तमस्य ॥ १ ॥ इति ॥

विश्वकर्मणि चैषाम् विनियोगः ॥

अस्माद्भागः। (१)

अस्मादन्नादित्यस्य भागो देवता व्यूहेनाष्टादशाक्षरत्वात्। सानुपङ्गस्य ऋग्गायत्री साम्नी बृहती छन्दो भागावेक्षणे विनियोगः ॥

अस्यै भूमिः।

अस्यै प्रतिष्ठाया इत्यस्य भूमिर्देवता, व्यूहने विंशत्यक्षरत्वात्। सामपङ्क्तिः प्राजापत्या बृहती वा। भूम्यवेक्षणे विनियोगः ॥

अगन्म दैवम्।

अगन्म स्वरित्येतद्यजुर्दैवो देवास्य देवता। दैवी बृहती, चतुरक्षरत्वात्। प्राचीक्षणे विनियोगः ॥

संज्योतिषाऽऽहवनीयः।

संज्योतिषेत्यस्याहवनीयो देवता। यजुर्गायत्री दैवीत्रिष्टुब्वा। षडक्षरत्वात् आहवनीयेक्षणे विनियोगः ॥

स्वयम्भू. सूर्यस्य (२) सौरे।

स्वयम्भूरसि सूर्यस्यावृतमित्येते द्वे यजुषी सौरे सूर्यदेवते। यथाक्रमं सूर्यवेक्षणे प्रदक्षिणावर्तने वा विनियुक्ते:, स्वयम्भू: एकोनविंशत्यक्षरत्वात् एकाधिका ऋग्गायत्री वा एकोना सामपङ्क्तिर्वा सूर्यस्येति नवाक्षरत्वाद्यजुर्बृहती आसुरी जगती वा ॥

अग्ने गृहपते गार्हपत्यः

अग्ने गृहपते सुगृहपतिरित्यस्य गार्हपत्यो देवता। चतुष्पञ्चाशदक्षरा ब्राह्मी बृहती गार्हपत्योपस्थाने विनियोगः ॥

---

(१) अस्मादन्नादूऽऽस्यै भूमिरगन्म इत्येतावद्धि इति क्वचित्पाठान्तर. पाठान्तर बोध्य. ॥

(२) द्वे इत्यधिक- पाठ. ॥

## सूर्यस्य सौरम् । (१)

सूर्यस्याहमित्येतत्सौरम् । छन्दः पूर्वोक्तम्, सूर्यदेवतम् । प्रदक्षिणावर्तने विनियुक्तम् ॥

## अग्नयऽइदमाग्नेये ।

अग्ने व्रतपते व्रतमचारिषम् । इदमहमित्येते यजुषी । आग्नेये । अग्निदेवते व्रतविसर्गे विनियोगः, अग्ने त्रिंशदक्षरा प्राजापत्या बृहती साम्नी पङ्क्तिर्वा । इदमहमित्यष्टाक्षरा आसुरी त्रिष्टुप् यजुःपङ्क्तिर्वा । एतावत्पर्यन्ता दर्शपूर्णमासमन्त्राः ॥ अथ पिण्डपितृयज्ञमन्त्राणाम् साधारणमृषिमाह ॥ ८ ॥

## पितृयज्ञः प्रजापतेरार्षम् ।

अथ पितृयज्ञप्रपञ्चेन तन्मन्त्रा उच्यन्ते । पितृयज्ञमन्त्राणाम् प्रजापतिऋषिरित्यर्थः ॥

## अग्नये सोमाय च द्वे स्वाहाकारप्लुतेः ।

---

(१) एतत्सूत्रस्याग्रे "उरु विष्णो वैष्णवमनुष्टुप् ततोऽसीति यजुरन्तेऽदग्ने पौर्णमास्यऽइदमाग्नेये,, अथ मन्त्रपाठभेदेन "अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासम् ॥ सुगृहपतिस्त्वं मया गृहपतिना भूयाः ॥ अस्थूरि णौ गार्हपत्यानि सन्तु शतं हिमाः ॥ निग्मेन शत्तेजसा सर्व०।अशाधि सूर्यस्यावृतमन्वावर्ते ॥ इत्यादि विराजित उरु विष्णो इति पञ्चमाध्यायस्थाभिप्रकृत्य पठितः । तदग्ने ततोऽसि तन्तुरस्यनु मा तनुहि ॥ आदिमन्त्रभेदपाठे संभृत्यायामाश्विनमन्त्राश्रमंडलोके ॥ इदमग्ने कर्मेदं शरीरमपुरोऽनुसन्तनोतु ॥ तदग्ने अग्ने व्रतपतऽइति मन्त्रो बोध्यः । उरुविष्ण इत्यस्य परमेष्ठीऋषिर्विष्णुर्देवता अनुष्टुप्छन्दः प्राग्गमने विनियोगः । ततोऽसीत्यस्य यज्ञो देवता त्रिष्टुप्छन्दः पुनरागमने विनि० ॥ अग्ने व्रत० आग्नेयं० प्राजापत्या बृहती छन्दो व्रतविसर्गे वि० ॥ इदमहं परमे० आग्नेयं० यजु पङ्क्तिश्छन्दो व्रतविसर्गे वि० ॥ इति दर्शपूर्णमासमन्त्राः समाप्ताः ॥२। तदग्ने पितृयज्ञमन्त्राणां ऋष्यादिकमुच्यते ॥

अग्नये कव्यवाहनाय, सोमाय पितृमते इति द्वे यजुषी देवे। देवदेवत्ये। कस्मात् न स्वाहाकारयुते: । अनयोर्यजुषोरन्ते स्वाहाकारश्रवणात्। स्वाहाकारश्च देवे एव हविःप्रदानार्थत्वात्, वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नम् प्रदीयते श्रुतेः। अयमेवहोमे चानयोर्विनियोगः। अग्नये। एकादशाक्षरत्वात् यजुस्त्रिष्टुप्यासुरीपङ्क्तिर्वा, सोमाय नवाक्षरा यजुर्बृहती आसुरी जगती वा।

अपहता असुराः ।

अपहता इत्येतदासुरम् असुरदैवतम्। उल्मुकहरणे विनियुक्तम्। आसुरत्वादस्योच्चारणानन्तरमपां स्पर्शः कार्यः, चतुर्दशाक्षरा साम्नी त्रिष्टुप् आसुरी त्रिष्टुप् वा।

ये रूपाणि कव्यवाहनोऽग्निस्त्रिष्टुप्।

ये रूपाणीत्यस्या ऋचः कव्यवाहनो ऽग्निर्देवता त्रिष्टुप्छन्दः अत्र चतुर्थस्य व्यूहेन पूरणम्, प्रथमो द्व्यक्षरश्च। तेनैकोना प्रजापतिश्च ऋषिः उल्मुकनिधाने विनियोगः॥

अत्र पितरो मादयध्वं पितृभ्यः ।

अत्र पितरः, अमीमदन्त, पितर इत्येते द्वे यजुषी पितृभ्ये। अनयोः पितरो देवता इत्यर्थः। इयोरप्यष्टादशाक्षरत्वात् साम्नी बृहत्यौ आर्च्युष्णिहौ वा जपे विनियोगः। अनयोरुच्चारणानन्तरमपां स्पर्शः कार्यः।

नमो वः षट्लिङ्गोक्तानि ।

नमो वः पितर इत्यादीनि यजूंषि लिङ्गोक्तानि एषाम् स्वगतलिङ्गेनैव देवतोक्ताः। तत्र परे पित्र्ये इति। परयोः पित्र्यत्वस्य पृथगुक्तत्वादिमानि पित्र्याणि न भवन्तीति प्रतीयते, न रसशोषजीवस्वधाघोरमन्युदेवतानीत्यर्थः। आद्यानाम् पञ्चानाम् नवाक्षराणां यजुर्बृहती आसुरी जगती वा। षष्ठस्य एवम् विंशत्यक्षरा ऋगु-

चिरम् यज्ञलिकरणे एषाम् विनियोगः। परे पित्र्ये ॥ष्टदाम पितर,एतद, इत्येते द्वे यजुषी पितृदेवत्ये ष्टदास षोडशाक्षरा प्राजापत्यानुष्टुप्। एतद्‌ष्टाक्षरा यजुरनुष्टुप्। प्राजापत्यगायत्री वा जपे सूचीवामने च क्रमेण विनियुक्ते॥ (१)

आधत्त पितरः गायत्री।

आधत्त पितरइतीयमृक् पित्र्या पितृदेवत्या गायत्रीछन्दस्का। अत्र तृतीयस्य व्यूहेन पूरणम्। पुत्रकामायाः पत्न्या मध्यमपिण्डप्राशनेऽस्या विनियोग॥

ऊर्जमापो विराट्।

ऊर्जं वहन्तीरितीयमृक् आपी अब्देवत्या अत्या आपो देवता विराट्छन्दः। दशकास्त्रयो विराडिति विराडनुष्टुभा। द्वितीयो नवकैकेन न्यूना। इति पितृयज्ञमन्त्राणामृष्यादिकमुक्तम्। (२) अग्न्याधेयमन्त्राणाम् साधारणमृषिमाह॥ ८॥

अग्न्याधेयम् प्रजापतेरार्षम्।

अथाग्न्याधेयप्रकरण तन्मन्त्रा उच्यन्ते। अग्न्याधेयमन्त्राणाम् सर्वेषाम् सामान्येन प्रजापतिऋषिरित्यर्थ अत्र तु ऋषिविधियोऽभिधीयते तथोभावपि ऋषी भवतः अथैव विकल्पे नैतान्युपीनाह॥

देवानामग्नेर्गन्धर्वाणाम् वा।

देवानामग्ने गन्धर्वाणाम् वा। अन्याधेयमार्षेमित्यनुवर्तते अन्याधेयमन्त्राणाम् देवा ऋषयः अग्निर्वा ऋषिः। गन्धर्वा वा ऋषयः

---

(१) कण्वशाखीयोऽनुष्टुप् तमेवमेव पाठः॥ एतदम पद्ये पितरो, एतत्सुरूपाय "उदायुषासृतदेवस्यम्,॥

(२) कृष्णोऽसि मन्त्राः वाजसनेय देवसवितरेकादशापि मयो मेदो दृष्टा योऽसौ सैन्वर्चसा दशानां कण्वशाखा‌दिनाम त्र प्रतीय सवर्षादिरिषुनुवाकस्तूक कात्यायनशालीया ग्योध्यम्॥

प्रजापतिर्वा पूर्वसूत्रोक्तइति सर्वमन्त्रेषु चत्वारो विकल्पाः ॥

समिधाग्नेत्यग्नयस्तो गायत्र्यः ।

समिधाग्निं सुसमिद्धाय । तन्त्वा । उपत्वाग्ने एतावतस्त्र ऋचः आग्नेय्यो अग्निर्देवता: । गायत्रीछन्दस्का: ।

समिधा विरूपाङ्गिरसः ।

समिधाग्निमित्यस्या अङ्गिरसः पुत्रो विरूपसञ्ज्ञकऋषिः समिदाधाने विनियोगः ॥

सुसमिद्धाय वसुश्रुतः ।

सुसमिद्धाय शोचिषदित्यस्या वसुश्रुतऋषि । आध्वर्योर्जपे विनियोगः ॥

तन्त्वा भरद्वाजः ।

तन्त्वा समिद्भिरित्यस्या भरद्वाजऋषिः समिदाधाने विनियोगः अत्र तृतीये व्यूह. । उपत्वेत्यस्य पूर्वोक्ताएवऋषयः ॥

भूर्भुवः स्वस्तिस्रो महाव्याहृतयोऽग्निवायुसूर्या देवताः क्रमेण ।

भूरित्यस्याग्निर्देवता । भुवरित्यस्या वायु स्वरित्यस्याः सूर्यइति । भूरिति दैवी गायत्री आसां तिसृणामप्यग्निस्थापने विनियोगः ॥

द्यौरिव यजमानाशीर्लिङ्गोक्तदेवता

द्यौरिव भूम्नेतीयं यजमानस्याशीर्लिङ्गोक्तदेवता । पृथिवी च द्या देवतेति यावत् । व्यूहेन षट्त्रिंशदक्षरा ऋग्जगती ब्राह्मी गायत्री वा आर्षी बृहती वा यजमानकर्तृके जपे विनियोगः ॥

आयङ्गौः सार्पराज्ञस्तृचो गायत्रोऽग्निः परावररूपेण देवता ।

आयङ्गौः, अन्तश्चरति, त्रिंशद्धामेत्यस्य तृचः सार्पराज्ञः स-र्पाणाम् राज्ञः कद्रूः पृथिव्यभिमानिनीति तस्याः। अयं सार्पराज्ञः सार्पराज्ञीः अस्य तृचस्य द्रष्टी इत्यर्थः। गायत्रीछन्दः पृश्निरूपेणाश्वरूपेण च स्तूयमानोऽग्निरस्य तृचस्य देवता। आयं गौरित्यनेनादित्यरूपेणाग्निः स्तूयते। अन्तश्चरसीत्यनेन वायुरूपेण। आदित्यः पृश्निः। दिवि वा एष श्रितो दिवि प्रतिष्ठितः। "दिवो ह्यसौ प्रतिष्ठिता ज्योतिष्मानादित्य इति श्रुतेः"। अश्वो वायुः अन्तरिक्षं यत्तिर्यग्वायुः पवत इति अर्वाचीनं च "तद्दिवो वायुं दधाति। अन्तरिक्षस्य ह्यपाम् एतज्ज्योतिष्मान्वायुरित्यादिश्रुतेः"। आयङ्गौरित्यस्यास्तृतीयः सप्ताक्षरस्तेनैकोना अन्तरित्यत्र तृतीयस्य व्यूहेन पूरणम्। प्रथमद्वितीयपादस्थो व्यूहेन छन्दः पूरणम् आहवनीयाग्न्युपस्थाने विनियोगः। इत्यग्न्याधेयमन्त्राः। अथाग्निहोत्राणाम् साधारणरूपमाह ॥१०॥

**अग्निहोत्रम् प्रजापतेरार्षम् ॥**

अथाग्निहोत्रपदेन तन्मन्त्रा लक्ष्यन्ते। अग्निहोत्रमन्त्राणाम् यत्र ऋषिविशेषोऽभिधीयते तत्राभावपी भवतः प्रजापतिरृषिः सर्वेषाम् ॥

**अग्निर्ज्योतिः सप्त लिङ्गोक्तदेवता गायत्र्यः। (१)**

---

(१) अग्निर्ज्योतिरिति तृचा समिदग्निज्योतिर्लिङ्गोक्तदेवतर्च०। सूर्यो ज्योतिरित्यस्या सूर्यो ज्योतिर्ज्योतिः सूर्य इति सौरे सजूर्देवेन द्वे आग्नेयसौरे इह पुष्टिं लिङ्गोक्तदेवतमग्नयेऽन्नादाय दक्षिणाग्निमन्त्रमाग्नेयमिन्द्रः पश्चादैन्द्री बृहती समिदसि लिङ्गोक्ताम् इत्यधिकः पाठः काण्वशाखानाम् ॥ इह पुष्टिमित्यस्य प्रजापतिर्ऋषिरग्निर्गृहपतिः रयिमान्पुष्टिमांश्च देवता पङ्क्तिश्छन्दो गार्हपत्ये पूर्वाग्निहोमे विनियोगः। इह पुष्टिं पुष्टिपतिर्दधात्विह प्रजा०रमयतु प्रजापतिः॥ अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहा॥ अग्नयेऽन्नादायान्नपतये स्वाहा। अनामित्रम्मे अधरानमित्रमुदं कृधि॥ इन्द्रानामित्रमस्मत्पुरस्तान्मेऽनमित्रं पुरस्कृधि॥ इन्द्रः पश्चादिन्द्रः पुरस्ता-

भम्।

अयम् ते योनि रितीमास्त्वम् अग्निदैवत्याम्। अनुष्टुप्छन्दस्कां म् भारती भरतस्य पुत्री। देवश्रवा देववातश्चैतौ द्वौ ऋषी द्रष्टारौ अपश्यताम्। पादसन्धौ व्यूहेन छन्दःपूरणीयम्॥

## अयमिह वामदेवो जगतीम्॥

अयमिह प्रथमइति इमामृचम् जगतीछन्दस्काम् वामदेव ऋषि रपश्यत्। आग्नेयीमित्यनुवर्त्तते तेनास्या अग्निर्देवता: यस्या द्वादशाक्षराश्चत्वार पादा: साऽष्टाचत्वारिंशदक्षरा जगत्युच्यते। "अष्टाचत्वारिंशदक्षरा जगतीति श्रुते.", अत्र तु आद्यो द्वादशक, । द्वितीयो व्यूहेनैकादशक:। तृतीयो द्वादशक: एकोना॥

## अस्य प्रत्नामनुद्युतं गव्यां (१) वाऽऽग्नेयीं वा पयो देवत्याम् वा गायत्रीम्।

अस्य प्रत्नामनुद्युतमित्येतामृचम् गव्याम् आग्नेयीं वा पयोदेवत्याम् वा गायत्रीछन्दस्काम् वत्सारऋषिरपश्यत्। अस्या गौर्देवता। अग्निर्वा पयोवेति त्रयो देवा विकल्पा:॥

## तनूपाऽआग्नेयानि।

तनूपाऽअग्नेऽसीत्यादीनि चत्वारि यजूंषि आग्नेयानि अग्निदैवत्यानि, तनूपा, वर्चोदा, इति द्वे एकादशाक्षरे यजुस्त्रिष्टुभौ। असुराड्वा। आयुर्दा इति दशाक्षरा यजु:पङ्क्तिरासुरी त्रिष्टुब्वा। अग्ने यन्मे तन्वोदशाक्षरा आसुर्यनुष्टुप्॥

## इन्धानाऽआग्नेयी महापङ्क्तिस्त्र्यवसाना॥(२)

---

(१) वत्सार इति, आवत्सार इति "एव,, द्वौ पुस्तकयो पाठ इति, वत्सार इति कात्यायनशालीयपाठश्च बोध्य॥

(२) तत्र महापङ्क्तिरिति बोध्य॥

इन्धानास्त्वा शतमित्यृक् आग्नेयी अग्निदेवत्या महापङ्क्तिश्छन्दस्का अवसाना विरामोऽवसानम्। अवसानानि विरामस्थानानि यस्याम् सा अवसाना ताम् तस्या अष्टाक्षरा षट्पादा सा महापङ्क्ति षडष्टका वा महापङ्क्तिरित्युक्तत्वात् अत्र षट्समाक्षरत्वे नैकोना ॥ १२ ॥

चित्रावसो रात्रिदेवत्यस्तपयोऽपश्यत् ।

चित्रावसो स्वस्तीत्येतद्रात्रिदेवत्यम् यजुस्तपयोऽपश्यत् । "एतेन ह स्म वा ऋषयो रात्री स्वस्ति पारं॰ समश्नुवत" इति श्रुतेः । (१) द्वादशाक्षरा यजुर्जगती साम्नगायत्री वा आसुरी बृहती वा प्राजापत्योष्णिग्वा । उपप्रयन्त इत्यत आरभ्य चित्रावसो स्वस्तीत इत्यन्तस्य मन्त्रगणस्याहवनीयोपस्थाने विनियोग ॥

सन्त्वमाग्नेयम् ॥

सन्त्वमग्न इत्येतद्यजुरग्निदेवतम् । अष्टाचत्वारिंशदक्षरा आर्षीजगती ब्राह्मी अनुष्टुब्वा आहवनीयस्यापे उपविश्य जपे विनियुक्तम् ॥

अन्धस्थ रेवती. संहितेति त्रीणि गव्यानि ।

त्रयाणाम् गोदेवतेत्यर्थः । अन्धस्थ एकाधिका ब्राह्मी गायत्री सप्तत्रिंशदक्षरत्वात् । रेवती अष्टाविंशत्यक्षरा प्राजापत्या त्रिष्टुबार्षी उष्णिग्वा । संहितासि विश्वरूपीत्यष्टादशाक्षरा आर्चीगायत्री साम्नीबृहती वा । आद्यायाम् प्रति गमने विनियोग । संहितेत्यस्य गोरभिमर्शने ॥

उपत्वाग्नेयन् त्र्यृचम् गायत्रम् मधुच्छन्दा वैश्वामित्र. ।

---

(१) एष श्रुति [illegible] ॥

(२) रेवती रमध्वमस्मिन् योनावस्मिन्, अस्मिँल्लोकेऽस्मिन् [illegible] ॥ इहैव स्तेतो मापगात [illegible] ॥

उपस्थाग्ने दिवे। राजन्तम्। स नः पितेवेत्थेतत्त्र्यृचम् ऋचा प्रथम् आग्नेयमग्निदेवतम् विश्वामित्रस्य पुत्रो मधुच्छन्दा इत्येव सञ्ज्ञ ऋषिरपश्यत् दृष्टवान्। राजन्तमित्यस्या प्रथमद्वितीये समाक्षरी। तेनं च ऊना, स नाइत्यस्या तृतीयस्य व्यूहेन पूरणम्। अस्य त्र्यृचस्य गार्हपत्योपस्थाने विनियोग ॥

अग्ने त्वम् चतस्रो द्विपदाआग्नेयीर्बन्धुः सुबन्धुश्रु तबन्धुर्विप्रबन्धुरेकैकाश ।

अग्ने त्वमाऽभ्नम ॥ वसुरग्नि ।तत्त्वा शोचिष्ट। स नो बोधि एताश्चतस्रो द्विपदा आग्नेयीरग्निदेवत्या बन्ध्वादिसञ्ज्ञायत्ता एकैकस्या ऋषय इत्यर्थ। द्वौ द्वौ पादौ यस्या सा द्विपदा। आसाम् गा र्हपत्यापस्थाने एव विनियोग ॥ द्विपदास्तु विशेषऋग्वेदानुक्रम णाम् "द्विद्विपदास्त्वृच समामनन्ति,। ऋचोऽध्ययने त्वध्येतारौ द्वे द्विपदे संयोज्य एकैकामृचम् कृत्वा समाप्नोति।'अयुजुग्नन्त्या द्विपदे वेति"॥

इडे काम्या गव्ये ।

इह।ए ह। काम्याएत इतीमे यजुषी गव्ये। अनयोर्गौदेवतेत्यर्थ। इडे अष्टाक्षरा प्राजापत्या गायत्री यजुरनुष्टुब्वा, काम्या एत। षतु र्दशाक्षरा आसुर्युष्णग्यथाक्रमम् गा प्रतिगमने गोरालम्भे च वि नियोग ॥ (१)

सोमानम् ब्राह्मणस्त्र्यृचम् गायत्रम् ब्रह्मणस्प तिर्मेधातिथिर्वा ।

सोमानम, स्वरणम, यो रेवान्, मा न प्रसइत्येतत्त्र्यृचम् ब्राह्म णस्पतिदेवतम् गायत्रीछन्दस्कम् ब्रह्मणस्पतिऋषिर्मेधातिथिर्वा अपश्यत्

---

(१) काम्यऽएह इति कारत्रयपाठ ॥

आह्वनीयमीक्षमाणस्य यजमानस्य जपे विनियुक्तम् । अत्र सोमा न इत्यस्याः प्रथमो व्यूहे कृतेऽपि सप्ताक्षरः । तैनेकोना मा नइत्यस्याः द्वितीयः सप्ताक्षरस्तस्य व्यूहेन पूरणम् ॥

महि त्रीणामर्धं ०सत्यधृतिर्वारुणीरादित्यदेवतम् ॥ त्र्यृ-चङ्गायत्रम् पथि स्वस्त्ययनम् ।

महि त्रीणामवोऽस्तु । नहि तेषाम् । ते हि पुत्रास इत्येतत्त्र्यृचम् आ-दित्यदैवतम् गायत्रीछन्दस्कम् वरुणस्यापत्यम् सत्यधृतिरपश्यत् जपे विनियोगोऽस्य । महि त्रीणामित्यस्याः प्रथमतृतीययोर्व्यूहेन पूरणम् न हि तेषामित्यस्य द्वितीयस्य व्यूहेन पूरणम् । ते हीत्यस्या द्वितीयस्य तृतीयस्य च व्यूहेन पूरणम्, किं च इदम् तृचम् पथि मार्गे स्वस्त्ययनम् तस्कराद्युपद्रवभयनाशकरम् । मार्गे गच्छतामेतत्तृचजपेन कुशलेन वाञ्छितस्थानप्राप्तिर्भवतीत्यर्थः । स्वस्तीत्यविनाशि नाम । अविनाशप्रापकम् ।

कदा चनेन्द्री पथ्याबृहतीम् मधुच्छन्दाः ।

कदा चन स्तरीरसीत्येतामृचमैन्द्रीं इन्द्रदेवत्यां पथ्याबृहतीछन्दस्काम् मधुच्छन्दा ऋषिरपश्यत् जप एवास्या अपि विनियोगः । यस्यास्तृतीयः पादो द्वादशाक्षरः अन्ये त्रयः पादा अष्टाक्षराः सा पथ्याबृहती पथ्या पूर्वश्चेत्तृतीयो द्वादशक इत्येतद्व्यतिरिक्तम् पथ्या-बृहतीलक्षणम् पृथङ्नास्ति तेन बृहत्येव पथ्या बृहतीत्युच्यते ॥

तत्सवितुर्विश्वामित्रः सावित्रीं गायत्रीम् ।

तत्सवितुर्वरेण्यमित्येतामृचम् सावित्रीम् सवितृदेवत्याम् गायत्री नैकोना । व्यूहेन पूर्यतइति केचित् । अस्या अपि जपे विनियोगः ॥

परि ते वामदेव (१) आग्नेयीमनिरुक्ताम् गायत्रीम् ॥

---

(१) वामदेवस्यापि कारणादाग्नेयस्य पाठो बोध्यः ॥

(१)परि ते दूडभ इत्येतामृचम् अग्निदेवत्याम् अग्निस्तुताम् मन्त्रेऽग्निपदप्रयोगरहिताम् गायत्रीछन्दस्काम् वामदेवऋषिरपश्यत् विश्वामित्रऋषिरपश्यत् । अत्रापि प्रथमं सप्ताक्षरास्त्रिपादमन्त्रो व्यूहेन छन्दः पूर्तिः । अस्या अपि जपएव विनियोगः ॥ १३ ॥

यजमानाग्न्युपस्थानमन्त्राः समाप्ताः । अथ शुक्रोपस्थानमन्त्रस्य ऋषिमाह ॥

**शुक्रोपस्थानमासुरेरार्षम् भूर्भुवः स्वः ।**

भूर्भुवः स्वरित्येतच्छुक्रोपस्थानम् पूर्वोक्तदीर्घवात्सप्रोपस्थानापेक्षया लघूपस्थानम् ॥

आसुरेरार्षम् ॥ आसुरेरयं शुक्रोपस्थानस्य सर्वमन्त्राणाम् साधारणऋषिरित्यर्थः । पूर्वोक्तदीर्घोपस्थानापेक्षयाऽस्य सुकरत्वम् । तस्यैव स्थाने विकल्पेनाहवनीयगार्हपत्ययोरुपस्थाने विनियुक्तम् । तावेवास्य देवता एकविंशत्यक्षरा आर्च्युष्णिक्छन्दः ।

**प्रवत्स्यदुपस्थानम् (२) तदुभयमादित्यस्यार्षम् ।**

तन्मन्त्राणाम् सर्वेषामेकमादित्यऋषिरित्यर्थः ॥

**नर्य(३) गार्हपत्यः ।**

नर्य प्रजाम् मइत्यस्य गार्हपत्यो देवता सप्ताक्षरा दैवी जगती यजुरुष्णिग्वा गार्हपत्यस्योपस्थाने विनियोगः ॥

**शंस्या (४) आहवनीयः ।**

---

(१) एतन्मन्त्रान्ते "समिद्धोऽग्निरिन्द्रिय प्रजया च धनेन च,, इति मन्त्रार्धं काण्वशाखायामधिकं पठितं ॥

(२) आगतोपस्थानं चादित्यस्येति काण्वशाखीयस्य च पाठः ॥

(३) प्रजाम्मेऽस्याधिकः काण्वशाखीयस्य पाठः ॥

(४) शंस्य पशूनाहवनीय इति काण्वपाठः ॥

शठे॰स्य यशुर्मेदृत्याहवनीयोपस्थाने विनियोग ॥

अयर्यं दक्षिणाग्निः। (१)

अयर्य पितुमित्यस्य दक्षिणाग्निर्देवता अष्टाक्षरा यजुरनुष्टुप्गा-
गापत्या गायत्री वा। दक्षिणाग्न्युपस्थाने विनियोगः॥

आगन्माहवनीयोऽनुष्टुप्।

आगन्म विश्ववेदसमित्यस्य आहवनीयो देवता अनुष्टुप्छन्द।
आह॰नीयोपस्थाने विनियोग॥

अयमग्निर्न्यङ्कुसारिणी (२) गार्हपत्यः।

अयमग्निर्ष्टपतिरित्यस्याऽऽत्रयो न्यङ्कुसारिणी बृहतीछन्द।
गार्हपत्योपस्थाने विनियोगः, यस्याऽऽद्यो द्वितीयः पादो द्वादशाक्ष-
र॰ अन्ये नयोऽष्टाक्षरा सा न्यङ्कुसारिणी। द्वितीयस्य न्यङ्कुसारिणी-
त्युक्तत्वात्। अत्र तृतीयो नवाक्षरस्तेनैकाधिका॥

अयमग्निरन्वाहार्यपचनोऽनुष्टुप्। (३)

अयमग्नि पुरीष्यइत्यस्या अन्वाहार्यम् पचनोदेवता अनुष्टुप्छ-
न्द। अत्र प्रथम सप्ताक्षरस्तेनैकोना दक्षिणाग्न्युपस्थाने विनि
योग॥

गृहा मा त्रिष्टुब्विराड्रूपा।

गृहा मा बिभीतेत्यस्या विराड्रूपा त्रिष्टुप्छन्द एकादशिनः च-
योद्शिन अयोऽष्टकश्च विराड्रूपेत्युक्तत्वात्। यस्याः एकादशाक्षरा
स्त्रय: पादाएकोऽष्टाक्षरः सा विराड्रूपेत्युच्यते। अत्र प्रथमो दशाक्षरः
तेनैकोना॥

(१) इद सूत्रखण्डआनर्त ... मन्त्रखण्ड च कात्यायनीयसर्वानुक्रम-
णी नास्ति ॥

(२) बृहती ... कात्यायनी पाठ ॥

(३) इद सूत्रखण्ड कात्यायनी नास्ति ॥

**येषामनुष्टुप् ।**

येषामध्येतीत्यस्या अनुष्टुप् छन्दः ॥

**उपहूता महापङ्क्तिः (१) त्र्यवसाना ।**

उपहूता इह गाव इत्येषा महापङ्क्तिच्छन्दस्का त्र्यवसाना त्रीण्यवसानानि यस्याम् सा त्र्यवसाना । यस्या अष्टाक्षराः षड्वा सामपङ्क्तिः षडष्टका वा महापङ्क्तिरित्युक्तेः, अत्र पञ्चमो नवाक्षरो नैकाधिका ॥

**तिस्रोऽपि वास्तवीः शंयुर्बार्हस्पत्यः ।**

गृहा मैत्याद्यास्तिस्रोऽपि वास्तवी वास्तुदेवता। बृहस्पतेरपत्यं शंयुर्नामकऋषिरपश्यत् गृहोपगमने तिसृणामपि विनियोगः । क्षेमाय वद्यस्य गृहप्रवेशे ॥ १४ ॥

इत्युपस्थानमन्त्राः ॥ अथ चातुर्मास्यमन्त्राणाम् साधारणऋषिमाह ॥

**(२)चातुर्मास्यानि प्रजापतेरार्षम् ।**

अत्र चातुर्मास्यशब्देन तन्मन्त्रा लक्ष्यन्ते । तेन चातुर्मास्यसम्बन्धिमन्त्राणाम् सर्वेषाम् एक प्रजापतिऋषिरित्यर्थः । यत्र तु ऋषिविशेषोऽभिधीयते तत्रोभावपि ऋषी ज्ञेयौ ॥

**प्रघासिनो मारुती गायत्री ॥**

प्रघासिनो हवामहे इत्येषा मारुती । मरुतोऽस्या देवता गायत्री छन्दः पत्न्या वाचने विनियोगः ॥

**यद्ग्रामे मारुत्यनुष्टुबनिरुक्ता ।**

यद्ग्रामइतीयमृक् मारुती मरुद्देवत्या । अनिरुक्ता । मध्ये मरुत्पदप्रयोगयुक्ता । अनुष्टुप् छन्दस्का । करम्भपात्रहोमे विनियुक्ता ।

---

(१) अनुरवसाना इति कात्यायन पाठ ॥

(२) अथ चातुर्मास्यानि प्रजापतेरार्षम् इति पाठ. ॥

अथ प्रथम समाचर चतुर्थी नवाचर द्वादशाक्षरी । तेन पूर्वोष्णिक् छन्द ॥

मो षू णोऽगस्त्य (१) ऐन्द्रामारुतीम् विराजम् ।

मो षूण इतीमामृचम् इन्द्रमरुद्देवत्याम् विराजम् विराटछन्दस्का मगस्त्यऋषिरपश्यत् यजमानस्य जपे विनियोगोऽस्याः, यस्याद्दशा क्षरायत्वार पादा सा विराट्। पञ्चम पङ्क्ति पञ्चप दा चतुष्पदा विराटदशका इत्युक्ते । अथैन्द्री मरुत्वती जपतोति श्रुतेरैन्द्रा मारुतीमित्युक्त । इन्द्रामरुतचास्या देवताइत्यर्थ ।

अक्रन्नुकर्मेत्येषा अनिरुक्ताग्नेय्यनुष्टुप् । (२)

अक्रन्न कर्मेत्याग्नेय्यनुष्टप ॥ सर्वैग्निपदप्रयागरहिता यस्या अनुष्टुप्छन्द । अत्र तृतीय समाचरस्तनेकाना पत्नीवाचने विनियोग ॥

अवभृथ यजुर्दैवतम् । (३)

अवभृथ निचु पुणेत्येतद्यजुर्यज्ञदेवतम् । नयु सकनिर्देशाद्दश य जुष्टम् । यष्टाचत्वारिंशदक्षरत्वात् ब्राह्म्यनुष्टुप ॥

पूर्णादर्वि द्वे और्णवाभऐन्द्राववनुष्टुभौ ।

पूर्णा दवि, देहि मे इतोमे ऋचो ऐन्द्रा इन्द्रदेवते । अनुष्टुपछ न्दस्के और्णवाभऋषिरपश्यत् । प्रथमाया दध्ना स्वामीत आदनप्र धे विनियाग । द्वितीयायाम्तहोमे ॥ (४)

अष्टन्न (५) द्वे गौतमऐन्द्र्यो पङ्क्ती ।

---

(१) अगस्त्यपश्यति क ग्रन्थस्य पाठ ॥

(२) अ हम सूत्र इत्येषा पद कारावस्य न ास्त ॥

(३) अथावभृथ त कारावस्य पाठश ॥

(४) देहि मरुत्य हम म त्र भोद नि ते दधौ । निहार निहारा मित निहर निहरा स मे स्वाहा । इतक ग्रन्थस्य पाठ ॥

(५) अर्भमद त त कारावस्य पाठ ॥

अयवनोमदन्त । सुसन्दृशन्त्वेतीमे ऋचौ इन्द्रदेवत्ये पङ्क्तिछन्दस्के गोतमऋषिरपश्यत् । आहवनीयोपस्थाने विनियुक्ते । यस्याः पञ्चपादा अष्टाक्षरा सा पङ्क्तिः पञ्चपदा । अनादेशेऽष्टाक्षराः पादा इति वचनात् । सुसन्दृशमित्यत्र सप्ताक्षरा तेनैकमेकोना । पञ्चमयोस्तूभयव्यूहेन पूरणम् ॥

मनो नु मानसन् त्र्यृचम् बन्धुर्गायत्रम् ।

मनो न्वाह्वामहे, आ न एतु । पुनर्न इत्येतत्त्र्यृचम् मानसम् मनोदेवतम् गायत्रीछन्दस्कम् बन्धुऋषिरपश्यत् । गार्हपत्योपस्थाने विनियुक्तम् मनो न्विति व्यूहेनापि सप्ताक्षरः तृतीयोऽपि तथा । तेनेयन् न्यूना । आ न इत्यत्र तृतीयः षडक्षरस्तेन न्यूना । पुनर्न इत्यत्र द्वितीयः सप्ताक्षरः तेनैकमेकोना ॥

वयर्ठ०सोमीं गायत्रीम् बन्धुः ।

वयर्ठ० सोम व्रते इत्येतामृचम् सोमदेवताम् । गायत्रीछन्दस्काम् बन्धुऋषिरपश्यत् । अस्या विनियोग उक्तो नास्ति ॥

एष ते द्वे रौद्रे ।

एष ते रुद्र भाग इमे द्वे रुद्रदेवते यजुषी प्रथमस्य विंशत्यक्षरा । प्राजापत्या बृहती सामपङ्क्तिर्वा रौद्राणाम् पुरोडाशानां होमे विनियोगः । द्वितीयस्य द्वादशाक्षरत्वाद्यजुर्जगती । अधिकपुरोडाशस्याखूत्करोपकिरणे विनियोगः ॥

अव रुद्रर्ठ०(१) रौद्र्यौ ।

अवरुद्रम् (२)भेषजमसीत्येते द्वे ऋचौ रौद्र्यौ रुद्रदेवते । अनयोश्छन्दसी आह ॥

एका पङ्क्तिरपरा ककुप् ।

---

(१) वनमी रौद्राशाति काण्वस्य पाठः

(२) एतारम ते सुगम्मषायेति काण्वशाखीयपाठः ॥

रौद्रीपदमनुवर्त्तते । एतत्ते रुद्रेत्यस्याः आस्तारपङ्क्तिश्छन्दः रुद्रो देवता । यस्या ऋचोऽन्त्यौ पादौ द्वादशाक्षरौ आद्यावष्टाक्षरौ । सा आस्तारपङ्क्तिः असौ प्रस्तारपङ्क्तिरित्युक्तेः । अत्र तु प्रथमो नवकः । द्वितीयोऽष्टकः तृतीयो एकादशकइति छन्दोऽक्षराणि पर्यन्तएव हुतावशिष्टानां रौद्रपुरोडाशानाम् भूतयोः कृतानाम् इषावावासञ्जने विनियोगः ॥

### त्र्यायुषन्नारायणउष्णिहम् यजमानाऽऽशिषम् ।

त्र्यायुषम् जमदग्नेरितीमामृचम् उष्णिक्छन्दस्कां नारायण ऋषिरपश्यत् । कीदृशी यजमानाशीरेवात्र देवता । यजमानस्य जपे विनियोगोऽस्याः । यस्या ऋचश्चत्वारोऽपि पादाः सप्ताक्षराः साऽप्युष्णिगित्युच्यते । चतुः सप्तकोष्णिगित्युक्तेः ॥

### शिवो नाम क्षौरम् ।

शिवो नामेत्येतद्यजुः क्षौरम् । क्षुरदेवताम् । विंशत्यक्षरा प्राजापत्या बृहती साम्नपङ्क्तिर्वा । क्षुरादाने विनियोगः ॥

### निवर्त्तयामि लिङ्गोक्तदेवताशीः प्रायम् ।

निवर्त्तयामीत्येतल्लिङ्गोक्तदेवताम् यजमानस्यात्र प्राधान्यात्तदेवात्र देवतेत्यर्थः । आशीः प्रायम् । आशीर्बहुलम् । अष्टाविंशत्यक्षरा प्राजापत्या त्रिष्टुप् । आर्षी उष्णिग्वा । (१)ऋषिस्तु यथानुक्तः तत्र सर्वत्र साधारणः प्रजापतिरेव ज्ञेयः ॥ १५ ॥

---

रुद्रः शतम् ॥ ७६ ॥ इति शुक्लयजुः काण्वसंहितायां नवानुवाकेषु षट्सप्ततिकण्डिकायां तृतीयोऽध्यायः ॥ ३ ॥ सामिधामग्निज्योतिषं तत्रेणाष्टका ऽउत्तमपन्ती ऽग्नेऽधरमग्निर्वर्चो ज्योतिर्भूर्भुवः सप्त सपत्नसिनो हवामहे पञ्च पूर्णा दर्वि द्वे अक्षन्नमीमदन्तैष ते रुद्र भागो वाजिनो वाज षट्काशन्तृतीये नव षट्सप्तति । ३ । ९ । ७६ ॥ इत्यादि काण्वशाखीयसंहितायां पाठश्च बुधैर्बोध्यः ॥

(१) स्नाने विनियोगः इति पद्धतिपाठः ॥

## इति चातुर्मास्यमन्त्राः ॥

अथाग्निष्टोममन्त्राणां सर्वेषां साधारणमेकमृषिमाह ॥

### अग्निष्टोमः प्रजापतेरार्षम् ॥

अग्निष्टोमग्रहणं तन्मन्त्रोपलक्षणार्थं तेनाग्निष्टोममन्त्राणां सर्वेषां प्रजापतिर्ऋषिरित्यर्थः । यत्र तु ऋषिविशेषोऽभिधीयते तत्रोभावप्यृषी ज्ञेयौ ॥

### एदमनुहेऽत्यष्टी व्यवसाने ॥(१)

एदमगन्म, आपोऽस्मान, इति इमे द्वे ऋचौ अत्यष्टी । अत्यष्टिछन्दस्के व्यवसाने अवसानद्वययुक्ते । अष्टषष्ट्यक्षरं छन्दोऽत्यष्टिः तत्र एदमिति त्रिभिरक्षरैरधिका । आप इति तु पूर्वैवाष्टषष्ट्यक्षरा न्यूनाधिका । अनयोर्विनियोगानुसारेण खण्डशो देवता आह ॥

### आद्यावर्द्धर्चौ देवयजनदेवत्यौ ।

एदमगन्मेत्यस्या ऋच आद्यावर्द्धर्चौ देवयजनदैवत्यौ अरणिपाणि-रत्नारत्न्यपूर्वार्द्धगानात्प्रागस्य यजमानस्योच्चारणे विनियुक्तौ ।२॥

### इमा आपः ॥

इमा आप इत्यस्य आपो देवता, गोदाने उन्दने विनियोगः ॥

### ओषधे कुशतरुणम् ॥

ओषधे त्रायस्वेत्यस्य कुशतरुणं (२)देवता । कुशतरुणान्तर्धाने विनियोगः ॥

### स्वधिते क्षुरः ॥

स्वधित इत्यस्य क्षुरो देवता । अभिनिधाने विनियोगः ॥

---

(१) एदमित्युष्टुभावाद्ये देवयजनदेवत्ये इति काण्वसर्वानुक्रमपाठः ॥

(२) कुशतृण इति पुस्तकपाठः ॥

आपोऽअस्मानाप: ॥

आपो अस्मानित्यस्यापो देवता: । स्थावरास्वप्सु प्रविश्य स्नाने विनियोग: । न तु कुम्भोदकेन ॥(१)

दीक्षातपसोर्वास: ॥

दीक्षातपसोरित्यस्य वासो देवता । वास: परिधाने विनियोग:॥

महीनां नवनीतम् ॥

महीनां पयइत्यस्य नवनीतं देवता । षं डशाक्षरा प्राजापत्यानुष्टुप्सामानुष्टुब्वा । नवनीतेन शरीरांजने विनियोग: ॥

वृत्रस्याञ्जनम् ॥

वृत्रस्यासीत्यस्यांजनं देवता । अष्टादशाक्षरा ऋग्गायत्री साम बृहती वा । अक्ष्यञ्जने विनियोग: ॥

चित्पतिर्द्वे प्राजापत्ये ॥

चित्पति र्वाक्पतिर्मेत्येते द्वे यजुषी प्राजापत्ये प्रजापतेरित्यर्थ । आद्या सानुषंगा न्यूनेन चतुश्चत्वारिंशदक्षरा आर्षीत्रिष्टुप् । द्वितीयापि तथैव उभयोर्नाभिरूढस्येयजमानपावने विनियोग: ॥

देवो मा सवितम् ॥

देवो मा सवितेत्येतत्सवितृदेवतं । अयः पञ्चचत्वारिंशदक्षरत्वादेकाक्षराधिकं पूर्वोक्तमेव छन्दः । नाभेरध: पावने विनियोग: ॥

आपो देव्यनुष्टुबापो ॥

आपो देवामदत्तोयं देवीदेवत्या अनुष्टुप्छन्दस्का । आपोरूपा पावने विनियोग । अत्र द्वितीय पादो न्यूनेन पूर्यते ।

(१) इन्द्राय वर्षस्नुत्यादिरानुष्टुप् प्रजापतिः स्थिरेति वद्दतिवास: ॥ वाद-दाभ्य: इत्यपारो देवता. अक्षयन्तादुनरपूर्वाद्वऽनुष्ठाने विनियोग ॥

स्वाहा यज्ञं चतस्रो यज्ञ॥

स्वाहा यज्ञं। स्वाहोरो। स्वाहा द्यावा। स्वाहा वातादित्येतेषां चतुर्णां यजुषां यज्ञो देवता। समाचरा दैवीजगती यजुः पाद्वा च तुर्णां छंदः, अंगुल्यञ्चने विनियोगः। सम्बहित्यस्य दैवीउष्णिक् अङ्गुष्ठ ते संहितयोरसर्गपूर्वमुच्चारणे विनियोगः॥

आकूत्यै चतस्रोमौद्ग्रभणानामग्निः॥

आकूत्यै प्रयुजे मेधायै दीक्षायै सरस्वत्यै एतेषां चतुर्णामौद्ग्रभणानामग्निर्देवता। प्रथमद्वितीयचतुर्थानामौद्ग्रभणहोमे विनियोगः। तृतीयस्य जपे चतुर्णामपि दशाक्षरत्वादासुरीत्रिष्टुप्छन्द यजुः पङ्क्तिर्वा॥

आपो देवीर्लिङ्गोक्तदेवता विराट्॥

आपो देवीर्बृहतीरित्यस्य लिङ्गोक्तदेवता अप्द्यावापृथिव्यस्तरिक्ष बृहस्पतिदेवतेत्यर्थः। अस्या विराटछन्दः एकादशाक्षरास्त्रयः पा दा यस्या सा विराडुच्यते। दशका स्त्रयो विराडेकादशका येति व चनात्। यत्र प्रथमो द्वादशाक्षरः। तेनैकाधिका। औद्ग्रभणहोमे विनियोगः॥ १६॥

विश्वो देवस्य स्वस्त्यात्रेय सावित्रीमनुष्टभम्॥

विश्वोदेवस्येतीमस्य सवितृदेवतामनुष्टुपछन्दस्कां स्वस्त्यात्रेय ऋषिरपश्यत्। अत्राद्यौ पादौ सप्ताक्षरौ। तेन द्व्यूना। औद्ग्रभणहोमएयास्या अपि विनियोगः॥

ऋक्सामयोः कृष्णाजिने॥

ऋक्सामयो रित्यस्य द्वे कृष्णाजिन देवता व्यूहेन चतुर्विंशत्यक्षरा प्रा जापत्या पङ्क्ति शुक्लकृष्णमन्त्र्यालम्भे, विनियोगः।

शर्मासि कृष्णाजिनम्॥

शर्मासि शर्म मे यच्छेत्यस्य कृष्णाजिन देवता समदशाक्षरत्वात् । ऋग्गायत्री एकोना । साम्नामुष्णिग्वा एकाधिका । कृष्णाजिनाल म्भे विनियोग ॥

## ऊर्गस्याङ्गिरोमिदृष्ट मेखलम् ॥

ऊर्गस्याङ्गिरसीत्येतन्मेखल मेखलादैवतं यजुरङ्गिरोमिदृष्टम् । मेखलाबन्धने विनियुक्ता । पञ्चदशाक्षरा आसुरीगायत्री ॥

## सोमस्य नीवि. ॥

सोमस्य नीविरित्यस्य नीविर्देवता । सप्ताक्षरा दैवी जगती य जुरुष्णिग्वा नीविकरणे विनियोग ॥

## विष्णोर्शर्मासि. ॥

विष्णो. शर्मासीत्यस्य दासीदेवता । द्वादशाक्षरा यजुर्जगती । शिर प्रोर्णवने विनियोग ।

## इन्द्रस्य सुनस्या कृष्णविषाणा ॥

इन्द्रस्य योनि सुस यास्त्वनयो. कृष्णविषाणा देवता । इन्द्रस्येति सप्ताक्षरा दैवीजगती । ललाटोपस्पर्शने विनयोग । सुसस्या' षड क्षरा यजुर्गायत्री । दैवीत्रिष्टुब्वा । भूम्युल्लेखने विनियोग ॥

## उच्छ्रयस्व दण्डः ॥

उच्छ्रयस्व वनस्पत इत्यस्य दण्डो देवता । दण्डोच्छ्रयणे विनियोग: द्वाविंशत्यक्षरा साम त्रिष्टुप् ॥

## व्रतं यज्ञ ॥

व्रत कृणुतेत्यस्य यज्ञो देवता । व्रतकरणप्रैषे विनियोग', व्यूहेन चतुर्विंशत्यक्षरा प्राजापत्यापङ्क्ति ॥

## दैवीं धी ॥

दैवीं धिय मनामह इत्यस्य धीर्देवता । द्वाविंशदक्षरा प्राजापत्या जगती।

उपस्पर्शने विनियोगः ॥

ये देवा वाक्प्राणोदानौ चक्षुः श्रोत्रमध्यात्ममग्नि-
र्मित्रावरुणावादित्यो विश्वेदेवा अधिदैवतम् ॥

ये देवा मनोजाता इत्यस्य मन्त्रस्याध्यात्मं आत्मनि अधिकृत्यात्म-
नि विषये स्वशरीरे वा प्राणोदानौ चक्षुः श्रोत्रं देवता । तथा
अधिदैवत देवतास्वधिकृत्य देवतासु मध्ये अग्निर्मित्रावरुणावादि-
त्यो विश्वेदेवा देवताः । तथा च श्रूयते" । इमे वै प्राणा मनोजाता
मनोयुजो दक्षक्रतवो वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरा-
दित्य श्रोत्र विश्वेदेवा एतासु हैवास्यैतद्देवतासु हुतं भवतीति" इम-
मष्टाविंशत्यक्षरा प्राजापत्या त्रिष्टुब्व्रतभक्षणे विनियोगः ॥

श्वात्रा आपो जगती ॥

श्वात्राः पीताः इत्येतद्यजुरेक आपो अब्देवता जगतीछन्दस्का । य-
स्याश्चत्वारः पादा द्वादशाक्षरा सा अष्टाचत्वारिंशदक्षरा जगती ।
नाध्यात्मे विनियुक्ता । अत्र तु प्रथमद्वितीयावेकादशकौ ।
ततो द्वौ सप्तकौ । एको वा चतुर्दशक । तत एको द्वादशक इति ।
जगती वा । पादानामनियताक्षरत्वात् । छन्दसां नियमाभा
वात् ।

इयं ते लोष्ठम् ॥

इयं ते यज्ञियेत्यस्य लोष्ठं देवता । अष्टाक्षरा यजुरनुष्टुप् । कृष्ण-
विषाणया लोष्ठादाने विनियोग ॥

अपो मूत्रम् ॥

अपो मुञ्चामीत्यस्य मूत्रं देवता । मेहने विनियोगः ।

इयं नवो वेदत्रयाक्षरा ।

तेनैकाधिक्या सानत्रिष्टुप् । एकोनाद्यायां । गायत्री वा ॥

पृथिव्या लोष्टम् ॥

पृथिव्या सम्भवेत्यस्य लोष्टं देवता। पञ्चाक्षरा दैवी त्रिष्टुप्। यजुर्गायत्री वा। गृहीतस्य लोष्टस्य प्रतिप्रक्षेपे विनियोगः॥

अग्ने त्वं नःऽग्नेय्यनुष्टुप् ॥

अग्ने त्वं सुजागृहीतीयमाग्नेयी अग्निदेवत्याऽनुष्टुप्छन्दस्का। अत्र प्रथमव्यूहो समाचरो। तेन दृव्यूना। स्वापप्रारम्भे उच्चारणे विनियुक्ता॥

पुनर्मनऽआग्नेयम् ॥

पुनर्मनइत्येतदाग्नेयं। अग्निदैवतं। यजमानस्य विबुद्धस्य वाचने विनियुक्तं। इयं चतुःपञ्चाशदक्षरा ब्राह्मी बृहती॥

त्वमग्ने व्रतपाऽआग्नेयीं गायत्रीम् ॥

त्वमग्ने व्रतपाऽ इमामृचमग्निदेवता गायत्रीछन्दस्कां वत्सत्रऋषिरपश्यत्। अत्र प्रथमोऽष्टकः द्वितीय षट्कः स द्व्यूहेन सप्तकः। तृतीयोऽपि व्यूहेन षट्कः तेनेय प्रतिष्ठा सञ्ज्ञा गायत्री भवति। विपरीता प्रतिष्ठेत्युक्तेः। दीक्षितस्य क्रोधानृतभाषणयोः प्रायश्चित्तार्थोच्चारणे विनियोगः॥

रास्वेयत्सौम्यम् ॥

रास्वेयत्सोमेत्येतत्सोमदेवतं। सौम्यमिति सौमाख्यं। द्वाविंशत्यक्षरा साम्नी त्रिष्टुप्। लक्षस्यालङ्कावाचने विनियोगः॥

एषा ते हिरण्याज्यदैवतम् ॥

एषा ते शुक्र तनूरित्येतद्यजुर्हिरण्याज्य दैवतं। त्रयस्त्रिंशदक्षरा स्वराट् त्रिष्टुप्। बर्हिःस्तृणवद्धस्य हिरण्याज्यमध्ये निधाने विनियोग॥

जूरसि वाग्दैवतम् ॥

नूरसीत्येतत् वाग्देवता । नवविंशदक्षरा अनुष्टुप् सामवहो मे विनियोग ॥

शुक्रमसि हिरण्यम् ॥

शुक्रमसीत्यस्य हिरण्यं देवता पञ्चाक्षरा अनुगायत्री सामह गो वा । हिरण्यस्योद्धरणे विनियोग ॥

चिदसि गौः सोमक्रयणी वाग्रूपाध्यारोपकल्पनया ॥

चिदसि मनासीत्यस्य यजुष सोमक्रयणीगौर्देवता । कया बुद्ध्या वाग्रूपाध्यारोपकल्पनया । वाग्रूपस्य सोमक्रयण्या या अध्यारोपकल्पना आरोपबुद्धिस्तया । वाग्रूपैवेय सोमक्रयणीति बुद्धेत्यर्थ । "वाग्वै सोमक्रयणीति ह्यानेनेति श्रुते"। इयम् व्यूहैनषडक्षरा आर्षी पङ्क्ति । अस्ति अक्षरी वा सोमक्रयण्यभिमन्त्रणे विनियोग ॥ (७)॥

वस्व्यस्यनुष्टुब्बृहती वा सोमक्रयण्या स्तुति ॥

वस्व्यस्यदितिरसीत्येषा ऋगनुष्टुप्छन्दस्का । बृहती छन्दस्का वा चतुस्त्रिंशदक्षरत्वाद्विकल्प । द्वाभ्यामधिकाऽनुष्टुब्वा । द्वाभ्यामूना बृहती वेति । सोमक्रयण्या स्तुति । अत सोमक्रयण्येवात्र देवतेत्यर्थ । या यत्र स्तूयते सा तत्र देवता भवतीति न्यायात् । सोमक्रयण्या अनुगमने विनियोग ॥

अदित्या ऽआज्यम् ॥

अदित्यास्त्वा मूर्द्धन्नित्यस्याज्यं देवता । त्रिंशदक्षरा अनुपङ्क्ति- सोमक्रयणीपदे चतुर्गृहीतहोमे विनियोग ॥

अस्मे पञ्चानाम् लिङ्गोक्ता देवता ॥

अस्मे रमस्वेत्यादीनाम् पञ्चानाम् यजुषाम् लिङ्गेनैव देवता उक्ता ।

न्तमाक्तं इत्येतस्य पदम् पांसुरूपं देवताः । पञ्चाक्षरा दैवीपङ्क्तिश्छन्दः । पदपरिलेखने विनियोगः । अस्मे ते बन्धुरित्यस्य पदम् देवता । पञ्चाक्षरा दैवीपङ्क्तिः पदस्य स्वात्मामावापे विनियोगः । त्वे रायः मे राय इत्यस्य यजमानो देवता षडक्षरा दैव्युष्णिक् छन्दः । यजमानस्य पदप्रतिग्रहणे विनियोगः । मा वयमित्याशीर्देवता । एकादशाक्षरा यजुस्त्रिष्टुप् । आत्मालम्भे विनियोगः । तोतो राय इत्यस्य पत्नी देवता चतुरक्षरा दैवी बृहती । पत्नीवाचने विनियोग ॥

## समख्ये पत्न्याशीरास्तारपङ्क्तिः ॥

समख्ये देव्येतीयमृक् आस्तारपङ्क्तिच्छन्दस्का । पत्न्याशीर्देवता । पत्नीवाचने विनियोग, यस्या आदौ द्वौ पादावष्टाक्षरौ । तृतीयचतुर्थौ द्वादशाक्षरौ सा आस्तारपङ्क्ति । "अन्त्यौ चेदास्तारपङ्क्तिरित्युक्ते." ॥

## एष ते लिङ्गोक्तदेवतम् ॥

एष ते गायत्रो भाग इत्येतद्यजुर्लिङ्गोक्तदेवतम् । व्यूहेन षट्पञ्चाशत्त्वादब्राह्मी त्रिष्टुप् ॥ लिङ्गादध्वर्युर्देवता । हे अध्वर्यो त्वम् मम इत्येवन् सोमाय ब्रूतादिति सम्बोध्यमानत्वेन प्राधान्यात् । सोमो वा देवता । तस्य स्तूयमानत्वात् । वाचने विनियोग' ॥

## आस्नाक्रोसि सोम्यम् ।

आस्नाक्रोऽसीत्येतत्सोमो देवतम् व्यूहेनाष्टादशाक्षरा ऋग्गायत्री साम्नी बृहती वा सोमालम्भे विनियोगः ॥

## अभित्यर्ठ० सावित्र्यष्टिः ।

अभित्यमितीयमृक्सावित्री सवितृदेवत्या अस्याः अष्टिश्छन्दः

---

(१) शुक्रदत्ता इत्यस्य स्थाने च द्रन्दवा इति कारावशालीयपाठः ॥

"षतु.षष्ट्यक्षरा अदितिरिति ब्यते भव यत्सामतिदिति, प्रजाभ्यस्त्वा, प्रजाः त्वा इति व्यूहयेन पूरणम् सोममाने विनियोगः ॥

प्रजाभ्यस्त्वा प्रजास्त्वा शुक्रान्त्वा सौम्यानि ।

प्रजाभ्यस्त्वा, प्रजास्त्वानु । शुक्रन्त्वा शुक्रेष्वित्येतानि यजूंषि सोमदेवत्यानि । प्रजाभ्यस्त्वा चतुरक्षरा दैवी बृहती । उष्णीषेण बन्धने विनियोगः । प्रजाभ्यस्त्वा । पञ्च दशाक्षरा आसुरी गायत्री अनुक्या मध्ये विवरणे विनियोग । शुक्रन् त्वा विंशत्यक्षरा प्राजापत्या बृहती याचने विनियोग ॥

सर्वऽसि लिङ्गोक्ते ॥(१)

सर्गे ते, अर्घे ते इत्येते द्वे लिङ्गोक्तदेवते । सोमविक्रयिदेवते इत्यर्थ. । तत्र सम्बन्धत्वात् । सर्गे चतुरक्षरा दैवी बृहती । छिद्रकेण सोमविक्रयिहस्तशिथिलीकरणे विनियोग । अर्घे ते षडक्षरा यजुर्गायत्री । दैवी त्रिष्टुब्वा । यजमानसहितनिधाने विनियोगः ॥

तपसो देवता ।

तपसस्तनूरित्यस्य यजुषोऽर्द्धे प्रथमे भागे प्रजापतिर्देवता. ॥

अर्द्धे सोमः ।

अस्यैव यजुषो द्वितीयेऽर्द्धे परमेष पयसेत्यस्मिन् । द्वितीये भागे सोमो देवता । समस्ताया एकविंशत्यक्षरत्वादेकाधिका षट्कपङ्क्तिः । एकोना प्राजापत्या जगतीवा । द्वयोरप्यर्द्धयोर्दापने विनियोगः ॥

मित्रो नाऽइन्द्र य सौम्ये ।

मित्रो न एहि, इन्द्रस्योरुमित्येते द्वे सौम्ये सोमदैवते मित्रो न

(१) देवते इत्यधिकम् क पुस्तकं पाठ ।

इत्यस्य नवाक्षरा यजुर्बृहती भजासमर्पणे सोमादाने च विनियोगः। इन्द्रयोरम् । व्यूहेन विंशत्यक्षरा प्राजापत्या बृहती सामपङ्क्ति र्वा सोमो देवता । क्रौ सोमे निधाने विनियोगः ॥

## स्वानादीनि धिष्ण्यनामानि ।

स्वान भ्राजेत्यस्य मन्त्रस्य स्वान भ्राजेत्यादीनि धिषण्यनामानि देवताः। "एतानि वै धिष्ण्यानान् नामानीति श्रुतेः"।(१)स्वानाद्यष्टावत्र देवता । द्वात्रिंशदक्षरा प्राजापत्या जगती जपे विनियोगः ।

## परि माऽग्ने यो पुरस्ताद्बृहती ।

परि माऽग्नइत्येषाऽग्निदेवता पुरस्ताद्बृहतीरछन्दस्का वाचने विनियुक्ता । यस्या आद्यः पादो द्वादशाक्षरः । अन्ये त्रयोऽष्टाक्षराः सा पुरस्ताद्बृहती "आद्यश्चेत्पुरस्ताद्बृहतीत्युक्तेः" अत्र प्रथमतृतीयपादयोर्व्यूहेन पूरणम् । तृतीयचतुर्थपादसन्धौ व्यूहेन छन्दपूरणम् ॥

## प्रतिपन्थामनुष्टुप्पथिदेवत्या ।

प्रतिपन्थामपद्महीतीयमृक् अनुष्टुप्पथि देवत्या । पन्था अस्या देवतेत्यर्थः । अत्रापि सुगस्ति गामिति व्यूहेन पूरणम् . मनः प्रतिगमने विनियोगः ॥

## अदित्याः कृष्णाजिनम् ।

अदित्यास्त्वगित्यस्य कृष्णाजिनं देवता । अष्टाक्षरा यजुरनुष्टुप् प्राजापत्या गायत्री वा । कृष्णाजिनास्तरणे विनियोगोऽस्य यजुषः ॥

## अदित्यै सौम्यम् ।

(१) श्रुतिः शतपथब्राह्मणस्य तृतीयकाण्डान्तरस्य द्वितीयप्रपाठकस्य षष्ठब्राह्मणैकादशखण्डस्य च ज्ञेयेति ।।

। अदित्ये सद्मासीदित्यस्य यजुरनुष्टुप्छन्दस्कम् सोमो देवता । अग्नि सोमनिधाने विनियोगः ॥

अस्तभ्नात्त्रिष्टुभौ वारुण्यौ ।

अस्तभ्नाद्याम् । वनेषु व्यन्तरिक्षमिति द्वे ऋचौ त्रिष्टुप्छन्दसौ वारुण्यौ वरुणदैवत्ये अस्तभ्नादित्यस्य वाचने विनियोग । वनेषु वीत्यस्य सोमक्रयाणेन परितनने विनियोग' । अत्र प्रथमतृतीय पादयोर्येयादिशव्यूहेन पूरणम् ॥

सूर्यस्यानुष्टुप्कृष्णाजिनम् ।

सूर्यस्य चक्षुरित्यनुष्टुप्छन्द कृष्णाजिनम्देवता । कृष्णाजिनस्य पुरस्तादास्थाने विनियोग' ॥

उस्त्रावूर्ध्वबृहत्यानडुही ।

उस्त्रावेतमितीयमृक् आनडुही । अनडुवाहावस्य देवतेत्यर्थः ऊर्ध्वबृहतीछन्द । यस्याश्चय पादा द्वादशाक्षरा । "सोर्ध्वबृहती त्रिजगत्यूर्ध्वबृहत्युक्ते" । एकोनेयम् । अत्र प्रथम पादो दशाक्ष रो विपरीतम् वा । अनडुद्योजने विनियोग' ।

भद्रो मे सौम्यम् ।

भद्रो मेऽसीत्येतत्सोमदेवतम् । एत नसात्यक्षरत्वादेकाक्षराधि-का अत्यष्टिच्छन्दो याचने विनियोग ॥

नमो मित्रस्याभितपनः सूर्यं सौरीं जगतीम् ।

नमो मित्रस्येतीमामृचम् सौरीं सूर्यदैवताम् जगतीछन्दस्काम भितपन' सूर्यक्र वेदपश्यन् । अभित सर्वतस्तपतीत्यभितपन. । अग्रमाणोमोपादद्दश्यमानत्वम । अष्टाचत्वारिंशदक्षरा जगती वाचने विनियोग. ॥

वरुणस्य पञ्च वारुण्यानि ।

वरुणस्योत्तम्भनमसीत्यादीनि पञ्च यजूंषि वरुणदेवतानि । प्राचस्य नवाक्षरा यजुर्बृहतीछन्दः उत्तम्भनेनानसस्तम्भने विनियोग द्वितीयस्य दशाक्षरा यजुःपङ्क्तिः । प्रासव्यभिमर्शने विनियोगः । चतुर्थस्य एकादशाक्षरा यजुस्त्रिष्टुप् । कृष्णाजिनास्तरणे विनियोगः । पञ्चमस्य द्वादशाक्षरा यजुर्जगती । आसन्द्यां सोमनिधाने विनियोग ॥

या ते धामानि त्रिष्टुभम् गोतमः ।

'या ते धामानीत्येताम् सोमदेवता त्रिष्टुप्छन्दस्काम् गोतमऋषिरपश्यत् । वाचनेऽस्य विनियोगः । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् ॥ सूक्तेन पूरणम् ॥ १८ ॥

अग्नेस्तनूरसि पञ्च वैष्णवानि ।

अग्नेस्तनूरसीत्यादीनि पञ्च यजूंषि विष्णुदेवतानि हविर्ग्रहणे विनियुक्तानि । अग्नेस्तनूः दशाक्षरा यजुः, सोमस्य एकादशाक्षरा यजुस्त्रिष्टुप् । अतिथे द्वादशाक्षरा यजुर्जगती ॥ श्येनाय त्वा । यजुर्जगत्येव । अग्नये त्वा । त्रयोदशाक्षरा आसुर्यनुष्टुप् ॥

अग्नेः प्रशकलम् ।

अग्नेस्तनूरसीत्यस्य प्रशकलम् देवता पञ्चाक्षरा यजुर्गायत्री । दैवी त्रिष्टुब्वा । शकलादाने विनियोगः ॥

वृषणौ (१) दर्भतरुणके ।

वृषणौ स्थ इत्यस्य दर्भतरुणे देवता । चतुरक्षरा दैवीबृहती दर्भतरुणयोर्निधाने विनियोगः ॥

एषणस्यसि त्रयाणाम् लिङ्गोक्ता देवताः ।

एषणस्यसीत्यादित्रयाणाम् यजुषाम् देवता लिङ्गेनैवोक्ताः । तत्रो-

(१) वृषणौ इति क पुस्तके पाठः ।

यैम्भीत्यक्षरादिर्देवता । चतुरक्षरा दैवी बृहती । अधरादिनिधाने विनियोगः । आयुरित्यस्य घृतम् देवता । दैवी बृहती । आज्यस्थालीसंसर्गने विनियोगः । पुष्करवाऽस्यग्नेरित्युत्तरारणिर्देवता । षडक्षरा यजुर्गायत्री । अधरारणेरुपरि प्रसञ्जनिधाने विनियोगः ॥

गायत्रेण श्रीण्याग्नेयानि ।

गायत्रेण त्वा, त्रैष्टुभेन त्वा, जागतेन त्वा, एतान्यग्निदैवतानि । मन्थने विनियुक्तानि । त्रयाणामपि एकादशाक्षरा यजुस्त्रिष्टुप् ॥

भवतं नः पङ्क्तिः ।

भवतम् न इत्यस्याः पङ्क्तिश्छन्दः । पञ्चपदा चत्वारिंशदक्षरा पङ्क्तिः । अत्र तु तृतीयः षडक्षरः । चतुर्थो दशाक्षरः । अन्येऽष्टाक्षराः । तेनेयमार्षी पङ्क्तिरिति युक्तम् । पादानामनियताक्षरत्वात् ॥

अग्नावग्निर्विराट् ।(१)

अग्नावग्निरित्यस्य विराट्पङ्क्तिश्छन्दः । क्वचित्तत्र विराडिति पाठः । दशाक्षरैश्चतुर्भिः पादैर्विराड्भवति" विराड्दशकाइत्युक्तेः" । अत्र तु द्वितीयचतुर्थावेकादशाक्षरौ । तेन द्वाभ्यामक्षराभ्यामूना त्रिष्टुबपि विराडित्युच्यते । "द्वाभ्याम् विराड्स्वराजावित्युक्ते" । तेनेयम् विराट्त्रिष्टुप् । न तु विराटपङ्क्तिरिति ॥

एतयोर्निर्मथ्याह्वनीयावग्नी देवते ।

एतयोर्भवतम् नः । अग्नावग्निरित्येतयोर्निर्मथ्याहवनीयावग्नी देवते । निर्मथ्यश्च हवनीयश्च निर्मथ्याहवनीयौ एतौ द्वावग्नी देवते इत्यर्थः, भवतम् न इत्यस्याग्न्यावग्निसमासने विनियोगः । अग्नावग्निरित्यस्याध्याहुतिहोमे विनियोगः ।

---

(१) अग्नाऽवग्निरिति क्वचित्पाठः ॥

आपतये वायव्यम् ।

आपतयइत्येतद्यजुर्वायुदेवतम् । षट्त्रिंशत्यक्षरा प्राजापत्या त्रिष्टुप् । मोदस्य वमदाने विनियोगः ॥

अनाधृष्टमाज्यम् ।

अनाधृष्टमसीत्याज्यम् देवता आर्षेण द्वाचत्वारिंशदक्षरा प्राजी उष्णिक् । तानूनप्त्रसंमर्शने विनियोगः ॥

अग्ने व्रतपाऽआग्नेयम् ।

अग्ने व्रतपाइत्येतद्यजुरग्निदेवतम् समिदाधाने विनियुक्तम् । अष्टापञ्चाशदक्षरत्वाद्द्वाभ्यामधिका शक्वरी वा । द्वाभ्यामूना अतिशक्वरी वा साम्नी षड्‌क्तिर्वा ॥

अꣳशुरꣳशु. प्रकृतिश्चतुरवसाना सौमी । (१)

अꣳ॰ शुरꣳ॰ शुष्ट इति इयमृक्चतुरवसाना प्रकृतिच्छन्दस्का च-त्वार्यवसानानि विरामस्थानानि यस्याम् सा तथा । सौमी सोम-देवता । सोमाप्यायने विनियुक्ता । चतुरशीत्यक्षरा प्रकृतिः । अन्त्यो-ऽर्द्धर्चो लिङ्गोक्तदेवत । अनुष्टरशुष्टइत्यस्या अन्त्योऽर्द्धर्चः ॥

एष्टारायऽइत्यं (२)लिङ्गोक्तदेवतः ।

अग्निर्दैवतेति माधवाचार्याः । अन्येषाम् तु रायः क्षतम्, द्यावापृथिव्यौ वा । प्रस्तरनिह्नवेऽस्य विनियोग. ॥

या ते (३)त्रीण्य.ग्नेयानि ।

या ते अग्नइत्यादीनि त्रीणि यजूंष्यग्निदेवतानि उपसत्सु स्रुवे-णाज्यहोमे विनियुक्तानि प्रत्यहम् क्रमेण प्रथमा स्वराड्विष्टुप् । अग

---

(१) प्रकृतिः षडवसाना इति कात्यायनसर्वानुक्रमे पाठः ॥

(२) अन्त्योऽर्द्धर्चो इति कात्यायनसर्वानुक्रमे विशेषः पाठो बोध्यः ॥

(३) अग्ने इति पदमधिकं कात्यायनसर्वानुक्रमे ॥

त्रिंशदक्षरत्वात् । हरिरयया, रक्षामया, अपि एकाक्षराधिके ऋचौ त्रिष्टुभावेव ।

तप्तायनी चत्वारि पार्थिवानि ।

तप्तायनी मेऽसीत्यादीनि चत्वारि यजूंषि पार्थिवानि पृथिवीदेवतानि चतुर्णामपि चात्वालपरिलेखने विनियोगः । तप्तायनी षडक्षरा यजुर्गायत्री, वित्तायनी च तथैव । तृतीयचतुर्थौ सप्ताक्षरे दैव्यौ जगत्यौ यजुरुष्णिहौ वा ॥

विदेदाग्नेयम् ।

विदेदग्निरित्येतद्यजुरग्निदेवतम् । चात्वाले प्रहरणे विनियुक्तम् । अष्टादशाक्षरा ऋग्गायत्री ॥

अग्नेऽङ्गिरो योऽस्यामनु त्वा लिङ्गोक्तानि ।

एतानि त्रीणि यजूंषि लिङ्गोक्तदेवतानि । तत्र अग्नेऽङ्गिरः । अग्निर्देवता । एकादशाक्षरा यजुस्त्रिष्टुप् । पुरीषहरणे विनियोगः । योऽस्याम् । अग्निरेव देवता । द्वाविंशत्यक्षरा साम्नी त्रिष्टुप् । पुरीषनिवापे विनियोगः । अनु त्वा । अथ उत्तरवेदिम् प्रतिनीयमानो अग्निर्देवता । अष्टाक्षरा प्राजापत्या गायत्री । पुरीषहरणे विनियोगः । यो द्वितीयस्याम् । यस्तृतीयस्यामित्यनयोरप्यग्निदैवता । "(१)स वा अग्नीनामेव नामानि गृह्णन्हरति यान्वा अमून् देवा अग्रेऽग्नीन्हितवाय प्राहरत ते प्राधन्वस्तऽइमा एव पृथिवीरुपामर्पमिमामह्वैव हि अस्याः परे इतिश्रुतेः" । परे अन्तरिक्षम् द्यौश्च । द्वितीया पृथिव्यन्तरिक्षम् तृतीया पृथिवी द्यौरिति ॥

सिंह्यसि त्रयाणाम् वेदिः

सिंह्यसि सपत्नसाहीत्यादीनाम् त्रयाणाम् उत्तरवेदिर्दैव-

(१) इयमपि शतपथीयाग्निरकाण्डस्य श्रुतिर्बोध्येति ॥

ताः । प्रथमस्य उत्तरवेदिव्यूहने विनियोगः । द्वितीयस्य प्रोक्षणे । तृतीयस्य सिकतोपकिरणे । त्रयाणामपि पञ्चदशाक्षरा आसुरी गायत्री छन्दः ॥

इन्द्रघोषस्त्वोत्तरवेदिः ।

इन्द्रघोषस्त्वा । प्रचेतास्त्वा । मनो जवास्त्वा, विश्वकर्मा त्वा, इत्येतेषाम् चतुर्णां यजुषाम् उत्तरवेदिर्देवता । उत्तरवेदिप्रोक्षणे विनियोगः । तत्र प्रथमचतुर्थयोस्त्रयोदशाक्षरा आसुरीत्रिष्टुप् । द्वितीयस्य दशाक्षरा यजु पङ्क्तिः । तृतीयस्य चतुर्दशाक्षरा आसुर्युष्णिक्साम्नी ष्णिग्वा ॥

इदमहमापम् ।

इदमहन् तप्तम् वारित्यस्यापो देवताः । षोडशाक्षरा प्राजापत्यानुष्टुप् । प्रोक्षणीशेषस्य निनयने विनियोगः ॥

सिᳬहासि पञ्चानाम् वाक् ।

सिᳬहासि स्वाहेत्यादीनाम् पञ्चानाम् यजुषाम वाग्देवता । नाभिश्राघारणे विनियोगः । प्रथमस्य दैवीपङ्क्तिश्छन्दः । द्वितीया नवाक्षरा यजुर्बृहती । तृतीया त्रयोदशाक्षरा आसुर्यनुष्टुप् । चतुर्थी षोडशाक्षरा साम्नानुष्टुप् । पञ्चमी चतुर्दशाक्षरा साम्नीष्णिक् ॥

भूतेभ्यः स्रुक् ।

भूतेभ्यस्त्वेत्यस्य स्रुग्देवता चतुरक्षरा दैवीबृहती स्रुगुद्यमने विनियोग ।

ध्रुवोऽसि परिधयस्त्रयाणाम् ।

ध्रुवोऽसि, ध्रुवक्षिदसि, अच्युतक्षिदसीत्येतेषाम् त्रयाणाम् परिधयो देवताः पैतुदारवपरिधिपरिधाने विनियोगः । ध्रुवोऽसि ।

ष्टाक्षरा प्राजापत्या गायत्री । द्वितीयतृतीययोर्दशाक्षरा यजुः पङ्क्तिः ॥

अग्नेः (१)सम्भारा गुल्गुल्वादयः ।

अग्नेः पुरीषमसीत्यस्य गुल्गुलुसुगन्धितेजनवृष्णीमुकाः सम्भारा देवताः । सप्ताक्षरा दैवी जगती : सम्भारनिर्वपणे विनियोगः ॥१८॥

युञ्जते श्यावाश्वः सावित्रम् (२)जगतीम् ।

युञ्जते मनइतीमाम् सावित्रीम् सवितृदेवताम् । जगतीछन्दस्काम् श्यावाश्वऋषिरपश्यत् । अष्टाचत्वारिंशदक्षरा जगती चतुष्पादा । स्वाहा प्रथमयजु प्राशादार्यं चतुर्गृहीतहोमेऽस्य विनियोग ।

इदम् विष्णुर्मेधातिथिर्वैष्णवीङ् गायत्रीम् ।

इदम् विष्णुरितीमामृचम् विष्णुदेवताम् गायत्रीं छन्दस्काम् मेधातिथिऋषिरपश्यत् । दक्षिणस्यानसो दक्षिणे वर्त्मनि हिरण्यन्यो परिहोमे विनियोगः । अस्याः द्वितीयः पादः सप्ताक्षरः तेनैकाना ॥

इरावती वसिष्ठस्त्रिष्टुभम् ।

इरावती धेनुमती इतीमामृचम् विष्णुदेवताम् त्रिष्टुप्छन्दस्काम् वसिष्ठऋषिरपश्यत् । अत्रैव वैष्णवीमित्यनुवर्तते । उत्तरस्यानसो दक्षिणवर्त्मनि हिरण्यन्योपरिहोमे विनियोगः । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । तृतीयपादो न दशाक्षर अन्त्यो द्वादशाक्षरः । आर्षीत्रिष्टुब्वा पादानाम नियताक्षरत्वात् ॥

देवश्रुतावक्षरौ ।

(१) अस्य सम्भारा इति कात्यायनसर्वानुक्रमटीकासहितायामपि अस्मात्स्यऋषिरिति पाठः शोध्य ॥

(२) सावित्रीमिति तत्र पाठ ॥

देवश्रुतावित्यस्याक्षधुरी देवते । अक्षधुरोपाञ्जने विनियोगः दशाक्षरा यजुःपङ्क्तिः ॥

प्राची स्वङ्गोष्ठमत्र(१) हविर्द्धानी ।

प्राची प्रेतम् । स्वङ्गोष्ठम् । अत्र रमेथामित्येषाम् त्रयाणाम् यजुषाम् हविर्द्धाने देवते । प्राची प्रेतम् त्रयोविंशत्यक्षरत्वादेकाऽधिका साम्नि त्रिष्टुप् एकोना आर्षी गायत्री वाचने विनियोगः । स्वङ्गोष्ठम् पञ्चविंशत्यक्षरत्वादेकाधिकाऽक्षराऽनुष्टुप् स्वर्जनानिमित्ते वाचने विनियोगः । अत्र रमेथाम् । दशाक्षरा यजुःपङ्क्तिः । अनसोरभिमन्त्रणे विनियोगः ॥

विष्णोर्नु तिस्रो वैष्णव्यस्त्रिष्टुभ आद्ये यजुरन्ते ।

विष्णोर्नु कम् । दिवो वा । प्रतद्विष्णुरित्येतास्तिस्र ऋचो विष्णुदेवत्यास्त्रिष्टुप्छन्दस्काः । अत्र विष्णोर्नुकमिति दशाक्षरः पादः । तेनैकोना । चतुर्थस्य व्यूहेन पूरणम् । प्रतदित्ययमपि दशाक्षर एव । तेनैयमप्येकोना । तासाम् मध्ये आद्ये प्रथमद्वितीये ऋचौ, विष्णोर्नु कम्, दिवो वा विष्णो, इत्येते द्वे ऋचौ यजुरन्ते । द्वयोरप्यन्ते विष्णवे त्वेति यजुरस्तीत्यर्थः । विष्णोर्नुकमित्यस्य दक्षिणस्यानसउपस्तम्भने विष्णवे त्वेत्यस्य च स्थूणानिखनने विनियोगः । दिवो वेत्यस्योत्तरस्यानसउपस्तम्भने (२)विष्णवे त्वेत्यस्य च स्थूणानिखनने विनियोगः । चतुरक्षरा दैवी बृहतीछन्द. प्रतदित्यस्य च वाचने विनियोगः ॥

विष्णोर्नु प्रतद्दीर्घतमा औतथ्यः ।

विष्णोर्नु कम् । प्रतद्विष्णुरित्येतयोरुतथ्यस्यापत्यम् दीर्घतमा

---

(१) रमेथामिति पदमधिकं तत्र सर्वानुक्रमे । हविर्द्धानीत्यनन्तरमधिकः पाठो मेयः ।

(२) उत्तरहविर्द्धानस्योपस्तम्भन इति पाठः ॥

सप्ताक्षराणि ॥

## विष्णोरराटम् पञ्च वैष्णवानि ।

विष्णोरराटमित्यादीनि पञ्च विष्णुदेवतानि । प्रथमस्य सप्ताक्षरा दैवी जगती वाचने विनियोगः । द्वितीयस्य पञ्चाक्षरा दैवीपङ्क्ति र्वाचने विनियोगः । विष्णो स्यू दैवीपङ्क्तिः । सीवने विनियोग । विष्णोर्ध्रुवोऽसि दैवीपङ्क्तिः । ग्रन्थिकरणे विनियोगः । वैष्णवमसि दैवीपङ्क्तिः । हविर्धानाभिमर्शने विनियोग ॥

## अग्ने देऽग्निः ।

अग्नये त्वायेसील्यस्याग्निर्देवता । षडक्षरा यजुर्गायत्री । अभ्यादाने विनियोग ॥

## इदमहꣳ रक्षोघ्नम् ।

इदमहमित्येतद्रक्षोघ्नम् यजुः । चतुर्दशाक्षरा साम्नीत्रिष्टुप् । उपरवपरिलेखने विनियोग । अथवा रक्षोघ्नम् देवता ।

## बृहन्नौपरवम् ।

बृहन्नसीत्यौपरवम् उपरवदैवतम् उपरवखनने विनियोगः । अष्टादशाक्षरा साम्नीबृहती ॥

## इदमहम् पञ्च लिङ्गोक्तानि ।

इदमहम् तम् वलगमित्यादीन्युत्कृत्य इ्किरामीत्यन्तानि पञ्च यजूꣳषि लिङ्गोक्तदेवतानि । । वलगदेवतानीत्यर्थः । पञ्चमस्य उत्कृत्यदेवतेति विशेष । कृत्यादेवत्या इति कात्यायनभाष्ये । पञ्चानामपि पांसूद्वापे विनियोग । आद्या चतुर्विंशत्यक्षरा यार्ची । अनुष्टुप्द्वितीया षड्विंशत्यक्षरा द्वाभ्यामधिका यार्ची अनुष्टुप् । एकेनोना आर्ग्बृहती वा । तृतीयाचतुर्थ्यौ अप्येवम् । पञ्चमी यजुर्गायत्री दैवीत्रिष्टुब् ॥

स्वराडस्युपरवाणि चत्वारि ।

स्वराडसि सपत्नहेत्यादीनि चत्वारि यजूंष्युपरवाणि उपरवाभ्यान् देवताइत्यर्थः । उपरवाणामवमर्शने विनियोगः । तत्र प्रथमतृतीयचतुर्थानाम् अष्टाक्षरा प्राजापत्या गायत्री । द्वितीयस्य यजुर्बृहती ॥

रक्षोहणो वः सप्त वैष्णवानि ।

रक्षोहणो वो वलगहनइत्यादीनि वैष्णवास्थेत्यन्तानि सप्त यजूंषि विष्णुदेवतानि प्रथमस्य षोडशाक्षरा प्राजापत्यानुष्टुप् । उपरवखनने विनियोगः । द्वितीयस्य व्यूहेनाष्टादशाक्षरा ऋग्गायत्री । प्रादेशोन्मितावरसयने विनियोगः । तृतीयस्य ऋग्गायत्री । बर्हिषामवस्तरणे विनियोगः । चतुर्थस्याष्टादशाक्षरा ऋग्गायत्री । अधिषवणफलकोपधाने विनियोगः । पञ्चमस्य सप्तदशाक्षरत्वादेकोना ऋग्गायत्री एकाधिका साम्न्यनुष्टुब्वा पर्यूहणे विनियोगः । षष्ठस्य दैवीपङ्क्तिः अधिषवणचर्मास्तरणे विनियोगः । सप्तमस्य चतुरक्षरा दैवीबृहती । ग्राव्णान् निधाने विनियोगः ॥

यवोऽसि यवः ।

यवोऽसीत्यस्य यवो देवता । चतुर्दशाक्षरा साम्न्युष्णिग्वा यवावपने विनियोगः ।

दिवे त्वौदुम्बरी ।

दिवे त्वादीनाम् । त्रयाणाम् । यजुषामौदुम्बरी देवता । औदुम्बर्यौक्षणे विनियोगः । प्रथमा दैव्यनुष्टुप् त्र्यक्षरा । द्वितीया षडक्षरा यजुर्गायत्री । तृतीया चतुरक्षरा दैवीबृहती ॥ (१)

(१) औदुम्बर्या अवप्रोक्षणे वि० । अन्तरिक्षे त्वा प्रजापति ऋ० ३ द वसो देवता यजुर्गायत्री छन्दः औदुम्बर्याः मध्यप्रोक्षणे वि० । पृथिव्यै त्वा औदुम्बरी देवता दैवी बृहती छन्दः औदुम्बर्याः मूलप्रोक्षणे वि०

शुन्धन्ताम् पित्र्ये ।

शुन्धन्तामिति द्वे यजुषी पितृदेवत्ये । दशाक्षरा यजुः पङ्क्तिः प्रथमा । शेषावनयने विनियोगः । द्वितीया सप्ताक्षरा दैवीजगती । बर्हिषाम् स्तरणे विनियोग । पित्र्यत्वात् उदकस्पर्शः ॥ (१)

उद्दिवम् पञ्चानामौदुम्बरी ।

उद्दिवᳪ स्तभानेत्यादि ध्रुवासीत्यन्तानाम पञ्चानाम् यजुषामौदुम्बरीदेवता । औदुम्बर्युच्छ्रयणे विनियोगः । प्रथमस्य व्यूहेनाष्टादशाक्षरा स्वगायत्री ।

द्युतानस्त्वा ।

एकविंशत्यक्षरत्वादेकाधिका स्वराडनुष्टुप् औदुम्बर्यावटमध्ये प्रवेशे वि० । ब्रह्मवनि त्वा इत्यस्य स्वगायत्रीएकोना साम्नपङ्क्तिर्वा । पांसुभिः पर्यूहणे विनियोगः । ब्रह्म दृᳪह पञ्चदशाक्षरा आसुरी गायत्री पर्युपणे विनियोगः । ध्रुवासि व्यूहने चतुर्विंशत्यक्षरा साम्नजगती । बाधने विनियोगः ॥ (२)

घृतेन द्यावापृथिवी ।

घृतेनेत्येतद्यजुर्द्यावापृथिवीदेवतम् । एकादशाक्षरा यजुस्त्रिष्टुप् विशाखे होमे विनियोग ॥

इन्द्रस्यैन्द्रम् ॥

इन्द्रस्य छदिरित्यैन्द्रदेवतं । साम्नीपङ्क्तिः । छदिरारोपणे विनियोगः ।

---

(१) शुन्धन्तां प्रजा० पितरो देवता यजु पङ्क्तिश्छन्दः शेषवनयने वि० । पितृषदना प्रजा० पितरो दे० बर्हिषां प्रास्तरे वि० । ईदृश पद्धति पाठो बोध्यः ॥

(२) द्युतानस्त्वा औदुम्बरीदे० स्वराडनुष्टुप् उदुम्बर्या अवटमध्ये प्रवेशे वि० । ब्रह्मवनि त्वा प्र० ऋ० औदुम्बरीदे० स्वगायत्री पांसुभिः पर्यूहणे वि० । अग्रे. पर्युपणे वि० इति पद्धतिपाठः ॥

परि त्वा मधुच्छन्दा अनिरुक्तामैन्द्रीमनुष्टुभम् ॥

परि त्वा गिर्वणइतीमामृचमनिरुक्तां मध्ये इन्द्रपदप्रयोगशून्यामिन्द्रीत्यामनुष्टुभं मधुच्छन्दा ऋषिरपश्यत् । परिवारेण विनियोगः ॥

इन्द्रस्येन्द्राणि त्रीणि ॥

इन्द्रस्य स्यूरसीत्यादीनि त्रीण्यैन्द्राणि इन्द्रदेवत्यानि । प्रथमा दैवीपङ्क्ति सीवने विनियोगः । तृतीया यजुर्गायत्री । ग्रन्थिकरणे विनियोगः । ऐन्द्रमसि । दैवीबृहती । निष्ठितामिमर्शने विनियोगः ॥

चतुर्थं वैश्वदेवम् ॥

चतुर्थं वैश्वदेवमसीत्येतद्यजुर्विश्वेदेवदेवतं । यजुर्गायत्रीआग्नीध्रामिमर्शने विनियोग. ॥ २० ॥

विभूरष्टानां धिष्ण्या अग्नयः ॥ (१)

विभूरसि प्रवाहणइत्यादिशुन्ध्यूरसीत्यन्तानामष्टानां यजुषां धिष्ण्याग्नयो देवताः । विभू प्राजापत्या गायत्री आग्नीध्रीये पुरीषनिवापे विनियोगः । वह्निः यजुर्बृहती होतृधिष्ण्ये पुरीषनिवापे विनियोगः । श्वात्रोऽसि । यजुर्गायत्री । तुथोऽसि दैवीजगती । उशिगसि यजुर्गायत्री । अङ्घारिः । प्राजापत्यागायत्री । अवस्यूर्गायत्र्येव । शुन्ध्यूः गायत्री । सर्वेषां पुरीषनिर्वापे विनियोगः ॥

सम्राडाहवनीयः ॥

सम्राडसीत्यस्याहवनीयो देवता । दैवीजगती । चाहवनीयेऽवणे विनियोग ॥

---

(१) एतस्य सूत्रस्य खण्डद्वयामे काण्वसर्वानुक्रमे"ऋतधामौदुम्बरी समुद्रोऽसि-ब्रह्मासनमोजोऽसि शाल्वाद्वार्योऽसि प्राजहितः । अयं पाठो माध्यन्दिनसर्वानुक्रमे-सूत्रखण्डचतुष्टयामे पूर्वापरीभावेण वर्तते ॥

परिपदो वहिष्पवमानदेशः॥

परिपदाऽसीत्यस्य बहिष्पवमानदेशो देवता। यजुर्बृहती बहिष्पवमानदेशस्थेक्षणे विनियोगः॥

नभोऽसि चात्वालः॥

नभोऽसि मन्त्रस्य चात्वालो देवता। यजुर्गायत्री। चात्वालेक्षणे विनियोगः।

मृष्टोऽसि शामित्रः॥ (१)

मृष्टोऽसीत्यस्य शामित्रो देवता। प्राजापत्या गायत्री। शामित्रेक्षणे विनियोगः॥

ऋतधामौदुम्बरी॥

ऋतधामासीत्यस्यौदुम्बरी देवता। प्राजापत्या गायत्री। औदुम्बरीक्षणे विनियोगः।

समुद्रोऽसि ब्रह्मासनम्॥

समुद्रोऽसीत्यस्य ब्रह्मासनन्देवता। प्राजापत्या गायत्री। ब्रह्मासनेक्षणे विनियोगः॥

अजोऽसि मार्जालीयः॥

अजोऽस्येकपादित्यस्य मार्जालीयो देवता। दैवीपङ्क्तिः। मार्जालीयेक्षणे विनियोगः॥

अहिरसि प्राजहितः॥

अहिरसीत्यस्य प्राजहितो देवता। यजुर्गायत्री प्राजहितेक्षणे विनियोगः। समूढोऽसि विश्ववेदा इति मूलान्तरस्य यजुर्गायत्रीछन्द

(१) समूढोऽस्युकर। इति काण्वसर्वानुक्रमेऽधिक पाठो मन्त्रश्च 'समूढोऽसि विश्ववेदा' इति तैत्तिरीयशाखाभाष्ये दृष्टः॥

चत्वारो देवता चत्वारोत्करे विनियोगः ॥

वागसि सदः ॥

वागसीत्यस्य सदो देवता । यजुर्बृहती सदोऽभिमर्शने विनियोगः ॥

ऋतस्य द्वार्यौ ॥

ऋतस्य द्वाराविल्यस्य द्वार्ये देवता । यजुःपङ्क्तिः । १० द्वार्ययोरभिमर्शने विनियोगः ॥

अध्वनाऽ० सूर्यः ॥

अध्वनामित्यस्य सूर्यो देवता । सूर्याभिमन्त्रणे विनियोगः ॥ व्यूहेन सप्तजगती ॥ १४ ॥

मित्रस्यर्त्विजः ॥

मित्रस्य मेल्यत्विजो देवता यजुर्बृहती ॥ २ ॥ धिष्ण्याभिमन्त्रणे विनियोगः ॥ २१ ॥

ज्योतिरसि वैश्वदेवम् ॥

ज्योतिरसि विश्वरूपमित्येतद्यजुर्विश्वदेवदेवतं । प्राजापत्यानुष्टुप् ॥ १६ ॥

पृषदाज्यग्रहणे विनियोग ॥

त्वऽ० सोमक्रतुभोर्गवः सोमीं गायत्रीमनवसानाम् ।

त्वऽ० सोमेत्येतामृचं सोमदैवत्यां गायत्रीछन्दस्कामनवसानां अवसानरहितां भृगोः पुत्रः क्रतुः सम्यक्पश्यत् । प्रद्योमे मखो-परि हं.मे विनियोगः । अत्र प्रथमः पादः समाक्षरः द्वितीयो व्यूहेनाष्टाक्षर इत्येकोना । स्वाहाकारस्तु पृथग्यजुः ॥

सुपायोऽअमुदेवत्यैकपदा विराड्यजुरन्ता ।

शुक्राणो अम इत्येषां विराडेकपदा । दशाक्षरैकपदेत्यर्थः । यजुरन्तो यस्याः सा यजुरन्ता । अस्या अन्ते स्वाहाकारो यजुः इत्यर्थः पर्येव द्वितीयाहुतिहोमे विनियोगः ॥

अग्ने नयागस्त्यःश्वाग्नेयीं त्रिष्टुभम् ॥

अग्ने नय सुपथेतीमामथ अग्निदेवतात्रिष्टुभं अगस्त्यऋषिर्दृष्टवान् । अत्र तृतीयपादे व्यूहेनैकादशाक्षरपूरणं । वाचने विनियोगः ॥

अयं नस्त्रिष्टुब्यजुरन्ताग्नेयी ॥

अय नोऽग्ने इत्येषा त्रिष्टुबग्निदेवता । माग्नीध्रीये वैसर्जनहोमे विनियोगः, स्वाहाकारान्ते यजु । व्यूहेनछन्दः पूर्तिः।

उरु विष्णो वैष्णव्यनुष्टुब्यजुरन्ता । ·

उरु विष्णो इत्यस्य विष्णुर्देवता अनुष्टुप्छन्दः । यजुरन्ता । स्वाहाकारान्ता । आहवनीये वैसर्जनहोमे विनियोग । व्यूहेन छन्दः पूरणम् ॥

देव सवितः सावित्रम् ॥

देव सवितरेवते सोमइत्येतद्यजु सवितृदैवतं त्र्यायत्रीछन्दः । हविर्धाने सोमनिधाने विनियोगः ॥

एतत्त्वं सौम्यम् ।

एतत्त्वं सोमेत्येतद्यजु. । सोमोदेवता प्राजापत्यात्रिष्टुप् । विसृज्योपस्थाने विनियोग ॥

स्वाहा निर्लिङ्गोक्तदैवतम् ।

स्वाहा निर्वरुणस्येत्येत लिङ्गोक्तदैवतम् । यजुस्त्रिष्टुप् हविर्धानाभिक्रमणे विनियोग ।

अग्ने व्रतपा ऽआग्नेयम् ।

र्थां दाढमसोपमपसव्यप्रकयूपस्य बर्हिष्ठा इविषाो मूलो निधा-ने विनियोगः ।

उपावीस्तृणम् ।

उपावीरसीत्यस्य तृणं देवता दैवीपङ्क्तिः तृणादाने विनियोगः ।

उपदेवां लिङ्गोक्तम् ।

उपदेवां देवीरित्येतद्यजुर्लिङ्गोक्तदेवतम् । पशवोदेवताः । त्वष्टा-चेत्यर्थः । एकान्नत्रिंशदक्षरत्वादेकाधिका ऋचां पङ्क्तिः । एकोना प्राजापत्या जगती वा तृणेन पशुस्पर्शने विनियोगः ।

ऋतस्य त्वा पशुः ।

ऋतस्य त्वा देवहविरित्यस्य पशुर्देवता । अनुष्टुप् । पशोरन्तरा शृङ्गबन्धने विनियोगः । (१)

अग्नीषोमाभ्यां लिङ्गोक्तम् ।

अग्नीषोमाभ्यां जुष्टमित्येतद्यजुर्लिङ्गोक्तदेवतम् । अग्नीषोमदेवत-मित्यर्थः । यजुस्त्रिष्टुप् यूपे पशुबन्धने विनियोगः ।

अद्भ्योऽपां पशुः ।

अद्भ्यस्त्वौषधीभ्यः, अपां पेरुरित्यनयोः पशुर्देवता । अद्भ्यः आर्षी पङ्क्तिः पशुप्रोक्षणे विनियोगः । अपां पेरुः प्राजापत्या बृहती । आस्योपग्रहणे विनियोः ।

आपो देवीरापम् ॥

आपो देवी स्वदतेत्येतदब्दैवतं । पशोरधस्तादुपोक्षणे विनियोग । आसुरी गायत्री ।

सन्ते पशुः ।

---

(१) देवस्य त्वेत्यस्य प्रजापतिः सविता देवता प्राजापत्या बृहती छन्दः. पशोर्यूपे बन्धने विनियोग इति पद्धत्या. पाठोऽधिको बोध्यः ॥

समेषां प्राणदत्यादीनां मयांणां पशुर्दैवता । पशुसमञ्जने विनियोग । तत्र सर्व प्राण । वत्रु पङ्क्ति पशुललाटाञ्जने, समञ्जाति । दैवीजगती । पक्षंमयोरञ्जने । सैन्यप्रपति प्राजापत्या गायत्री पशुश्रोण्यञ्जने ।

## घृते न खुरमासौ ।

घृतेनाक्तौ पशू नत्यस्य खरमासौदैवतं यजुर्बृहती । धाक्षं भरभ्यां पशुललाटोपसर्गने विनियोग ः

## रेवति याक् ।

रेवति यजमानेदस्यस्य वाग्देवता । साम्नीत्रिष्टुक् । यजमानवाचने विनयोगः ।

## वर्षो त्वयाम् ।

वर्षो वर्षयसीत्यस्य तृणं देवता प्राजापत्यनुष्टुप् । शासित्रस्य पशुस्पयत्वेपे विनियोगः ।

## स्वाहा देवे ।

स्वाहा देवेभ्यो देवेभ्य स्वाहेत्येते यजुषी देवे देवदेवत्ये । दैवीपङ्क्ति । परियमध्याद्युपहोमे विनियोगः ॥ २१ ॥

## माऽहिर्भूरज्जु ः ।

माऽहिर्भूरित्यस्य रज्जुर्देवता । दैवीजगती । पशुनियोजन्याबालासे प्रासने विनियोगः ॥

## नमस्ते यम्रः ।

नमस्त आतानेत्यस्य यम्रो देवता पत्नीशाचने विनियोगः । साम्नजगती ॥

## देवीरापोऽट्टर्थमापमट्टर्थमाधीः ।

हननमन्त्राणां । रक्षोदैवते । निरस्त दैवीपङ्क्तिः । लोहिताक्ततृण-स्वीकारे प्रासने विनियोगः । इदमहं । व्यूहेन प्राजापत्या जगती । यजमानस्य तृणाभितिष्ठाने विनियोगः ।

**घृतेन द्यावापृथिव्यम् ।**

घृतेन द्यावापृथिवीत्येतद्द्यावापृथिवीदैवतं । प्रोर्णवने विनियुक्तं । यजुर्जगती ।

**वायो वायव्यम् ॥**

वायो वेरित्येतद्यजुर्वायुदैवत्यं । यजुर्गायत्री । आहवनीये तृणाप्रासने विनियोगः ।

**अग्निराज्यस्याग्नेयम् ।**

अग्निराज्यस्येत्येतदग्निदैवतं यजुर्बृहती । वपाभिघारणे विनियोगः ।

**स्वाहाकृते वपाश्रपण्यौ ।**

स्वाहाकृते ऊर्ध्वनभसमित्यस्य वपाश्रपण्यौ देवते । आसुरीगायत्री । वपाश्रपण्योरनुप्रासने विनियोगः ।

**इदमापऽआपी महापङ्क्तिः त्र्यवसाना । (१)**

इदमापः प्रवहतेतीयमृगापी अब्दैवत्या । त्र्यवसाना त्रिषु स्थानेष्ववसानं यस्याः सा त्र्यवसाना यस्या महापङ्क्तिश्छन्दः यस्याः अष्टाक्षरा षड्पादा महापङ्क्तिः, "षडष्टका वा महापङ्क्तिः" इत्युक्तत्वात् ॥ पावमानवाक्य पाद, इदमापहत्यस्याक्य पादः पावमानसञ्ज्ञकः पवमानयमुपस्थित्यय मार्जने विनियोग इदमापहत्यस्याः ।

**सन्नो हृदयम् ।**

---

* कण्वसर्वानुक्रमेऽयं पाठो नास्ति चात्रापि वक्ष्यते ॥

समुद्रं गच्छ स्वाहेत्यारभ्य मनो मे हार्दि यच्छेत्यन्तानि द्वादशयजूंषि लिङ्गोक्तदेवतानि । समुद्राद्यन्तरिक्षादिदेवतानि । तेषां हविर्भोक्तृत्वात् । आद्यानामेकादशानामुपयड्ढोमे विनियोगः । मनोमद्द्यस्य मुखविमार्जने । समुद्रं दैवीजगती । अन्तरिक्षं प्राजापत्यागायत्री । देवं यजुः पङ्क्तिः, मित्रावरुणौ यजुर्बृहती । अहोरात्रे प्राजापत्यागायत्री, छन्दांसि दैवीजगती । द्यावा । यजुर्बृहती । यज्ञं । यजुर्गायत्री । सोमं । यजुर्गायत्री, दिव्यं । प्राजापत्या गायत्री । अग्निं । यजुः पङ्क्तिः ।

मनो मे । दैवीजगती ।

## दिव्यन्तिसृभः ।

दिवं ते धूमद्द्यस्य स्वरुर्देवता । परउष्णिक् । स्वरुहोमे विनियोगः ।

## माऽपो हृदयशूलम् ।

माऽपो मौषधीरित्यस्य हृदयशूलं देवता यजुरुष्णिक्" । श्रौतसूत्रोक्ताया शुगसि तमभिशोचे योऽस्मान्द्वेष्टि यं च वयं द्विष्म"इत्यस्याः । हृदयशूलदेवता । शुष्कार्द्रसन्धौ हृदयशूलोपगूहने विनियोगउभयोः

## धाम्नोधाम्नो वरुणम् ।

सामबृहतीछन्द. धाम्नोधाम्नइत्येतद्यजुर्वरुणदेवतम् । साम्नीउष्णिक् । हृदयशूलोपगूहनएव विनियोग. ।

## यदाहुर्वरुणो गायत्र्यनवसाना ।

यदाहुरघ्न्याइतीयमृक् । वरुणदेवत्या गायत्रीछन्दस्का अनवसाना । अवसानवर्जिता । अत्र प्रथमः सप्ताक्षरः तन्नियमिकोना । हृदयशूलोपगूहनएव विनियुक्ता ।

सुमित्रिया नऽआपः ।(१)

सुमित्रिया नइत्येतद्यजुरब्दैवतं । आसुर्यनुष्टुप् । अपामुपस्पर्शनेऽभिमन्त्रणे वा विनियुक्ता ।

हविष्मतीर्लिङ्गोक्तदेवताऽनुष्टुप् ।

हविष्मतीरिमाइतीयमृक् लिङ्गोक्तदेवता अबादिदैवतेत्यर्थः । अस्या अनुष्टुप्छन्दः । वसतीवरीणां ग्रहणे विनियोगः ।

अग्नेर्वश्चत्वार्यापानि ।

अग्नेर्वोपन्नगृहस्येत्यादीनि चत्वारि यजूंष्यब्दैवतानि अग्नेर्वोऽपन्नगृहस्य आसुरीगायत्री वसतीवरीणां शालाद्वार्यमपरेण निधाने विनियोगः, इन्द्राग्न्योः प्राजापत्यागायत्री। दक्षिणस्यामुत्तरवेदिश्रोणौ निधाने विनियोगः, उत्तरश्रोणौ च। मित्रावरुणयोर्यजुस्त्रिष्टुप् । उत्तरस्यामुत्तरवेदिश्रोणौ वसतीवरीनिधाने विनियोगः विश्वेषां यजुस्त्रिष्टुप् । आग्नीध्रे वसतीवरीनिधाने विनियोगः ।

अमूरापीं गायत्रीं मेधातिथिः ।

अमूर्याइतीमामब्दैवतां गायत्रीछन्दस्कां मेधातिथि ऋषिरपश्यत् । इयं पादनिचृद्गायत्री । त्रयाणामपि पादानां सप्ताक्षरत्वात् । "त्रय सप्तकाः पादनिचृदिति वचनात्"। आग्नीध्रे वसतीवरीनिधानेष्वेव विनियोगः ॥

हृदे सौम्यनुष्टुप् ॥

हृदे त्वा मनसे त्वेतीयमृक् सोमदेवत्यानुष्टुप् । व्यूहेन छन्दःपूर्त्तिः सोमोपाहरणे विनियोगः ।

सोम राजन्त्सौम्ये ।(२)

---

(१) इदमाऽऽआप्यन्ताम् । इति काण्वसर्वानुक्रमेऽधिकः पाठः ॥

(२) हृदे त्वा सोम राजन्विश्वास्त्वा(?) सौम्यानि इति काण्वसर्वानुक्रमपाठः ॥

यमग्ने पृत्सित्येतां अग्निदेवत्यां गायत्रीं मधुच्छन्दाऽपश्यत् । प्रवरणीमस्त्रहोमे तदभावे चतुर्गृहीतहोमे विनियोगोऽग्निष्टोमे । उक्थे प्रथमपरिध्यालम्भे । षोडशिनि ललाटालम्भे । अतिरात्रे छदिरालम्भे । प्रत्यक्षः पादः । सप्ताक्षरः । तेनैकोना ।

## आदद्ये ग्रावा ।

आददे रावासीत्यस्य ग्रावा देवता । ग्राव्णपादाने विनियोगः । आर्षीपङ्क्तिः ।

## निग्राभ्याऽग्रायम् ।

निग्राभ्यास्थेत्येतद्यजुरापः । अब्देवत । व्यूहेन प्रकृतिश्छन्दः । निग्राभ्यासु वाचने विनियोग ।

## इन्द्राय त्वा पञ्च सौम्यानि ।

इन्द्राय त्वा वसुमतइत्यादीनि पञ्चयजूंषि सोमदेवत्यानि । सोममाने विनियुक्तानि । इन्द्राय त्वा यजुर्जगती । द्वितीया यजुरनुष्टुप् । तृतीयापि सैव चतुर्थी यजुरनुष्टुप् । पञ्चमी यजुर्बृहती ।

## यत्ते सौमी विपरीता बृहती ।

यत्ते सोम द्विवीतीयस्य सोमदेवत्या । विपरीता बृहतीत्यस्याः प्रथमतृतीयो पादावष्टाक्षरौ द्वितीयचतुर्थौ द्वादशाक्षरौ सा विपरीता बृहती । युक्तो चे विपरीतेत्युक्ते, मितालम्भने विनियोगः । व्यूहेनाचोभयोर्द्वादशाक्षरपूर्त्ति । तेनास्मै यजमानायेति तृतीयः पादः । उदरायइत्यादि चतुर्थो द्वादशाक्षरः ।

## स्वाचाः पथ्याबृहती ।

स्वाचास्थ वृत्रतुरइत्यस्याः पथ्याबृहतीछन्दो निग्राभ्या देवताः

---

(१) यजुष्ट्वमित्यवैक पाठ कण्वसर्वानुक्रमे ॥

निग्राभ्यासेके विनियोगः । यस्यास्तृतीयः पादो द्वादशाक्षरः अन्ये चयोऽष्टाक्षराः सा पथ्याबृहती, पथ्यापूर्वे चेत्तृतीय इत्युक्तं, द्वाभ्यामधिकेयम् ।

मा भेः सोम्यसदृर्भ्यं द्यावापृथिव्यमह्न गृ ।

मा भेर्मा स इत्यस्यार्धर्चं सोमदेवत्य । अर्धं द्यावापृथिवीदेवत सम्प्रगृह्य सोमं प्रहरणे विनियोगः । ऋचौ त्रिष्टुप् ।

प्रागपाक् सौम्युष्णिक् ।

प्रागपागित्येषा ऋक् सौमी सोमदेवत्या उष्णिकछन्दस्का निग्राभवाचने विनियोगः । अष्टाविंशत्यक्षरेयमार्षी उष्णिक्पादानामनियताक्षरत्वात् ।

त्वमङ्ग गोतमऽऐन्द्री पथ्यावृहतीम् ॥२५॥

पथ्यापूर्वे चेत्तृतीय इति । अत्र प्रथम द्वितीयो सप्ताक्षरौ तृतीयो द्वादशाक्षरः चतुर्थोऽष्टाक्षरः । तेन द्वाभ्यामूनाबृहती ॥ निग्राभवाचनएवास्या अपि विनयोगः ॥ २५ ॥

वाचस्पतये प्राणदैवत्या विराट् ॥ (१)

वाचस्पतय इत्येषा प्राणदेवत्या विराटछन्दस्का । नव वैराजवद्दशैमेऽष्टकपेत्येषा नवकपा विराट् । अत्र प्रथमः पादोऽष्टाक्षरः द्वितीयो दशाक्षरः । तृतीयस्त्रयोदशाक्षर इति । तेन एकोना उपांशुगृहस्य प्रथमद्वितीये गृहणे पूर्वोत्तरार्धयोः क्रमेण विनियोगः ॥

मधुमतीलिङ्गोक्तम् ।

मधुमती रित्येतल्लिङ्गोक्तदेवत । पूर्वोक्त प्राणएवोपांशुगृहरूपोऽस्य देवता । „प्राणो ह वा अस्योपांशुरिति श्रुतेः” । अत्र देवतेतिकाण्वभाष्ये । यजुर्बृहती । उपांशुगृहस्य तृतीये गृहणे विनियो-

(१) प्राणदैवत्ये एतावति काण्वसर्वानुक्रमात् ॥

गः ।

यत्ते सौम्यम् ।

यत्ते सोमादाभ्यमित्येतत्सोमदैवतं । स्वराडुष्णिक् ॥ आप्तानामंशू नां सोमे प्रक्षेपे विनियोगः ।

स्वाहोरु यजुषी लिङ्गोक्ते ।

स्वाहेति,उरुवन्तरिक्षमितीमे । यजुषी लिङ्गोक्तदैवते स्वाहाकार स्याग्निरिति मन्यमानत्वात्स्वाहाकारस्याग्निर्देवता । उर्वन्तरिक्ष- मिति रुद्रादैवतमिति प्रायुक्तं । स्वाहेत्यस्यार्षियुक्तैवो उच्चारणे विनियोगः ॥ उर्वन्तरिक्षमित्यस्य प्राजापत्याग्नयो निष्क्रमणे- विनियोग ।

स्वाङ्कृतोऽस्युपांशुः ।

स्वाङ्कृतोऽसीत्यस्योपांशुर्देवता । व्यूहेन द्वात्रिंशदक्षरा प्राजा- पत्याजगती । उपांशुग्रहे होमे विनियोगः ।

देवेभ्यस्त्वा दैवम् ।

देवेभ्यस्त्वा मरीचिपेभ्यइत्येतद्दैवदैवतं प्राणेरुपस्पर्शने विनियु- क्तम् । यजुर्बृहती ।

देवांशो लिङ्गोक्तमाभिचारिकम् ।

देवांशो यस्मै त्वेडेत्येतल्लिङ्गोक्तदैवत । सोमांशुदैवतमि त्यर्थः । तथा चाभिचारिकं । अभिचारसाधकमिदं यजु आसुरमिष्टुप् । वाजसनेयिबाहुषु शिष्टानां सोमांशूना होमे विनियोगः ।

प्राणाय ग्रह ।

प्राणाय त्वेत्यस्य ग्रहोदैवत । दैवीबृहती । उपांशुपात्रासादने विनियोगः ।

व्यानायोपांशुसवनः ।

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A.

AND

G. THIBAUT, PH. D.

No. 17

महर्षिकात्यायनप्रणीतम् शुक्लयजुःसर्वानुक्रमसूत्रम्।

याज्ञिकानन्तदेवविरचितभाष्यसहितम्।

श्रीकाशिकराजकीयप्रधानपाठशालाधीतविद्येन श्रीमिथिला
धीशतो लब्धवैदुष्यप्रतिष्ठेन काशीस्थसुप्रसिद्धविद्वज्जनस
स्थापितवेदविद्यालयप्रधानाध्यापकेन च पाठको
पाह्वश्रीमद्युगलकिशोरशर्मणा निर्मितया सर्वा
नुक्रमकौतिप्रकाशाख्यटिप्पण्या समेतम्॥

# KÁTYÁYANA'S SARVANUKRAMASUTRAS OF THE WHITE YAJUR VEDA,

WITH THE COMMENTARY OF YÁJÑIKÁNANTADEVA.

EDITED AND ANNOTATED BY PANDIT YUGALAKISHORA PATHAKA

Late Scholar of the Benares Sanskrit College.

Fasciculus II.

BENARES

PRINTED AND PUBLISHED BY

MESSRS BRAJ B. DAS & CO

AT THE BENARES PRINTING PRESS

1893

व्यानाय त्वेत्यस्योपांशुसवनो देवता। दैवीबृहती उपांशुसवनासादने विनियोग ।

उपयामगृहीतोऽस्यन्तरैन्द्रम् ।

उपयामगृहीतोऽस्यन्तर्यच्छमघवन्नित्येतदैन्द्रमिन्द्रदैवत । प्राजापत्या त्रिष्टुप् । अन्तर्यामग्रहणे विनियोग ।

अन्तस्ते मघवद्दैवत्या त्रिष्टुबुदानाय ग्रह' ।

अन्तस्ते द्यावापृथिवीतीयमृक मघवदैवत्या त्रिष्टुपछन्दस्का अन्तर्यामग्रहणएव विनियोग द्वितीयपादे व्यूहेनाक्षरपूरण । उदानाय ग्रह । उदानायत्वेत्यस्य ग्रहो देवता दैवीपङ्क्ति अन्तर्यामपात्रासादने विनियोग ।

आवायो वसिष्ठो वायव्या त्रिष्टुभम् ।

आवायो भूषेतीमामृच वायुदेवत्या त्रिष्टुभ वसिष्ठोऽपश्यत् । ऐन्द्रवायवग्रहणे विनियोग ।

तृतीया दशाक्षर । तनेकोना । वायवे त्वेति यजु दैवीबृहती। ऐन्द्रवायवग्रहणएव विनियोग ।

इन्द्रवायू मधुच्छन्दा ऐन्द्रवायवी गायत्रीम्।

इन्द्रवायूइमे इतीमामृच इन्द्रवायुदेवत्यां गायत्रीछन्दस्कां मधुच्छन्दऋषिरपश्यत् । उपयामगृहीतइतियजु व्यूहेन त्र्यगायत्री [ऐ]न्द्रवायवग्रह पुनरैन्द्रवायवग्रहण विनियोग । अयान्ते एष ते योनिरिति यजु पङ्क्ति । ग्रहासादने विनियोग ।

अय वा गृत्समदो मैत्रावरुणी म् ।

गायत्रीमित्यनुवर्तते । अय वा मित्रावरुणेतीमामृचं मित्रावरुणदेवता गायत्रीछन्दस्का गृत्समदऋषिरपश्यत् अन्ते यजुरासुरी गायत्री । मैत्रावरुणग्रहणे विनियोग ॥

राया वयन् ससवांसो ... ॥

राया वयमितीमामृच त्रिष्टुभम् वसदस्युर्ऋषिरपश्यत् । मैत्रावरुणीमित्यनुवर्त्तते । पयसा गृहस्य ग्रहणे विनियोगः । अस्मा अस्मे, एषते योनिरिति यजुः । यजुः पङ्क्तिः सादने विनियोगः ॥

या वां मेधातिथिराश्विनीं गायत्रीम् ॥

या वां कशा इतीमामृच आश्विनीं अश्विदेवत्यां गायत्रीछन्दस्कां मेधातिथिराश्विनीं गायत्रीं । या वां कशामृषिरपश्यत् उपयाम । यजुस्त्रिष्टुप् । आश्विनग्रहणे विनियोगः । एष त इति यजुर्बृहती सादने विनियोगः । अत्र यजुषां प्रजापतिरेव साधारणऋषिः ऋषिविशेषस्य अवश्यवक्तव्येनैवोक्तत्वात् ॥

तम् प्रत्नथा वत्सारः काश्यपो वैश्वदेवीं जागतीम् ॥

तं प्रत्नथेतीमामृचं विश्वे देवदेवतां जगतीं काश्यपस्य पुत्रो वत्सार ऋषिरपश्यत् । अष्टाचत्वारिंशदक्षरा द्वादशाक्षरचतुष्पादा जगती शुक्रग्रहग्रहणे विनियोगः द्वितीयपादे व्यूहः । एकोना वा । उपयामेतीमामृगायत्री यजुर्जगती वा (१) एष तइति यजुः पङ्क्तिः सादने विनियोगः अत्र शुक्रामन्थिग्रहकालीनमन्त्राणां सर्वैव देवतादिवत् संहितापाठक्रममुल्लङ्घ्य अपकृष्टः गण्डइत्याद्यधिष्ठानमसीत्यन्तान्मन्त्रानन्तरा परित्यज्याच्छिन्नस्येत्यादीनामाह ।

अच्छिन्नस्य सौम्यम् ॥

अच्छिन्नस्य ताइत्येतत्सोमदेवतं यजमानस्य जपे विनियुक्तं साम्नजगती ॥

---

(१) उपयामेति प्रजापतिर्ऋषि ... देवता सामगायत्री महः विनियोग इत्यत्र पाठः ॥

सा प्रथमैन्द्री त्रिष्टुप् ॥

सा प्रथमा सस्कृतिरितीयमृक् इन्द्रदेवत्या त्रिष्टुप् । शुक्राग्रहोमे विनियुक्ता ।

त्वमग्नेत्वयाऽग्नी लिङ्गोक्ते ॥

त्वमग्ने होतारमग्नीदित्येते यजुषी लिङ्गोक्तदेवते । प्रथमस्य होता देवता । द्वितीयस्य होता । तं प्रति कथनात् । न वस्तु गाजाय त्याभूती । जपे विनियोग ॥

अयाड्दैवी बृहती ॥

होतुरये दुघारये विनियोगः ॥ २६ ॥

अयं वेनो वेनस्य त्रिष्टुप् सोमस्तुतिरधिदैवतमधियज्ञं च ॥

अय वेनइतीयमृक् त्रिष्टुप्वेनस्य वेनो वेनते कान्तिकर्मणस्तिया स्तालो वेनाश्च चन्द्र सोम । स वेनोऽस्या ऋषी देवता । कीदृशी इयमृक् । अधिदैवतं अधियज्ञ च सोमस्तुति अनया त्रिष्टुभा अय वेन इत्यनया अधिदैवतमधियज्ञ चावस्थित सोम स्तूयते । अधिदैव तावचन्द्रात्मना स्तूयते । अधियज्ञ च यागसाधनभूतसोमा त्मना तृतीय पादोऽत्र द्याधर तेनैकामामन्थिग्रहयो विनियोग शुक्रग्रहयोऽपि विकल्पेन विनियोगोऽस्ति अयं वेन इत्येकइति ॥

मनो न त्रिष्टुप्सोमस्तुतिरधियज्ञानुवादिनी ॥

मनो न येष्वितीयमृक् त्रिष्टुप् । कीदृशी । अधियज्ञानुवादिनी शुक्रामन्थिग्रहाधियज्ञानुवादिनी । सामस्तुतिसोमोस्य देवता अस्य- र्थं सक्तुभिर्मन्थिग्रपणे विनियोग ॥

आ त्वष्ट षंडोऽपसृष्टो मर्का ऽभिचारिके ॥

इमे यजुषी अभिचारप्रयोजने । अनयोर्यजुर्गायत्रीछन्दः । शुक्रामन्थिनोरपमार्जने विनियोगः ॥

## देवास्त्वा शुक्रामन्थिनौ ॥

देवास्त्वा शुक्रपाः, देवास्त्वा मन्थिपा इत्यनयोः शुक्रामन्थिनौ देवते । हविर्धानाभिष्क्रमणे विनियोगः यजुः पङ्क्तिः ॥

## अनाधृष्टाऽसि-दक्षिणोत्तरवेदिश्रोण्यौ ॥

अनाधृष्टासीत्यनयोर्दक्षिणोत्तरे उत्तरवेदिश्रोण्यौ देवते । उत्तरवेदिश्रोण्योर्ह्रासादने विनियोगः ॥

## सुवीरः सुप्रजा इत्यनयोः शुक्रामन्थिनौ ॥

यथाक्रमं देवते । सुवीर इत्यस्य शुक्रो देवता साम्नी त्रिष्टुप् । अध्वर्योर्दक्षिणं यूपदेशं प्रतिगमने विनियोगः । सुप्रजा इत्यस्य मन्थी देवता । साम्नी त्रिष्टुप् । प्रतिप्रस्थातुरुत्तरं यूपदेशं प्रतिगमने विनियोगः ॥

## निरस्तौ द्वे आभिचारिके ॥

निरस्तः शण्डो निरस्तो मर्क इतीमे यजुषी आभिचारिके अभिचारप्रयोजने दैवीपङ्क्तिः । अभीष्टयूपशकलयोर्निरसने विनियोगः ॥

## शुक्रस्य मन्थिनः शकल(१)म् ॥

शुक्रस्याधिष्ठानमसि मन्थिनोऽधिष्ठानमसीत्यनयोः शकलं देवता । प्राजापत्या गायत्री । मानितयूपशकलयोराहवनीये प्रासने विनियोगः ॥

## ये देवासः परुच्छेपो वैश्वदेवीं त्रिष्टुभम् ॥

ये देवासो दिवीतीमास्तिस्रो विश्वेदेवदेवत्या त्रिष्टुप्छन्दस्काः परुच्छेप ऋषिरपश्यत् ॥

---

(१) "शुक्रस्य मन्थिनो द्वौ शकलौ" इति काण्वशाखीयसर्वानुक्रमसूत्रे ॥

आग्रयणोऽसि लिङ्गोक्तदेवतम् ॥

आग्रयणदेवतमित्यर्थः । ऋषिश्च प्राजी अनुष्टुप् । आग्रयणग्रहणएव विनियोगः ॥ २७ ॥(१)

॥ सोमः पवते वैश्वदेवम् ॥

सोम पवतइत्येतद्विश्वेदेवदैवतं । अत्यष्टिश्छन्दः । दशापवित्रेणाग्रयणमुपगृह्य त्रिर्हिङ्कृत्य पश्चाद्ग्रहणे विनियोगः । एष ते इति यजुर्जगती । सादने विनियोग ॥

॥ इन्द्राय त्वा लिङ्गोक्तानि ॥

इन्द्राय त्वा वृहद्वतइत्यादीनि इन्द्राविष्णुभ्यामित्येतदन्तानि सर्वाणि यजूंषि लिङ्गोक्तदेवतानि । गृह्यमाणग्रहदेवतानीत्यर्थः । तत्रेन्द्राय त्वेति प्राजापत्या पङ्क्तिः उक्थ्यग्रहणे विनियोगः । एष ते इति यजुर्बृहती सादने विनियोगः । यज्ञो देवता । देवेभ्यस्त्वेति यज्ञोदेवता । आसुरी गायत्री । प्रातः सवने उक्थ्यविग्रहणे विनियोगः मित्रावरुणाभ्यां त्वा । ऋग्गायत्री मैत्रावरुणस्योक्थ्यविग्रहणे विनियोगः । इन्द्राय त्वा । आसुरी गायत्री । ब्राह्मणाच्छंसिन उक्थ्य विग्रहणे विनियोगः इन्द्राग्निभ्यां त्वा । प्राजापत्यानुष्टुप् । अच्छावाकोक्थ्यविग्रहणे विनियोगः इन्द्रावरुणाभ्यां । ऋग्गायत्री । इन्द्राबृहस्पतिभ्यां त्वा । एकाधिका ऋग्गायत्री । इन्द्राविष्णुभ्यां त्वा एकोना ऋग्गायत्री । तृतीयसवने उक्थ्यविग्रहणे प्रातः सवनोक्तक्रमेण विनियोग ॥

मूर्धानं भरद्वाजो वैश्वानरी त्रिष्टुभम् ॥

मूर्धानं दिवइतीमामृच वैश्वानरदैवतां त्रिष्टुप्छन्दस्कां भरद्वाजऋषिरपश्यत् । ध्रुवग्रहणेऽस्या विनियोगः ॥

---

(१) इत्याग्रयणइत्येतद्यजुरित्येतत्क्वचिन्मूलीयपाठः सटीकपुस्तके ॥

ध्रुवो ऽसिध्रुवः ॥

ध्रुवोऽसि ध्रुवक्षितिरित्यस्य । ध्रुवो देवता । एकाधिका त्र्यवः प-
ङ्क्तिर्ध्रुवग्रहणएव विनियोगः ॥

ध्रुवं ध्रुवेण बृहती पूर्वोऽर्द्धर्चो ध्रौव उत्तरऐन्द्रः ॥

ध्रुवं ध्रुवेणेत्यस्या बृहतीछन्दः । तत्र ध्रुवं ध्रुवेणेत्ययं पूर्वोर्द्धर्चो
ध्रौवः ध्रुवदैवतः । अथान इत्ययमुत्तरोऽर्द्धऐन्द्रदैवतः । ध्रुवस्य
होतृचमसेऽवनयने विनियोगः । (१)अत्र प्रथमतृतीयावष्टाक्षरौ पा-
दौ । द्वितीयचतुर्थौ दशाक्षरौ । षट्त्रिंशदक्षरत्वाद्बृहती "वैराजौ
गायत्री चेति पिङ्गलोक्ता" । अत्र पादक्रमनियमा न भवन्ति षट्त्रिं-
शेर्मध्येऽष्टकौ विष्टारबृहतीत्येतल्लक्षणमिह नास्ति ॥(२)

यस्ते देवयशाः सोमो त्रिष्टुभंयजुरन्ताम् ॥

यस्ते द्रप्स इतीमां त्रिष्टुभं सोमदेवतां यजुरन्तां देवयशाक्खषि-
रपश्यत् । यजुर्भोऽपि देवयशाक्खषिरित्यर्थः । स्वाहेत्येतद्यजुश्चतुर्थः
पादो द्वादशाक्षरः तेनैकाधिका । विप्रुड्ढोमेऽस्या विनियोगः ॥

देवानां चात्वालदैवतम् ॥

देवानामसीत्येतद्यजुश्चात्वालदैवतं । यजुर्बृहती । वपस्य चात्वाले
प्रक्षेपे विनियोगः ॥

प्राणाय मे लिङ्गोक्तदेवतान्येकादश ॥

प्राणाय मे वर्चोदा इत्यादीन विश्वाभ्यो मइत्यन्तान्येकादश यजू-
षि लिङ्गोक्तदैवतानि । उपांशुसवनादय एषां देवता इत्यर्थः । सर्वेषां
वाचने विनियोगः । तत्र प्राणाय म इत्यस्योपांशुर्देवता आसुर्यनुष्टुप्-

---

(१) उ० ध्रुवोऽसिघ० ध्रुवोदै०कृत्यानुक्त ध्रुवमहण एवधि० एष ते म० म-
होदे० वसुविद्धपसादने वि० ।

(२) पुस्तके विनि० इत्युभयो. पद्यादिपाठः ॥

वाचने विनियोगः, व्यानाय मे । उपांशुसवनो देवता आसुर्यनुष्टुप् । उदानाय मे अन्तर्यामो देवता साम्न्युष्णिक् । वाचे म ऐन्द्रवायवो देवता । सामगायत्री, ऋगुद्भ्यां । मैत्रावरुणग्रहो देवता आसुरीगायत्री । श्रोत्राय मे आसुर्यनुष्टुप् आश्विनग्रहो देवता । चक्षुर्भ्यां मे शुक्रामन्थिनौ देवते । साम्न्युष्णिक् । आत्मने मे । आग्रयणो देवता । आसुर्यनुष्टुप् । ओजसे मे । उक्थ्यो देवता । आसुर्यनुष्टुप् । आयुषे मे । ध्रुवो देवता आसुर्यनुष्टुप् । विश्वाभ्यो मे । एकोनागायत्री । एकाधिका वा प्राजापत्यानुष्टुप् । पूतभृदाधवनीयौ देवते । सर्वेषां वाचने विनियोगः ॥

## कोऽसि प्राजापत्योष्णिग्वर्द्धमाना ॥

कोऽसि कतमोऽसीत्येषा प्राजापत्यदेवता । अध्यक्षप्रजापतिरूपो द्रोणकलशोऽत्र देवतेत्यर्थः, अस्या वर्द्धमानोष्णिक्छन्दः यस्य प्रथमः पादः षडक्षरः । द्वितीयः सप्ताक्षरः । तृतीयोऽष्टाक्षरः । सा त्रिंशदक्षरत्वात् द्वाभ्यामधिकत्वात् । वर्द्धमानोष्णिगित्युच्यते । अवकाशानुवाचने विनियोगः । भूर्भुवः स्वरिति ऋगुष्णिक् यजमानस्य जपे विनियोगः ॥

## मधवे त्वा लिङ्गोक्तदेवतानि त्रयोदश ॥

मधवे त्वेत्यादीनि अं०हसस्पतये त्वेत्यन्तानि त्रयोदश यजूंषि लिङ्गोक्तदेवतानि गृह्यगृह्यमाणग्रहदेवतानीत्यर्थः । ऋतुग्रहग्रहणे सर्वेषां विनियोगः । मधवे त्वा यजुर्जगती । माधवाय । आसुर्यनुष्टुप् । शुक्राय शुचये । नभसे त्वा । यजुर्जगत्य, नभस्याय आसुर्यनुष्टुप् । इषे त्वा । ऊर्जे त्वा यजुः पङ्क्तिः । सहसे त्वा तपसे त्वा यजुर्जगत्यौ, सहस्याय त्वा तपस्याय त्वा आसुर्य्यनुष्टुभौ । अं० हसः साम्न्युष्णिक् ॥ २० ॥

## इन्द्राग्नी विश्वामित्र ऐन्द्राग्नी गायत्रीम् ॥



मरुत्वत्वतीयग्रहणे । अत्र द्वितीया दशाक्षर व्यूहेन पूर्तिर्वा एको ना वा । उपयामेति आसुरी गायत्री, एष तइत्यासुर्यनुष्टुप् । एव चतसृष्वपि । तृतीयाचतुर्थ्यौरपि लिङ्गात्मरुत्वतीयग्रहणएव विनियोगो याचस्तोमी ॥

मरुत्वा त्वा यजुर्मरुत्वतीयम् ॥

मरुत्वां त्वौजसइति यजुर्मरुत्वतीय मरुत्वानस्य देवतेत्यर्थः, द्यावापृथिवी मरुत्वदग्नीषोमेति छपत्यय अत्र सामार्थ्यात् । तृतीयमरुत्वतीयस्य ग्रहणे विनियोग ॥

महा २ ॥ इन्द्रो भरद्वाजो माहेन्द्रो त्रिष्टुभम् ॥

महा २ ॥ इन्द्रो नृवदितीमामृच माहेन्द्रग्रहदेवता त्रिष्टुपछन्दस्का भरद्वाजऋषिरपश्यत् । माहेन्द्रग्रहग्रहणे विनियोग । अत्र तृतीयो नवाक्षर । तेन द्व्यूना ॥

यऽओजसा वत्सो गायत्रीम् ॥

माहेन्द्रीमित्यनुवर्त्तते । महाँ२। इन्द्रो यऽओजसेतीमामृच महेन्द्रदेवता गायत्रछन्दस्का वत्सऋषिरपश्यत् । अस्यापि माहेन्द्रग्रहणएव कदाचिद् विनियोग लिङ्गात् । अथोभयार्मन्त्रयोरुपयामेत्यासुर्यनुष्टुप् । एष तइति यजु पङ्क्ति ग्रहणासादनयोर्विनियोग ॥

उदुत्य प्रस्कण्व सौरी गायत्रीम् ॥

उदुत्यमितीमा सूर्यदेवतां गायत्रीछन्दस्का प्रस्कण्वऋषिरपश्यत् । दाक्षिणहोमे विनियोग अत्र तृतीय सप्ताक्षर तेनैकोना ॥

चित्रं कुत्स आङ्गिरसस्त्रिष्टुभम् ॥

सौरीमित्यनुवर्त्तते । चित्र देवानामितीमामृच सूर्यदेवता त्रिष्टुपछन्दस्का अङ्गिरस पुत्र कुत्सऋषिरपश्यत् । दाक्षिणहोमेऽस्या

विनियोगः ॥(१)

रूपेण वो दक्षिणा शृचतुर्णाम् ॥

रूपेण वो रूपमित्यादीनां चतुर्णां यजुषां दक्षिणादेवता । तत्र रूपेण वः प्राजापत्या जगती नष्टरूपानुष्टुप् । दक्षिणाभिमन्त्रणे विनियोगः, वि स्व देवीजगती सदोगमने विनियोगः, यतस्व यजु गायत्री सदस्य प्रेषणे । अत्र चस्तस्य पथा प्रेतेति द्वितीयं यजुः पृथक् । चतुर्णामित्युक्तलात् ॥

ब्राह्मणमद्य लिङ्गोक्तदेवतान्यष्टौ ॥

ब्राह्मणमद्य विदेयमित्यादीन्यष्टौ यजूंषि लिङ्गोक्तदेवतानि ब्राह्मणो देवता ब्राह्मण इतिएकोनाक्षरबृहती आग्नीध्रमार्गे पश्च प्रतिगमने विनियोगः अस्मद्राताइत दक्षिणादेवताः । आग्नायगी दक्षिणादाने विनियोगः ॥

अग्नये त्वा हिरण्यं देवता ॥

ऋचां त्रिष्टुप् हिरण्यप्रतिग्रहे विनियोगः ॥

रुद्राय त्वा गौर्देवता ॥

एकाधिका ऋचां त्रिष्टुप् गोः प्रतिग्रहे विनियोगः । बृहस्पतये त्वा एकोनाब्राह्मी गायत्री वासोदेवता वासः प्रतिगृहणे विनियोगः ॥

यमाय त्वा ॥

अश्वोदेवता एकाधिकाऋचा त्रिष्टुप् । अश्वप्रतिगृहणे विनियोगः ॥

कोदादिति कामो देवता ॥

(१) अत्र अग्नेनयाग्नाति इत्येकर्चोरगस्त्य ऋषा ।महापङ्क्तिश्छन्दसी आग्नीध्रेऽग्नी वृताहुतिहवने विनियोग इति पद्धतिपाठः ॥

प्राजापत्या त्रिष्टुप् हिरण्यगीवासोऽश्वेभ्योऽश्वस्य दक्षिणामात्रस्य मर्त्यादेनादेः प्रतिगृह्णे विनियोगः । कोऽदादित्यस्य द्वे यदृचे पृथग्यजुषी अभिप्रेत्य लिङ्गोक्तदेवतान्यष्टाविंशत्. । अन्यथा सर्वैमानि नाष्टौ ॥ २१ ॥

## विष्णो वैष्णवम् ॥

विष्णउरुगायैषसदस्येतद्यजुर्वैष्णवं विष्णुर्देवता आर्षीगायत्री । आदित्यस्थाल्यामासिक्तानां द्विदेवत्यानुहोमसंस्रवाणामादित्यपात्रेण पिधाने विनियोग । अत्र प्रथममध्यायादौ उपयामगृहीतोऽसीति प्रथमं यजुः । प्राजापत्या गायत्री । द्विदेवत्यैः सह होमार्थं प्रतिप्रस्थातुरादित्यपात्रेण द्रोणकलशाद्ग्रहणे विनियोगः ॥

## गृह्यमाणः सोमो देवता ॥

अत्र आदित्येभ्यस्त्वेति द्वितीयं यजु आदित्यस्थाल्यां संस्रवासेके विनियुक्तं । तस्यासिंचमान. सोमोदेवता दैवीपङ्क्तिश्छन्द संस्रवासेके विनियोगः । ततस्तृतीयं विष्णउरुगायेति ॥

## कदा चनादित्यदेवत्ये बृहत्यौ ॥

कदा चन स्तरीः, कदा चन प्रयुच्छसीतीमे ऋचौ आदित्यदेवते बृहतीछन्दसौ आदित्यग्रहणे विनियुक्ते द्वे अपि यजुरन्ते । आदित्येभ्यस्त्वेति द्वयोरप्यन्ते यजुः । तस्य दैवीपङ्क्तिश्छन्द. पूर्वे हि वाक्यद्वयस्थाने मध्ये कदाच नेन्द्रदेवत्योक्ता । इह त्वादित्यदेवत्या यजुरन्तात्वेति विशेषः द्वितीयायां व्यूहेन छन्दः पूर्त्ति ॥

## यज्ञो देवानां कुत्सस्त्रिष्टुभम् ॥

यज्ञो देवानामितीयमादित्यदेवत्या त्रिष्टुभं कुत्सऋषिरपश्यत् । आदित्यगृहस्य दध्ना श्रपणे विनियोगः । अत्र प्रथमतृतीयौ पादौ ऊनौ स्तो । तत्र तयोर्व्यूहेन पूरणम् ।

विवस्वन्यजुः॥

आदित्यदैवत्यमित्यनुवर्त्तते। विवस्वन्नादित्येत्यजुरादित्यदैवतम्। दधिसोमयोर्मिश्रणे विनियुक्तम्। प्राजापत्यानुष्टुप्॥

अदस्मै जगत्याशीः॥

अदस्मै नरइत्येषा जगतीछन्दस्का आशीर्देवता। नरोदेवता वा तेषां सम्बोध्यत्वेनाप्राधान्यात्। पत्न्याआशीर्वादने विनियुक्ता ब्यूहेन पूर्त्तिः॥

वाममद्य भरद्वाजो बार्हस्पत्यः साविती त्रिष्टुभम्॥

वाममद्येतीमामृचं सवितृदेवत्या त्रिष्टुप्छन्दस्कां बृहस्पतेरपत्यं भरद्वाजऋषिरपश्यत्। अत्र चतुर्थो दशाक्षरः। तेनैकोना॥

सावित्रोऽसि माविवम्॥

सावित्रोऽसीत्येतद्यजुःसवितृदेवतम्। सावित्रग्रहणएव विनियुक्तम्। साम्न्यधिका आर्षीत्रिष्टुप् द्व्यूनाआर्षी जगती वा॥

सुशर्मासि वैश्वदेवम्॥

सुशर्मासि सुप्रतिष्ठानइत्येतद्यजुर्विश्वदेवदेवतम्। व्यूहेन प्राजापत्या जगती। वैश्वदेवग्रहणे विनियोग॥

बृहस्पतिसुतस्य लिङ्गोक्तम्॥

बृहस्पतिसुतस्येत्येतल्लिङ्गोक्तदेवतम्। सोमदेवतमित्यर्थः। प्राजापत्या गायत्री पात्नीवतग्रहग्रहणे विनियोग॥

अहम् (१)प्रजापतिरूपेणात्मा देवता त्रिष्टुप्॥

अहम् परस्तादित्यस्याऋचः प्रजापतिरूपेण आत्मादेवता त्रिष्टुप्छन्दः। पात्नीवतग्रहस्य प्रचरणीशेषेणाग्नेः स्थपने विनियोगः।

(१) परस्तादित्यत्रैक. पाठ काण्व संहिताश्च बोध्य॥

चत् प्रथमो दयानन्दस्तनैकोना ॥

अग्ना ३ इ पत्नीवन्नाग्नेयम् ॥

अग्ना ३ इ पत्नीवन्निति यजुरग्निर्देवतम् । एकाधिका त्वग्नायव्यो एकोना सामपङ्क्तिर्वा पात्नीवतग्रहहोमे विनियोगः ॥ (२)

प्रजापति प्राजापत्यम् ॥

प्रजापतिर्वृषासीत्येतद्यजुः प्रजापतिर्देवतम् । आर्षा त्रिष्टुप् । पत्न्यावेक्षणे समीक्षणे विनियोग ।

हरिरस्तु वसामै ॥

हरिरसि हारियोजनइत्यस्य यजुषस्त्वष्टामे देवते । "त्वष्टामे वै हरीक्ष्वाकामास्याएष्ठ्येन गृह्णामीति श्रुते" ॥ त्वष्टुग्लिकं । हारियोजनग्रहणे विनियोग । चत्र मघवे त्वा लिङ्गोक्तानीति, मरुतां त्वा यशु„ सावित्रोऽसि सावित्रम् सुशर्मासि वैश्वदेव हरिरस्यु वसामि इत्यादिषु पयाक्रमगृहीतोऽसीत्येतस्यार्धवार्षी विद्यादेव । तेनानेन सहैव यजुषो ऽक्षराणि गणयित्वा छन्दोविचार्य नियेतव्यम् । यथा यश्चोजसा वर्षो गायत्रीमित्यत्र महेँऽहङ्कृत्येतत् ॥

हर्य्योर्युक्ते लिङ्गोक्ते ॥

हर्योर्धानास्थ,यस्ते भक्षसनिरत्येते यजुषी लिङ्गोक्तदेवते । हर्योरित्यस्य धानादेवता सामगायत्री । धानाभिर्हारियोजनग्रहणे विनियोग । यस्ते भक्षणीयम् द्रव्य देवता आर्षीपङ्क्ति । धानानां प्राशने विनियोग ॥

देवकृतस्याग्नेयानि षट् ॥

देवकृतस्यैनसइत्यादीनि षड्यजूंषि अग्निदेवतानि । माकला-

(२) अग्ने वाग्नेयमित्यधिक. काण्वसर्वानुक्रमात्त । मन्त्रभेदोऽपि यथा । अग्नेवाकृतपत्नीव सजूर्देवेन त्वष्ट्रा । सोमं पिब स्वाहा ॥ ३ ॥

भानि विनियुक्तानि ॥

देवकृतस्य प्रासुर्यनुष्टुप् ॥

मनुष्यकृतस्य सामीप्युष्णिक् । पितृकृतस्य प्रासुर्यनुष्टुप् । प्रात्मकृतस्य प्रासुर्यनुष्टुप् ॥

एनसो यजुर्जगती ॥

यद्वाहमेनः । ब्रूहित प्राजापत्या त्रिष्टुप् ॥

संवर्चसेत्यस्य त्वष्टादेवता त्रिष्टुप् ॥

उदकं पूर्ववमपावमर्षने विनियोग । छन्दे देवतयोः प्रागुक्तत्वादिह नोक्तम् ॥ ३० ॥

समिन्द्राविश्वैर्वदेवीं त्रिष्टुभम् ॥

समिन्द्र णो मनसेतीमामृचविश्वदेवदेवतां त्रिष्टुप्छन्दस्कां वसिष्ठर्षिरपश्यत् । समिष्टयजुर्होमे विनियोग । संवर्चसेत्यस्यैतमपरेव प्रजापतिर्ऋषिः समिष्टयजुर्होमे विनियोग ॥

धाता लिङ्गोक्तबहुदेवत्या ॥

त्रिष्टुप्पदमनुवर्तते । धाता रातिरित्येषा त्रिष्टुप्लिङ्गोक्तबहुदेवत्या लिङ्गोक्ता लिङ्गेनैव मन्त्रान्तरैर्वोक्ता बह्व्यो देवता यस्य सा तथा धातृसवितृप्रजापतिदेवाग्नित्वष्टृविष्णुदेवतत्यर्थे । समिष्टयजुर्होमे विनियोग ॥

सुगा वो देवी ॥

सुगा वो देवादतीयस्त्वदेवी देवता । अत्रापि त्रिष्टुबित्यनुवर्तते । समिष्टयजुर्होमे विनियोग । अत्र चतुर्थो दृगाचरपतिर्मैकाना ॥

यां २ ८ ॥ प्रावह्ने वयमाग्नेय्यौ ॥

त्रिष्टुभावित्यत्र सम्बध्यते । यां २ ॥ प्रावह उशतः, वषट्॰ इत्वा प्रयतीतामे करौ प्राग्नेयौ प्रग्निदेवते त्रिष्टुपछन्दस्के । समिष्ट-

जुहोमि विनियुक्ते देवा गातुविद इत्यस्य तु सर्वं प्राग्वत् । अत्र पुनः पाठात्प्रजापतिर्वा ऋषिरिति विशेषः ॥

यज्ञ यज्ञपते लिङ्गोक्ते यजुषी ॥

यज्ञयज्ञम्च्छ, एष ते यज्ञ इतीमे यजुषी लिङ्गोक्ते प्रथमं यज्ञदैवतं एकाधिका ऋग्गायत्री । द्वितीयं यज्ञपतिदैवतं । एकाधिका सामजगती । समिष्टयजुर्होमे द्वयोर्विनियोगः ॥

उरुं० हि शुनः शेपो वारुणी त्रिष्टुभम् ॥

उरुं० हि राजेमामृच वरुणदेवताम् । त्रिष्टुप्छन्दस्कां शुनःशेपऋषिरपश्यत् । वाचने विनियोगः । द्वितीयपादस्य व्यूहेन पूरणम् ॥

नमो वारुणम् ॥

नमो वरुणायेत्येतद्यजुर्वारुणं वरुणदैवतं अपोऽवभ्रमर्षे वाचने विनियोगः ॥

अग्नेरनीकमाग्नेयी त्रिष्टुप् ॥

आसुरी गायत्री ॥

अग्नेरनीकमित्येषा ऋगग्निदैवता त्रिष्टुप्छन्दस्का अप्सु चतुर्गृहीतहोमे विनियुक्ता । तृतीयस्याश्च व्यूहेन पूरणम् ॥

समुद्रे ते सौमी विराट् ॥

समुद्रे ते हृदयमित्येषा ऋक् सौमी सोमदेवत्या विराट्छन्दस्का । यस्या दशाक्षराश्चत्वारः पादाः सा विराट् । वैराजेविराडिति वचनात् । ऋजीषकुम्भप्लावने विनियोगः ॥

देवीराप: पङ्क्तिर्बृहती वा पूर्वार्धर्च आपउत्तरः ॥

देवीराप एष वो गर्भ इतीयमृक्पङ्क्तिछन्दस्का बृहतीछन्दस्का वा अष्टात्रिंशदक्षरत्वाद्विकल्पः । अस्याः पूर्वार्धर्चः अब्दैवतः उत्तरो-

देवो देव सोमेषन इत्ययं सोमदेवतः। ऋजीषकुम्भस्य विसृष्टी पस्थाने विनियोगः॥

देवानामाग्नेयम् ॥

देवानाए समिदसीत्येतद्यजुरग्निदेवतं। समिदाधाने विनियुक्तम्। दैवीजगती॥

एजतु त्र्यवसाना महापङ्क्तिः ॥

एजतुदशमास्य इतीयमृक् त्र्यवसाना अवसानत्रयोपेता महापङ्क्तिछन्दस्का। गर्भो देवता। मन्त्रलिङ्गात्। यस्याः षडष्टाक्षराः षट्पादा सा महापङ्क्तिः "षडष्टका था महापङ्क्तिरित्युक्तेः" अनूबन्ध्यायागर्भस्य निरुह्यमाणस्याभिमन्त्रणे विनियोगः॥

यस्यैते वशा ॥

यस्यैतेऽयज्ञियइत्यस्या ऋचः वशादेवता। अनुष्टुप्छन्दः। मैत्रहोमे विनियोगः॥

पुरुदस्मो गर्भः ॥

पुरुदस्मो विषुरूप इत्यस्या गर्भो देवता। ब्राह्मी अनुष्टुप्। गर्भमेधस्य स्विष्टकृतमनुमेधहोमे विनियोगः॥

मरुतो यस्य गोतमो मारुतीं गायत्रीम् ॥

मरुतो यस्येतीमामृचं मरुद्देवत्यां गायत्रीं गोतमऋषिरपश्यत्। शामित्रेऽग्नौ गर्भहोमे विनियोगः॥

महीद्यौर्मेधातिथिर्द्यावापृथिव्याम् ॥

गायत्रीमित्यनुवर्तते। मही द्यौरितीमामृचं गायत्रीछन्दस्कां

---

(१) निरुह्यमाणस्यानुबन्ध्यागर्भस्याभिमन्त्रणे विनियोगः। इति पद्धत्याः पाठो बोध्यः॥

द्यावापृथिवीदैवत्या मेधातिथिऋषिरपश्यत् । गर्भेस्याग्रायणैरभ्यूहने विनियोग । इत्यग्निष्टोम । इतिशब्द समाप्तौ । अग्निष्टोम समाप्त इत्यर्थ ॥ ३१ ॥

अथ षोडशी व्याख्यास्यतइति शेष । षोडशिनामसधा लक्ष्यन्ते । अथानन्तर षोडशिमन्त्राणामृष्यादिक व्याख्यास्यत इत्यर्थ ॥

आतिष्ठ गोतम ऐन्द्रीमनुष्टुभम् ॥

आतिष्ठ वृत्रहन्नित्येतामृच इन्द्रदैवत्यामनुष्टुप्छन्दस्का गोतमऋषिरपश्यत् । अर्वोपयामेत्यासुरीगायत्री । षोडशीग्रहणे विनियोग एव तद्व्यासुर्येनुष्टुप् । सादने विनियोग ॥

युक्ष्वा हि मधुछन्दा ॥

ऐन्द्रीमनुष्टुभमित्यनुवर्त्तते । युक्ष्वा हि केशिनेतीमामृच इन्द्रदैवत्या अनुष्टुप्छन्दस्का मधुछन्दा ऋषिरपश्यत् । विकल्पेनवा युक्ष्वा हि केशिनेतीमामृचमिन्द्रदैवत्यामनुष्टुप्छन्दस्का मधुछन्दाऋषिरपश्यत् । विकल्पेन षोडशीग्रहणएवविनियोग अत्र द्वितीय पक्षर । तेन द्व्यूना । यजुष पूर्ववत् ॥

इन्द्रमिद्गोतम ॥

ऐन्द्रीमनुष्टुभमित्यनुवर्त्तते । इन्द्रमिद्धरी वहत इतीमामृचमिन्द्रदैवत्यामनुष्टुभमित्यनुवर्त्तते । इन्द्रमिद्धरी वहतइतीमामृचमिन्द्रदैवत्यामनुष्टुप्छन्दस्का गोतमऋषिरपश्यत् । अस्या अपि षोडशीग्रहणएव विकल्पेन विनियोग । यजुष पूर्ववत् । अत्र चतुर्थ सप्ताक्षर । तेनैकोना ॥

यस्मान्नेन्द्रो त्रिष्टुप्परब्रह्मरूपेण षोडशिन स्तुति ॥

यस्मान्न जातइयमृक इन्द्रदैवत्या त्रिष्टुप्छन्दस्का परब्रह्मरूपेण षोडशिन स्तुतिरियं । अत्र षोडशी परब्रह्मरूपेण स्तूयते । अतएव

एषं ते सामगायत्री प्रथमे द्वितीये उपयामम् आसुर्यनुष्टुप् ॥

एष ते यजुस्त्रिष्टुप् । तृतीये उपयाम आसुरीगायत्री । एष ते सामगायत्री सर्वेषां मध्ये क्रमेण द्वे यजुषी एते, ततः पञ्च सा-म्नि च क्रमेण विनियुक्ते । यजुरन्तारम्भेण तेषां यजुषामपि स-एव ऋषिरिति भाष्यते । अग्ने पवस्वेत्यस्य अग्ने अग्ने वर्चस्विन्-ति यजुः एकादशाक्षरा सामजगती अग्निर्देवता प्रतिपादनमग्रहे विनियोगः । उत्तिष्ठन्नित्यस्याग्ने इन्द्रौजिष्ठोसि यजुः साम्नुष्टु-प् इन्द्रो देवता प्रतिपादनमग्रहे विनियोगः । अदृश्रमित्यस्याप-ग्ने सूर्यभ्राजिष्ठेति यजुः सामजगती । सूर्यो देवता प्रतिपादनम-ग्रहे विनियोगः ॥

उदुत्यन् देवानामापम् ॥(१)

उदुत्यं जातवेदसमित्येषा ऋक् देवनामापे देवापश्यत् प्रथम द्वय-र्षं । सूर्यो देवता । गायत्रीछन्दः इति तु प्रायुक्तमेव । तत्र तु मन्त्र-स्वतिरिक्त तु देवा इति विशेषः अथ वा अदृश्य मन्त्रस्य सौरोमि-त्यस्य सौरीगायत्रीमित्येतत्पदद्वयमनुवर्तते । गवामयने विषुवत्यप् कोऽहनि महाग्रहणे विनियोग. । उपयामेति आसुरीगायत्री । ग्रहणे विनियोग । एष तइति सामगायत्री सादने विनियोग ॥

प्राणिघ्र डे कुसुरुबिन्दुगन्धे महापङ्क्तिप्रस्तारप-ङ्क्ती ॥

प्राणिघ्र, कलश, इडे रन्तइत्येषे ऋचौ महापङ्क्तिप्रस्तारपङ्क्ती गव्ये गोदेवते कुसुरुबिन्दुऋषिरपश्यत् । तत्राजिघ्रेति महापङ्क्तिः । "अष्टका वा महापङ्क्तिरिति आपस्तम्बात्" । अस्यां चाष्टाक्षराः षट्प-दाः सन्ति । तत्र तृतीयस्य व्यूहेनपूरणम् । चतुर्थं समासेनपद ।

(१) आ तिष्ठ कुलसं आश्रि रत्तसिवद्वयम् । इति काण्वसंहितोऽधिक. पाठ. ॥

तिष्टेकोना । इडे रन्तइति प्रस्तारपङ्क्तिः यस्याः प्रथमद्वितीयौ पादौ द्वादशाक्षरौ तृतीयचतुर्थावष्टाक्षरौ सा प्रस्तारपङ्क्तिरित्युच्यते । आद्यौ चेत्प्रस्तारपङ्क्ति रति वचनात् । अत्र चतुर्थो नवाक्षरस्तेनैकाधिका । सहस्रसंवत्सरे गर्भविरात्रादावह्नोने विसृष्टे साहस्या गोर्द्रीक्षमणाधापणे आजिघ्रेत्यस्या विनियोग. इडे रन्तइत्यस्या कुमारविन्दु ऋषिर्गौर्देवता दक्षिणे कर्णे यजमानकर्तृके जपे विनियोग ॥

विन: शामो भारद्वाजएन्द्रीमनुष्टुभम् ॥

वि न इन्द्र मृधइतीमामृचं इन्द्रदेवतामनुष्टुभं भरद्वाजस्यापत्यशामऋषिरपश्यत् गवामयने महाव्रतसञ्ज्ञकेऽहनि ग्रहग्रहणेऽस्या विनियोग: । उपयामेति सामोष्णिक् । एष तइति मामगायत्री । सर्वत्रोपयामेत्यस्य विनियोगएव तइत्यस्य सादने इति भेद । व्यूहेन छन्द पूर्तिः ॥

वाचस्पतिंवै श्वकर्मणीं त्रिष्टुभम् ॥

शासो भारद्वाजइत्यनुवर्तते वैश्वकर्मणीमिति द्वितीयांतनिर्देशात् । वाचस्पतिं विश्वकर्माणमितीमामृचं विश्वकर्मदेवतां त्रिष्टुभं भारद्वाजः । शासऋषिरपश्यत् । महाव्रतएव पूर्ववद्विकल्पेन ग्रहग्रहणे विनियोग: आद्यपादो द्वादशक: । तेनैकाधिका । उपयाम सामत्रिष्टुप् । एष ते सामोष्णिक ॥

विश्वकर्मन्नैन्द्रो वैश्वकर्मणीम् ॥(१)

शासोभारद्वाजस्त्रिष्टुभं इत्यत्राप्यनुवर्त्तते विश्वकर्मन्हविषेतीमामृचं त्रिष्टुभं ऐन्द्रीं इन्द्रदेवत्यां ... शा सऋषिरपश्यत् । यजुषो पूर्वमन ...

—(१)-ऐन्द्री वैश्वकर्मण्यौ-इति ...

सर्वोत्थानशब्देनात्र तन्मन्त्रा लक्ष्यन्ते । सर्वेषां सर्वोत्थानमन्त्राणां देवा ऋषयस्त्वर्थः ।

इह रतिः पशुदैवतम् ॥

इह रतिरिह रमध्वमित्येतद्यजुः पशुदैवतम् । प्राजापत्या बृहती मालाहार्ये आज्याहुतिहोमे विनियोगः ॥

उपसृजन्नुष्णिगाग्नेयी ॥

उपसृजं धरुणमित्येषा उष्णिक्छन्दस्का । अग्निर्देवता । प्रथमोऽष्टाक्षरः पादः साष्टाक्षरेण स द्वादशाक्षरः । द्वितीयोऽष्टाक्षरः एवं नवैकाधिका । आज्याहुतिहोम एव विनियोगः ॥

सवस्य बृहती यजमानानामात्मस्तुतिः ॥

सवस्यर्द्धिरसीत्येषा बृहतीछन्दस्का यजमानानामात्मस्तुतिः । अनया हि यजमाना आत्मानमात्मानं स्तुवन्ति अगन्म अभूमेत्यादिना । अत्र प्रथमः सप्तकः द्वितीयश्चाष्टकः । तृतीयो दशकश्चतुर्थो नवक । एवं षट्त्रिंशदक्षरत्वाद्बृहती । आर्षी बृहती । तत्र पादाक्षरनियमाभावात् । अवभृथ्यङ्गगाने विनियोगः ॥

युवन्तं सप्तच्छेप ऐन्द्रीमत्यष्टिं त्र्यवसानाम् ॥

युवन्तमिन्द्र इत्येतामिन्द्रदेवत्यामत्यष्टिछन्दस्कां त्र्यवसानत्रययुक्तां सप्तच्छेपऋषिर्व्यपश्यत् । इन्द्रियस्य ऋद्धिप्रदानस्याभोग्यं गाङ्गिपक्षमपि विनियोगः । अष्टषष्ट्यक्षराऽत्यष्टिः । अत्र षट्षष्ट्यक्षराणि तेन द्व्यूना ॥

आद्योऽर्धर्चश्चैन्द्रापार्वतः ॥

युवन्तमित्यस्या आद्योऽर्धर्च ऐन्द्रापार्वतः इन्द्रापर्वतदेवता । सर्वोत्थानं समाप्तम् । अथ सोमयागे नैमित्तिकान्युच्यन्ते ॥

परमेष्ठी नैमित्तिकान्याध्यायात् ॥

परमेष्ठ्यभिधीत इत्यादीनि आ अध्यायात् अध्यायसमाप्तिपर्यन्तानि
नैमित्तिकानि । सौमयागी वध्यमाणायु सोमावस्थासु यजमाने विना-
शे प्रायश्चित्तार्थी त्वयं । अथ तेषां साधारण्यविभागः ॥

वसिष्ठस्यार्षम् ॥

तेषां सर्वेषां परमेष्ठ्यभिधीत इत्याध्यायसमाप्तिपर्यन्तानां वसिष्ठ-
ऋषिरित्यर्थः ॥

लिङ्गोक्तदेवतानि चतुस्त्रिंश॰ ग्रंत् ॥

तेषां नैमित्तिकानां मध्ये आद्यानि परमेष्ठ्यभिधीत इत्यादिसंक्षि-
त: प्रभृत्युत्वन्तानि चतुस्त्रिंशत्संख्यानि लिङ्गोक्तदेवतानि नैमित्ति-
कानि इमानि चतुस्त्रिंशद्यजुर्वाक्यानि चतुस्त्रिंशत्सोमावस्थासु
यज्ञाङ्गविनाशनिमित्तासु नैमित्तिकाहुतिषु चतुस्त्रिंशद्देवताभिधा-
यीनि । तत्तदवस्थापन्नस्य सोमस्य तत्तद्देवतारूपत्वात्तत्परत्वं
च । नत्वेते मन्त्रा. लिङ्गाच्छन्दः कल्पेनैव प्रयुज्यते अतएव "प्राणपश्ये
संपद्येतं मनसाभिध्यायन्" इत्यादयस्तु सर्वासु कण्डिकासु परमेष्ठिने
स्वाहेति जुहुयात्परमेष्ठी हि सर्वार्हे भवति प्रजापतिर्हि स त-
र्हि भवति यर्हि हि स तर्हि भवतीत्येव सोमस्य तत्र तत्तदवस्था-
पन्नस्य तत्तद्देवतारूपता श्रूयते । अतः परमेष्ठिने स्वाहेत्येव आदर्शो-
क्त मन्त्रा' तेषां वसिष्ठऋषिर्लिङ्गोक्ता देवताः । तत्तत्पदगणनया च
दैवीजगत्यादिकं छन्दः कल्पनीयमित्यभिप्रायः ॥

ययोर्वैष्णववारुणी त्रिष्टुप् ॥

ययोरोजसेत्येषा त्रिष्टुप् वैष्णववारुणी विष्णुवरु-
णात्मका देवते इत्यर्थः अत्र द्वितीयः पादो द्व्यक्षरः । तेनैकोना ।
सोमस्य रक्तवमनसमाद्यन्तस्कन्नाश्रुपर्युदक्षोपसेचने विनि-
योगः ॥

देवां दिवमागाशीर्लिङ्गोक्तदेवता ॥

देवां दिवमगन्नितीदं यजुर्यजमानाशीः यजमानस्याशीः प्रार्थनायां लिङ्गोक्तदेवता। यज्ञदेवतेत्यर्थः। रसरूपस्य सोमस्य चमसस्थादन्यस्य स्कन्नस्याभिमर्शने विनियोगः। इमानि चत्वारि यजूंषि। तत्र देवान्। साम्न्यनुष्टुप्। मनुष्यान् एकाधिका ऋग्गायत्री। पितॄन्। एकाधिका साम्न्यनुष्टुप्। यं कं च साम्न्यनुष्टुप्। अथ वा समस्तेयं पत्याष्टिरेका। न तु चत्वारि ॥

चतुस्त्रिंशद्घर्मदेवत्या पङ्क्तिस्त्रिष्टुब्वा ॥

चतुस्त्रिंश० मन्त्रान्तमस्त्रयेयं घर्मदेवत्या पङ्क्तिछन्दस्का त्रिष्टुप्छन्दस्का वा। द्वाचत्वारिंशदक्षरत्वात्पङ्क्तिः। द्व्यूना त्रिष्टुप्। द्व्यधिका पङ्क्तिर्वा। अतएव व्यापकात्पिङ्गलोक्तेऽपि छन्दःसु उक्तसङ्ख्यानरछन्दसा रसराले अनुक्ताक्षरस्य यजुश्छन्दो विकल्पो ज्ञेयः। अधिकाक्षरं पूर्वं छन्द ऊनाक्षरं चोत्तरमिति। शाखान्तरे महावीरभेदे आज्याहुतिहोमे ऽस्या विनियोगश्चोक्तोऽस्ति ॥

यज्ञस्य यज्ञदेवत्या त्रिष्टुप् ॥

यज्ञस्य दोहइतीयं यज्ञदेवत्या त्रिष्टुप्छन्दस्का। कालाहुतिहोमानन्तरं यजमानवाचने विनियुक्ता ॥

आप्यायस्व सौमीं गायत्रीं नैध्रुविः काश्यपः ॥

आप्यायस्वेतीमामृचं सौमीं सोमदेवत्यां निध्रुवस्य पुत्रः काश्यपऋषिरपश्यत्। अत्र नैध्रुविः काश्यपइत्येव पाठः यतएवं प्रयतेरग्निस्यः काश्यपः "काश्यपो नैध्रुविः काश्यपो नैध्रुविर्वाचिइति"। यूपस्योपरि काकारोहणे उद्गातृकर्तृके होमे विनियोगः इति प्रायश्चित्तानि समाप्तानि ॥ २३ ॥ (१)

(१) प्राणाय मेइत्यारभ्य द्यावापृथिव्यम्। इत्यन्त काण्वसर्वानुक्रमे नवम्याः कण्डिकाया अत्र पाठः, स पाठः पूर्वोक्तत्वादत्र न लिखित. ॥

## अथ वाजपेयः ॥

अथ वाजपेयमन्त्रेण तन्मन्त्रा उच्यन्ते । वाजपेयमन्त्राणामृष्यादिकं वक्ष्यत इत्यर्थः । तत्र प्रथमं सर्वमन्त्रसाधारणमृषिद्वयमाह ॥

## बृहस्पतेरार्षमिन्द्रस्य च ॥

वाजपेयमन्त्राणां सर्वेषां बृहस्पतिरृषिः इन्द्रश्च । उभावपि संहितौ ऋषी भवतः स बृहस्पतिः सवितारमीवेति तेनेन्द्रो यजतेत्युभयोः श्रवणात् । इन्द्रस्य चेति संहिताभाष्ये पाठः । तस्मिन्पक्षे ऋषिविकल्पः ॥

## देव सवितः सावित्री त्रिष्टुप् ॥

देव सवितः प्रसुवेत्येषा ऋक् सवितृदेवत्या त्रिष्टुप् सर्वेषां कर्मणां पुरस्तादाज्याहुतिहोमे विनियोगः । इयमार्षी त्रिष्टुप् । यतियताक्षरपादयुक्तत्वात् । स्वाहेत्येतद्यजुः पृथक्त्वेन ॥

## ध्रुवसदमैन्द्राणि त्रीणि ॥

ध्रुवसदमित्यादीनि त्रीणि यजूंषि इन्द्रदेवत्यानि । तत्र ध्रुवसदं । प्राजापत्या त्रिष्टुप् । अप्सुषदं त्वा । व्यूहेन प्राची पङ्क्तिः, पृथिविषदं । व्यूहने प्राची पङ्क्तिः । एष त इत्याद्यनुष्टुप् । :
ते । ग्रहाणामैन्द्राणां सोमग्रहाणां ग्रहणे क्रमेण विनियोगः ॥

## अपाᳪ रसदेवत्याऽनुष्टुप् ॥

अपाᳪरसमित्येषा रसदेवत्याऽनुष्टुप् । चतुर्थस्यैन्द्रग्रहस्य विनियोगः उपयामेति साम्नानुष्टुप् । एष ते आसुर्यनुष्टुप्

## ग्रहा लिङ्गोक्तदेवताऽनुष्टुप् ॥

ग्रहा ऊर्जाहुतयो इत्येषा लिङ्गोक्तदेवता अनुष्टुप् । देवतेत्यर्थः । पञ्चमस्य ऐन्द्रग्रहस्य ग्रहणे विनियोगः ।
वत् ॥

## सम्पृचौ यजुषी ॥

सम्पृचो स्थ इतीमे यजुषी लिङ्गोक्तदेवते इति शेषः अत्र संपृचौ लिङ्गोक्ते इति वा पाठः सोमपदस्वरामहावनयोर्देवते इत्यर्थः, अथ वा लिङ्गोक्तदेवता इत्यनुवर्तते तदर्थेनगाहचनं विपरिणम्य सम्बध्यते । सम्पृचावित्यत्र धृतयोः प्रत्याहरणे । मधुश्चिद्भो यते ॥

## इन्द्रस्य रथः ॥

इन्द्रस्य वज्रोऽसीत्यस्य रथो देवता । रथादश्वावहरणे विनियोगः आसुरीगायत्री ॥

## वाजस्य पार्थिव्यतिजगती ॥

वाजस्य नु प्रसव इतीयमृक् । पृथिवीदेवत्यातिजगतीछन्दस्का धूर्गृहीतस्य रथस्य वेदिमध्ये नयने विनियोगः । द्वापञ्चाशदक्षरां अतिजगतीमुच्यते । इयं तु द्व्यूना ॥

## अन्त्यः पादः सावित्रः ॥

अस्या अन्त्य अन्ते भवः पादस्तस्यां नो देवः सवितेत्ययं सावित्रः सवितृदेवत ॥

## अप्स्वन्तरश्वदैवत्याऽनवसाना पुरउष्णिक् ॥

अप्स्वन्तरमृतमित्येषाक्गश्वदेवत्या अनवसानम् हित्वा पुरउष्णिक्छन्दस्का । अश्वमोचने विनियोगः । यस्याः प्राथपादो द्वादशाक्षरः । द्वितीयाष्टाक्षरो सा पुरउष्णिक् इत्युच्यते । प्राग्घेत्पुरउष्णिगिति वचनात् । अस्य अन्त इत्येवं व्यूहेनाद्यपादे द्वादशाक्षरपूरण । द्वितीयतृतीयो तु पूर्वावेव । मध्येऽवसानं नास्ति । देवीराप इति व्यूहेन सामजगती आपोदेवताः । अश्वमोचने समुच्चयेन विकल्पेन विनियोगः ॥

## वातो वा तिस्रोऽश्वस्तुतयउष्णिक्त्रिष्टुब्जगत्यः ॥

वातो वा, मनो वा, वातरंहा, जवो यद्वेतास्तिस्रश्च. त्र-
मेण पंक्तित्रिष्टुब्जगत्योऽश्वस्तुतयश्च। अश्वा आभिः स्तूयन्ते। अश्वदे-
वत्याः एताः स्तुतिभाजो देवता भवन्तीत्युक्तत्वात्। वातो वेत्युष्णिक् र-
थे दक्षिणाश्वयोजने विनियोग । वातो वेतीयमेकाधिका आर्षी
उष्णिक् पादानामक्षरसङ्ख्यानियमेऽप्यक्षरसङ्ख्यया तथात्वात्। त-
दुक्तम्। अक्षराण्येव सर्वत्र निमित्तं बलवत्तरम्। इत्यादिप्रतिपत्त्यर्था
पादक्लृप्त्यर्थैरक्षरैरिति,वातरंहा इत्यत्र प्रथमद्वितीयो द्वादशकौ।
द्वितीयो व्यूहेनैकादशकः चतुर्थश्च स्वतोऽप्येकादशकइति। तथाऽयं
त्रिष्टुबेव कृतः। द्वौ तु जागतौ यथा "त्र्याज्जागतं जगती चैष्टुभे
त्रिष्टुबित्युक्तत्वात्"। जवो यदित्यनाद्यो द्वादशकः। द्वितीयतृतीया-
वेकादशकौ चतुर्थचतुर्दशकइति। तेनाष्टाचत्वारिंशदक्षरत्वादियं ज-
गती। अनियताक्षरपादत्वे पादाक्षरैस्तथात्वात्॥

वाजिनोऽश्वाः॥

वाजिनो वाजजितइत्यस्याश्वदैवता। सामजगती अश्वानां
वाहंस्पत्यचरुघ्राणे विनियोग॥

देवस्याहं लिङ्गोक्तानि॥

देवस्याहं‍सवितुरित्यादीनि इन्द्रस्यचोज्जिनो वाजं जेषमित्यन्ता
नि लिङ्गोक्तदेवतानि। आद्यस्य देवस्याह इत्यस्य व्यूहेन अनुष्टुप्
ब्राह्मणकर्तृके वाजपेये ब्रह्मणो रथचक्रारोहणे विनियोगः। द्विती-
यस्य सामजगती क्षत्रियकर्तृके वाजपेये ब्रह्मणो रथचक्रारोहणे वि
नियोगः। तृतीयस्य व्यूहेन प्राजापत्या त्रिष्टुप्। ब्राह्मणवाजपेये
ब्राह्मणो रथचक्रादवतरणे विनियोग.। चतुर्थस्य एकाधिका साम-
जगती। क्षत्रियचत्रे रथचक्रादवरोहणे विनियोगः। बृहस्पते प्राज

प्राजापत्या त्रिष्टुप् । ब्राह्मणयष्टे दुन्दुभिवादने विनियोगः । इन्द्रं वाजं सामपङ्क्तिः । क्षत्रियवर्षे दुन्दुभिवादने विनियोगः । यथा वा वा-ष्णोषधिपृथक् । ब्राह्मणयष्टे मन्त्रान्तदुन्दुभ्यवतारणे विनियोगः । देव-स्याहं । व्यूहेन प्राजापत्या त्रिष्टुप् । यजमानस्य यज्ञयूपारोहणे विनियोगः ॥

वाजिनोऽश्वाः ॥

वाजिनो वाजजितइत्यश्वाख्या देवता । सामजगती यजमानवाचने विनियोगः ॥

एष स्य हे दधिक्रावा वामदेव्योऽश्वदैवत्ये जगत्यौ ॥

एषस्य वाजी । उतस्मास्य । इतीमे द्वे ऋचौ जगत्यौ अश्वदैवत्ये दधिक्रावा वामदेव्योऽपश्यत् । प्राज्याहुतिर्होमे विनियोगः । अनु मंत्रणे वा प्रथमायाश्चतुर्थं पादो द्वादशाक्षर तस्य व्यूहाभ्यां पूरणं । द्वितीयायाश्चतुर्थस्य व्यूहेन पूरणं । स्वाहेति यजु पृथक् ॥

अग्नो वसिष्ठो विराजम् ॥

अग्नदेवत्यामित्यनुवर्त्तते अग्नो अवग्निस्त्रीमां विराट्छन्दस्कां वसिष्ठ-ऋषिरपश्यत् । अस्या अप्यग्नाएव देवता । होमेऽनुमन्त्रे वा (१) वि नि योगः । यस्या दशाक्षरायत्वार पादाः सा विराट्पङ्क्ति, वैराजैर्वि राडित्युक्तिः । अत्र तु प्रथमएकादशाक्षरः तनैकाधिका ॥

तेनो नाभानेदिष्टो जगती ॥

अश्वदेवत्यामित्यनुवर्त्तते ते नं अर्थमात्रतीमां अश्वदेवत्यां जगती ना भानेदिष्टऋषिरपश्यत्होमेऽनुमन्त्रणे वा विनियोग ॥

वाजेवाजे वसिष्ठस्त्रिष्टुभम् ॥

वाजेवाजेऽवत इत्येतामश्वअश्वदेवत्यां त्रिष्टुभम् वसिष्ठोऽपश्यत् । अ-

(१) होम वाचने वा विनियोग. । इतिवद्धतिपाठः ॥

मदेवत्यामित्यप्यनुवर्तते । होमे मन्त्रस्यास्य विनियोग । पत्राद्य याद्दश्य कृत्येन पूरणम् ॥

आमा प्राजापत्याम् ॥

वसिष्ठस्त्रिष्टुभमित्यनुवर्तते । आमा वाजस्येतीमाम्च प्रजापति-देवत्या वसिष्ठस्त्रिपद्यात् । यजमानस्य नैवारचर्वारम्भे विनियोग ॥

वाजिनोऽश्वा ॥

वाजिनो वाजजितदत्यस्य यजुर्योऽश्वा देवता आर्षी उष्णिक् । यजुर्युक्तानामश्वानां वार्हस्पत्यचर्वाघ्रापणे विनियोग ॥ ३४ ॥

आपयऽआयुर्यज्ञेन प्राजापत्यानि ॥

आपये स्वाहेत्यादीनि द्वादश यजूंषि । आयुर्यज्ञेनेत्यादीनि च षड्यजूंषि प्रजापतिदेवत्यानि हूयन्ते वाचने वा विनियुक्तानि । प्रथम द्वितीययोर्दैवी पङ्क्तिः तृतीयाया यजुर्गायत्री । क्रतव दैवीपङ्क्तिः । वसवे दैवपङ्क्तिः अहर्पतये दैवीजगती, अह्ने दैवीजगती । मुग्धाय यजु पङ्क्तिः, विनशिने ..... यजुस्त्रिष्टुप् । अन्त्याय । यजुर्बृहती । भुवनस्य । यजुर्बृहती । अधिपतये दैवीजगती षष्णा मा आपत्या गायत्रीछन्दः ॥

प्रजापते त्वस्मृता यजमान: ॥

प्रजापते प्रजा अभूम । अमृताअभूमेत्येतया यजमानोदेवता । प्रजापतयेजुर्बृहती यूपारोहणे विनियोग । स्वर्देवा यजुर्गायत्री गोधूमचषालाभमने विनियोग । अमृता यजुर्गायत्री गीयूर्षा यूपस्यातिक्रमणे विनयोग ॥

अस्मे दिशः ॥

अस्मे वाचस्पत्यस्य दिशो देवता । पूर्वेण सामजगती दिगासी

चये विनियोगः ॥

नमः पृथिवी ॥

नमो मातें इत्यस्य पृथिवी देवता सामीपृथिकभूम्यवेचये विनियोगः । व्यूहेन सामजगती । द्विधीपृथिगुवा ॥

इयमासन्दी ॥

इयं ते राडित्यासन्दीदेवता । देवीबृहतीमासद्यां चर्मास्तरणे विनियोगः ॥

यन्ता सुन्वन् ॥

यन्ताऽसि यमनइत्यस्य सुन्वन्देवता । यजमानस्योपवेशने विनियोगः । व्यूहेन जगद्बृहती ॥

वाजस्य प्राजापत्यं तृचं त्रैष्टुभम् ॥

वाजस्येमं प्रसवः । वाजस्येमां । वाजस्य नु प्रसवइतीदं त्र्यृचं प्रजापतिदेवतं त्रिष्टुपछन्दस्कं । सम्भृतस्य सर्वौषधस्य होमे विनियुक्तम् । वाजस्येममित्यस्य द्वितीयपादो व्यूहेन पूरणीयः प्रथमाया द्वितीयायाय चतुर्थो द्वादशाक्षरः । तृतीयायास्तृतीयः । तेन सर्वाधिकएकोनाः ॥

सोमन्तृचं तापसः ॥

सोमं राजानं । अर्यमणं, अग्ने अच्छेतीदं त्र्यृचं तापसऋषिरपश्यत् । सर्वौषधहोमएव विनियुक्तम् ॥

आद्या वैश्वदेव्यनिरुक्ताऽनुष्टुप् ॥

अस्य त्र्यृचस्याद्या सं म राजानमित्येषाऋक्विश्वदेवदेवताभिरुक्ता सद्यो विश्वदेवपदप्रयोगशून्या अनुष्टुपछन्दस्का । अत्र तृतीयः समक । तेनैऽशीना । अथ वा खड्गदेवसत्वादैखदेवीत्युक्तं । तथा च यास्क."यत्त् किंचि तुखहदेवतं तद्वैश्वदेवानां स्थाने युज्यतइति"। तेना-

देवता. एकाधिकाऋग्गायत्री । मित्रः मित्रोदेवता सामपङ्क्तिः । वरुणः वरुणोदेवता । ऋग्गायत्री । इन्द्रः इन्द्रोदेवता । एकाधिका-ऋग्गायत्री । विश्वेदेवा । विश्वेदेवताः सामपङ्क्तिः । वसवः । वसवो देवताः सामजगती । रुद्राः । रुद्रा देवताः । एकोना सामजगती । आदित्या. आदित्या देवता । एकोनासामजगती । अ-दितिः अदितिर्देवता । सामत्रिष्टुप् । प्रजापतिः । प्रजापतिर्दे-वताएकाधिकासामजगती । इति वाजपेय. समाप्तः ॥ २५ ॥

## अथ राजसूयः ॥

अत्रतदितिशेष । राजसूयपदेन तन्मन्त्रा अभ्यस्ते ॥

### वरुणस्यार्षम् ॥

राजसूयमन्त्राणां सर्वेषां वरुणऋषिरित्यर्थ. ॥

### एष ते मार्थिवम् ॥

एष ते निर्ऋ तइत्येतस्यङ्कः पृथिवीदेवतं । सामोष्णिक् । हविष्यज-होमे विनियुक्तम् ॥

### अग्निनेत्रेभ्यो देवार्षमाध्यायांतद्दशाद्यानि दैवानि ।

अग्निनेत्रेभ्यइत्यादीनि दश यजूंषि दैवानि देवदैवत्यानि । पञ्च-वातीयहोमे विनियुक्तानि । अग्निनेत्रेभ्यः सामोष्णिक् । यमनेत्रेभ्यः आसुरीगायत्री विश्व देवनेत्रेभ्यः सामानुष्टुप् । मित्रावरुणनेत्रेभ्यो देवेभ्यइत्यस्त्रिष्टुप्सि ऋग्गायत्री । मरुन्नेत्रेभ्यो देवेभ्यइत्यस्त्रिष्टुप्सि त । आसुरीगायत्री । सोमनेत्रेभ्य । एकाधिका ऋग्गायत्री । ये देवा अग्निः आसुरीगायत्री, ये देवा यमनेत्रा । सामानुष्टुप् । ये देवा वि-श्वदेवनेत्रा. । एकाधिका सामानुष्टुप् । ये देवा मित्रावरुणनेत्रा उत्तरासदइत्यस्त्रिष्टुप्सि । एकाधिका ऋगगायत्री । ये देवा मरुन्नेत्रा उत्तरासदइत्य.स्त्रिष्टुप्सि सामानुष्टुप् । ये देवाः सोमनेत्राः । साम-

पङ्क्तिः ॥

अग्ने मह्स्व देवश्रवा देववातश्च भारतावाग्नेयीमनुष्टुभम् ॥

भरतपुत्रौ देवश्रवा देववातश्चेतिद्वावृषी अपश्यता इष्टकाभो प-स्नुकादाने विनियोगोऽस्याः । अत द्वितीय. सप्ताक्षरस्त्रैकोना ॥

उपांशोरष्टौ त्रीणि रक्षोघ्नानि ॥

उपांशो गोर्वीर्येणेत्यादीनि त्रीणि यजूंषि रक्षोघ्नानि ॥ रक्षोघ्न देवता । उपांशो ग्रोरित्यस्य आसुरी गायत्री । होमे विनियोग. । रक्षसां त्वा । यजुरुपरिष्ठात् स्रुवनिरसने विनियोगः । अवधिष्म यजुर्गायत्री आगमने विनियोग अवधिष्मामुं । दैवीपङ्क्तिः, असौ हतो यजुर्बृहती । अनयोर्मन्त्रयोः प्रत्यभिचारे विनियोग. तत्रामुमसावित्यनयोः पादयोः स्थाने शत्रुनाम्नोः ग्रहणम् ॥

सविता द्वे यजमानः ॥

सविता त्वा, इम देवा इत्यनयोर्यजमानो देवता यजमानस्य दक्षिणं स्वाङ्गं गृहीत्वाऽध्वर्योर्जपे विनियोगः । सविता त्वा अतिजगती । इमं देवा अत्यष्टिः ॥ २६ ॥

अपो देवा अपो त्रिष्टुप् ॥

अपो देवा मधुमतीरितीयमृक् । आपो आपोऽस्या देवता इत्यर्षे त्रिष्टुप्छन्दः । द्वितीयो दृश्याक्षरः । तेनैकोना । सारस्वतीनां अपां ग्रहणे विनियोगः ॥

वृष्णऽऊर्मिर्लिङ्गोक्ता ॥(१)

अथ वृष्णऊर्मिरित्यादीनां स्वाहाकारान्तानां पूर्वपूर्वमन्त्राणां गृह्यमाणास्वप्सु असगृहीतहोमे विनियोगः, उत्तरोत्तर

(१) काण्वसर्वानुक्रमे देवतानिरुपितः पाठो नास्ति ॥

मन्त्राणामर्थां पङ्क्ति तत्र हुप्यन्जर्मिः । सामानुष्टुभो । इमसेनो ऽस्मि आसुरगायत्र्यो । अर्येतस्य सामोष्णिषी । पाजस्तीस । आसुरीगायत्र्यो । आपः परि । आगायत्र्यो । अपां पतिः सामानुष्टुभो । अपां गर्भः आसुरगायत्र्यो । सूर्यत्वचसः स्थ,सामानुष्टुभो । सूर्यवर्चसस्य । सामानुष्टुभो मांदाम्य आसुर्यनुष्टुभो । व्रजक्षितस्य आसुरगायत्र्यो । वाशास्य आसुरानुष्टुभो । शविष्ठास्य । सामोष्णिहो । जनभृतस्य आसुरगायत्र्यो । विश्वभृतस्य आसुरगायत्र्यो । आपः स्वराजस्थ । सामानुष्टुप् । मरीचीनां सर्वासामपां संसर्गे विनियोगः ॥

मधुमतीरनाधृष्टाऽग्नापे ॥

मधुमतीर्मधुमतीरनाधृष्टाः सीदतेत्येते यजुषी आपे अनयोरप्यो देवताऽत्यर्थः मधुमतीरित्यस्य एकोनाऽमजगती । अष्टादशसङ्ख्यानामपामोऽम्बरे पात्रे समासेके विनियोगः । अनाधृष्टाऽत्यस्य सामत्रिष्टुप् । समासिक्तानामपां मैत्रावरुणधिष्ण्य पुरस्तानुहाऽने विनियोगः ॥

सोमस्य धर्म ॥

सोमस्य त्विषिरसीत्यस्य धर्म देवता । आसुरीगायत्री । व्याघ्रचर्मास्तरणे विनियोगः ॥

अग्नये लिङ्गोक्तानि ॥

अग्नये स्वाहेत्यादीनि द्वादश यजूंषि लिङ्गोक्तदेवतानि पार्थहोमे विनियुक्तानि । अयाणां दैवीपङ्क्तिः सरस्वत्यै । यजुर्गायत्री । पूष्णे दैवीबृहती । । बृहस्पतये । दैवीजगती । इन्द्रायेत्याद्याः सप्तदैवपङ्क्तयः पवित्रे स्थ इत्यस्य तु नाम् ॥

अनिभृष्टमामम् ॥

अनिभृष्टमसीत्यनिन्देवत्तं । एकाधिका नामजगती । अपां व-

स्थापने विनियोगः ॥

सधमादो वारुणी त्रिष्टुप् ॥

सधमादो द्युम्निनीरितीयमृक् वरुणदेवत्या त्रिष्टुप्छन्दः अत्र द्वितीयचतुर्थयोर्व्यूहेन पूरणम् । अभिषेचनीयेषु पात्रेष्वपां व्यानयने विनियोगः ॥

क्षत्रस्य चतुर्णां तार्प्यपाण्ड्वाधीवासोष्णीषाणि ॥

क्षत्रस्योल्बमित्यादीनां चतुर्णां यजुषां क्रमेण तार्प्यपाण्ड्वाधीवासोष्णीषाणि देवता । क्षत्रस्योल्ब तार्प्यदेवता । यजुर्गायत्री । तार्प्यपरिधाने विनियोगः, क्षत्रस्य जराय्वसीत्यस्य पाण्ड्वदेवता । दैवीजगती । पाण्ड्वपरिधाने विनियोगः, क्षत्रस्य योनिरित्यस्याधीवासोदेवता । दैवीजगती । अधिवासप्रतिमोके विनियोगः । क्षत्रस्य नाभिरसीत्यस्योष्णीषं देवता । दैवीजगती । उष्णीषस्य सवेष्ट्य निवीतेऽवगूहने विनियोगः । नाभिदेशे परिहरणे वा विनियोगः ॥(१)

इन्द्रस्य धनुः ॥

इन्द्रस्यवार्त्रघ्नमसीत्यस्य धनुर्देवता । धनुष्प्रदाने विनियोगः । प्राजापत्या गायत्री ॥

मित्रस्य बाहू ॥

मित्रस्यासीत्यस्य बाहू देवते । यजुर्बृहती । धनुष्कोट्योर्मार्जने विनियोगः ॥

त्वया धनुः ॥

त्वयाऽयं वृत्रमित्यस्य धनुर्देवता दैवीजगती । यजमानायाथ धनुःसमर्पणे विनियोगः ॥

---

(१) तार्प्यं नाम क्षौमं वल्कलं घृताक्तवस्त्रं वा, पाण्ड्वं रक्तकम्बलं, अधीवासः कञ्चुक इत्येतेऽर्थाः सम्यङ्महीधराचार्येण प्रतिपादिताः ॥

इषा पशूनामिषः ॥

इषासीत्यादीनां दिग्भ्य पातेत्यन्तानां पशूनां यजुषां इषादो देवताः । इषासि, ऊर्जासि, सुमासीति नयाणां दैव्यनुष्टुप्छन्दस्त्रयाणां पूषामादाने क्रमेण विनियोगः । पातेनं प्राच्यं । दैवीपङ्क्ति पातेनं प्रत्यञ्चं यजुर्गायत्री । दिग्भ्यः दैवीबृहती । क्रमेण तिसृणामिपूर्णा समर्पणे विनियोग ॥

आविः प्राजापत्यम् ॥

आविर्मर्यादित्येतत्प्रजापतिदेवतं । दैवीबृहती । दापने विनियोगः समानाम् ॥

पराणि लिङ्गोक्तानि ॥

अस्मात्पूर्वोक्तादाविर्मर्या इत्येतस्मात्पराणि अग्रे पठ्यमानानि आविरुत्तो ऽस्मिनिरित्यादीनि लिङ्गोक्तदेवतानि । अग्न्यादिलिङ्गोक्तदेवतानि । आविरुत्तोऽग्निर्यजुर्बृहती । आवित्ते । आसुर्य्यनुष्टुप् । आविता । यजुर्बृहती । सर्वेषां वाचने विनियोगः ॥ ३१ ॥

अवेष्टा मृत्युनाशनम् ॥

अवेष्टा दन्दशूका इत्येतद्यजुर्मृत्युनाशनं । दैवीजगती केशवास्थे लोहायसप्रक्षेपे विनियोग, प्राजापत्यं यजु मृत्युनाशने विनियुक्तमिति अग्र संहिताभाष्ये ।

प्राची पञ्चानां यजमानः ॥

प्राचीमारोहेत्यादीना वर्षो द्र विणमित्यन्तानां पञ्चानां यजुषां यजमानो देवता । वाचने विनियोगः । प्राची व्यूहेन प्राजापत्या जगती । दक्षिणा । ऊर्ध्वा पङ्क्ति, प्रतीची । व्यूहेन प्राजापत्या जगती । उदीची । ऊर्ध्वा पङ्क्ति, । ऊर्ध्वा । साम्नीत्र्यक् ॥

प्रत्यस्तं मारुतम ॥

प्रत्यस्तं नमुचेरित्येतद्यजुर्दैवतं ॥ प्राजापत्यागायत्री । पादेन सीसनिरसने विनियोग. ॥

मृत्योरोजोऽसि सहः ॥

मृत्योः पाहि । ओजोऽसि, सहोऽसीत्यनयोर्यजुषोरग्निर्देवता । मृत्योरित्यस्य दैवीबृहती रुक्मस्याध पद करणे विनियोगः ओजोऽसी त्यस्य यजु पङ्क्ति रुक्मस्य शिरसि करणे विनियोगः ॥

हिरण्यरूपौ मैत्रवरुणौ त्रिष्टुब्यजुरन्ता ॥

हिरण्यरूपा उषसइत्येषा ऋक्मित्रावरुणदेवत्या त्रिष्टुप । अथ द्वितीयो दशाक्षरैरन्तैकोना यजुरन्ता । अत्रान्तो मित्रोऽसीत्येतद्यजु तस्य दैवीजगती छन्द । बाहूरुद्ग्रहणे विकल्पेनास्य धनुषो विनियोग. ॥

सोमस्य सुन्वन् ॥

सोमस्य त्विषादीनां बृहद्गणानां राजत्वमानां सुन्वन्यजमानो देवता । अभिषेके विनियोग । अत्राभिषिञ्चामि इत्यथ च्छन्द तदैवीत्यनयोर्यजुर्ष्वपि मन्त्रेष्वनुषङ्गः । अनुषङ्गस्य च वैदिकत्वान्मन्त्रान्तरमध्ये गणन कार्यं तत्र सोमस्य त्वा द्युम्नेनेति चतुर्गायत्री । अग्नेर्भ्राजसा व्यूहेन साम जगती । सूर्यस्य वर्चसा साम जगती । इन्द्रस्येन्द्रियेण साम जगती । इमन्देवाइत्यत्र तु पारायण । अत्राभिषेके विनियोगइति विशेष ॥

प्रपर्वतस्याग्नी त्रिष्टुप् ॥

प्रपर्वतस्येत्येषा ऋक् अब्देवत्या त्रिष्टुप् । काष्ठूतयस्याभिषेकेण प्रक्षिप्यने विनियोग ॥(१)

विष्णोःक्रमोऽसि लिङ्गोक्तानि ॥

---

(१) अभेपने इति पदपातिपाठ. ॥

विष्णोर्विक्रमणमसीत्यादीनि त्रीणि यजूंषि विङ्गोक्तानि । यजमानदेवतानीत्यर्थः । आद्यस्य प्राजापत्यागायत्री । ततो दैवीजगती । ततो दैवीत्रिष्टुप् यजमानस्य क्रमणे विनियोगः । भ- वानां क्रमेण ॥

प्रजापते न प्राजानत्वा विष्टुव्यजुर्मध्याऽयममुष्य- दसुः ॥

प्रजापते न त्वदित्यस्य त्रिष्टुप् । प्रजापतिर्देवता तया यजुर्मध्या अ- क्षालिष्टभो मध्येतृतीयचतुर्थपादयोरन्तराले यजुरस्तीत्यर्थः । कि- न्तयजुरित्यपेक्षायामाह । ययममुष्य यजुः ययममुष्य पिता सावस पितेत्येतावदेव तद्यजुर्मध्ये वर्तत इत्यर्थः । अत्र प्रजापते न इति त्रि- ष्टुभि प्रथमः पादो व्यूहेन पूरणीय । चतुर्थस्तु द्यक्षरः । तेनेको- ना । गार्हपत्यहोमे विनियोगः ॥

रुद्र यद्रौद्रम् ॥

रुद्र यत्त इत्येतद्रुद्रदेवतं । सामत्रिष्टुप् अभिमन्त्रोदकस्रियाया- मौधीये होमे विनियोगः ॥ १८ ॥

इन्द्रस्य लिङ्गोक्तानि ॥

इन्द्रस्य वज्रोऽसीत्यादीनि समिन्द्रियेणेत्यन्तानि लिङ्गोक्तदेवतानि । तत्र इन्द्रस्य वज्रोऽसि रथोदेवता । यजुर्गायत्री । रथावतारणे विनियोगः । मित्रावरुणयोस्त्वेत्यस्य रथोदेवता । सामानुष्टुप् । रथयोजने विनियोगः । अश्वयायै त्वा । सामोष्णिक् । रथो देवता । यजमानस्य रथारोहणे विनियोगः । मरुता । धुर्योदेवता । यजुर्बृह- ती । दक्षिणधुर्यमार्जने विनियोगः । आपाम यजमानोदेवता । य जुर्गायत्री । गवां मध्ये रथस्थापने विनियोगः । समिन्द्रियेण । य जमानोदेवता । दैवीपङ्क्तिः । यजमानस्य धनुरात्न्यां गोपस्पर्शने

विनियोगः ॥

मा ते संवरयः प्राजापत्यैन्द्रीं त्रिष्टुभम् ॥

मा तादृन्द्र ते इत्यनितीमामृचमिन्द्रदेवतां त्रिष्टुप्छन्दस्कां प्रजापतिरपश्यत् साधारण्यस्त्रिरपश्यत् । अत्र प्रथमो दशक. । द्वितीयो द्वादशकः । तृतीय एकादशक ॥ चतुर्थी व्यूहैनैकादशकाइति । इयमग्नि पात्र्यदेशे स्थापने विनियोगः ॥

अग्नये लिङ्गोक्तानि ॥

अग्नये त्वाइत्यादीनि चत्वारि यजूंषि लिङ्गोक्तदैवतानि दधिमोचनीयहोमे विनियुक्तानि । अग्नये । सोमाय यजुः पङ्क्तः महतां, इन्द्रस्येति, प्राजापत्ये गायत्र्यौ ॥

पृथिवि मातर्भूमिः ॥

पृथिवि मातरित्यस्य भूमिर्देवता । भूम्यवेक्षणे विनियोग आर्च्यं-नुष्टुप् ॥

हंसो वामदेवः सौरीं सप्तपञ्चपरब्रह्माभिधायिनीमतिजगतीम् ॥

हंसः शुचिषदितीमामृचं सूर्यदैवतां सप्तपञ्चपरब्रह्माभिधायिनीमभिधानीमतिजगतीछन्दस्कां वामदेवऋषिरपश्यत् । एषादर्शोऽन्वीक्ष्या विनियोगः अत्र प्रथमद्वितीयौ द्वादशकौ । तृतीयएकादशकः ।चतुर्थचतुर्दशकइति । तेन जगतीमतिक्रान्तात्यतिजगती । एकाक्षराधिका जगतीत्यर्थः । न तु द्वापञ्चाशदक्षरा ॥ - .

दृयच्छमानौ ॥

दृयदसीत्यस्य युङ्ङसीत्यस्य च शमशमानौ देवते । शमशमानयोरुपधाने विनियोगः । दृयदसीति द्वेयजुषी द्वादशाक्षरे साम्नगयत्र्यौ । शमशमानयोरुपधाने विनियुक्ते ॥

ऊर्गसि शाखा ॥

ऊर्गसूर्जमित्यस्य शाखादेवता । प्राजापत्या गायत्री । शाखोपस्पर्शने विनियोगः ॥

इन्द्रस्य बाहू ॥

इन्द्रस्य बाहूइत्यस्य बाहूदेवते । प्राजापत्या गायत्री । पयस्यायां यजमानबाहूरवहरणे विनियोगः ॥

स्योनाऽऽसासन्दी ॥

स्योनाऽसीत्यस्याऽऽसन्दीदेवता । दैवीजगती आसन्दीनिधाने विनियोगः ॥

उत्तरस्याधीवासम् ॥

वरुणस्य योनिरसीत्यधीवासोदेवता । अधीवासस्यास्तरणे विनियोगः दैवीजगती ॥

स्योनाऽ सुत्वन् ॥

स्योनामसीदेत्यस्य सुत्वन्देवता । एकाधिकाऽऽर्च्यायत्री । यजमानस्यासन्द्यामुपवेशने विनियोगः ॥

निषसोद शुनःशेपो वारुणीं गायत्रीम् ॥

निषसादेतीमामृच वरुणदेवतां गायत्रीं शुनःशेपऋषिरपश्यत् । अत्र प्रथमोऽष्टकः द्वितीयः षट्कः । तृतीयः सप्तकः । तेनेयं वर्द्धमाना गायत्री । यस्यास्तु षट्सप्तकाष्टकाः सा वर्द्धमानेति वचनात् । अथ वा काकुम्मती सन्नाम गायत्री । यस्या एकः पादः षडक्षरः सा काकुम्मतीत्युच्यते । षट्कैककुम्मतोति पिङ्गलोक्तेः । यजमानस्योरसमालम्भने विनियोगः ॥

अभिभूरस्यचा यजमानो वा ॥

अभिभूरसीत्यस्य यजुषो अक्षादेवता यजमानो वा । सामीक्षि-

क्। भचायां यजमानहस्ते आवपे विनियोगः॥

ब्रह्मँस्त्वमामन्त्रणानि पञ्चलिङ्गोक्तानि॥

ब्रह्मँस्त्वं ब्रह्मासीत्यादीनि पञ्चसङ्ख्यान्यामन्त्रणानि लिङ्गोक्तदेवतानि। ब्रह्मन्निति ब्रह्मदेवताकं ब्रह्मासीति प्रतिवचनानि यजमानदेवतानीत्यर्थः. प्रश्नप्रतिवचनेविनियुक्तानीत्यर्थः तत्र ब्रह्मन्नित्यस्य ब्रह्मदेवता दैव्युष्णिक्छन्दः। ब्रह्मामन्त्रणे विनियोगः। त्वं ब्रह्माऽसि सवितासीत्यस्य यजमानोदेवता। आसुर्यनुष्टुप्। त्वं ब्रह्माऽसि वरुणोऽसि यजुस्त्रिष्टुप्। त्वं ब्रह्मासीन्द्रोऽसि यजुर्बृहती। त्वं ब्रह्माऽसि रुद्रोऽसि। यजुःपङ्क्तिः। त्वं ब्रह्माऽसीत्येतावदेवपञ्चमे प्रतिवचनं। तत्र दैवी बृहती। सर्वेषां यजमानो देवता। ब्राह्मणप्रतिवचने विनियोगः॥

इन्द्रस्य स्फ्यः॥

इन्द्रस्य। वज्रोऽसि तेन मे इत्यस्य स्फ्यो देवता। यजुस्त्रिष्टुप्। यजमानादीनां स्फ्यसमर्पणे विनियोगः॥

अग्निः पृथुराग्नेयम्॥

अग्निः पृथुराग्नेय। अग्निः पृथुरित्यैनमग्निरग्निदैवतं। धृतभूमौ हिरण्यस्योपरि चतुर्गृहीतहोमे विनियुक्तं प्राजापत्यात्रिष्टुप्॥

स्वाहाकृता अन्त्या॥

स्वाहाकृताः सूर्यस्येत्यस्याचादेवता. साम्न्युष्टुप्। अपनिवापने विनियोगः॥

सविता लिङ्गोक्तदैवतम्॥

सविता प्रसवितेत्यैतल्लिङ्गोक्तदेवतं। सवित्रादिदेवतमित्यर्थः। अष्टिनात्यष्टिछन्दः। दशपेये शतसङ्ख्यानां ब्राह्मणानां समर्पणात्प्रागुपारम्भे विनियोगः॥ २८॥

अथ चरकसौत्रामणी ॥

अथातःतिशेष अथानतरं राजसूयैकदेशभूतचरकसौत्रामणी वक्ष्यते । सौत्रामण्या तन्त्रवदा वक्ष्यन्ते । चरकसौत्रामणीमन्त्राणामृष्यादिकमभिधीयतइत्यर्थः राजसूयान्ते विहितसौत्रामण्याश्चरकसौत्रामणीति संज्ञा ॥

अश्विनोरार्षम् ॥

अस्यामन्त्राणामश्विनावृषीइत्यर्थः ॥

अश्विभ्यां त्रीणि लिङ्गोक्तानि ॥

अश्विभ्यां पच्यस्वेत्यादीनि त्रीणि यजूंषि लिङ्गोक्तदेवतानि । सुरादेवतानीत्यर्थः. प्रोदमश्च विरूढचूर्णाना च संसर्गे विनियुक्तानि । अश्विभ्या । यजुर्गायत्री, सरस्वत्यै यजुरुष्णिक् इन्द्राय । यजुर्बृहती॥

वायुः सौमी गायत्री ॥

वायु पूतइत्येषा सोमदेवत्या गायत्री । अत्र तृतीय सप्ताक्षरेणैकोना । यकारव्यूहेन पूरणमिति केचित् । कुम्भे परिस्रुत्यावने विनियोग ॥

कुविदृचर्षे सुकीर्तिः काक्षीवत ॥

कुविदङ्गेत्येतदृचं काक्षीवतोऽपत्य सुकीर्तिरपश्यत् ॥

आद्या सौम्यनिरुक्ता त्रिष्टुप् ॥

अस्मिन् तृचे आद्या कुविदङ्गेत्येषा त्रिष्टुप अनिरुक्ता सोमदेवत्या । मध्ये सोमपदप्रयोगरहितेत्यर्थः ग्रहणेऽस्या विनियोग अत्र द्वितीयस्य व्यूहेन पूरणं । उपयामेति यजु । तस्य ग्रहो देवता एकपदग्रहणपक्षे द्वाविंशत्यक्षरा साम्नीत्रिष्टुप । ग्रहणे विनियोग । त्रयाणां ग्रहाणां ग्रहणपक्षे तु त्रीण्येतानि यजूंषि सोपयामानि । तत्र प्रथमस्य यजुस्त्रिष्टुप् । द्वितीयस्यासुर्यनुष्टुप । तृतीयस्य साम्नी-

ष्णिक्। त्रयाणां ग्रहाणां ग्रहणे क्रमेण विनियोगः ॥

युवमनुष्टुप् ॥

युवं सुराममित्येषाऽनुष्टुप्छन्दस्का ग्रहस्य पुरोनुवाक्यात्वेन विनियुक्ता। अथ चतुर्थ्यो व्यूहेन पूरणम् ॥

पुत्रमिव त्रिष्टुप् ॥

पुत्रमिव पितराविति या त्रिष्टुप्। ग्रहयागे याज्यात्वेन विनियुक्ता। अत्र द्वितीयो दशकस्तृतीयस्य व्यूहेन पूरणम् ॥

अश्विसरस्वतीन्द्रदेवत्येऽश्विसरस्वतीन्द्रदेवत्ये ॥

युवं सुराम, पुत्रमिवेतीमे द्वे ऋचौ याज्यपुरोऽनुवाक्ये अश्विसरस्वतीन्द्रदेवताके इत्यर्थः। अस्य सूत्रस्य द्विः पाठोऽध्यायसमाप्तिसूचनार्थः॥ ४०॥

इति श्रीश्रीविरश्मिषत्सम्राटस्थपतित्रिंशत्क्रतुकृन्महायाज्ञिकश्रीश्रीप्रजापतिसुतयाज्ञिकश्रीदेवकृते सर्वानुक्रमणिकाव्याख्याने प्रथमोऽध्याय समाप्त ॥ इति राजसूय समाप्तः। (१)श्रीगणेशाय नमः॥ अथ

---

(१) अत्र केषु चित्काश्यशर्मयसर्वानुक्रमपुस्तकेषु संहितापुस्तकेषु च दशमाध्यायसमाप्तावनुवाकसूत्राणि न तु प्रत्यध्यायेऽत. कारणान्मयाऽत्र दशमाध्यायान्तेऽनुवाकसूत्राणि लिख्यन्ते ॥ प्रथमाध्यायमारभ्य नवमाध्यायपर्यन्तमनुवाकसूत्राणि लिखितानि, इदानीं च तदध्यायाद्दशमाध्यायपर्यन्तं तानि लिख्यन्ते। एदन्तिस्तोमहीनामथ यथनस्त्वाऽऽकूत्यै द्वे ककसामयोश्वनस्तो अतडकृणुत मवैषा ते पञ्च वाच्ये रेष तु गायत्र्यश्चतुष्कौ चन्द्रन्त्वा षड दिदयाश्वगौ चतुर्थे दशैकोनपञ्चाशत् । ४ । १० । ४९ । अग्नेस्तनूश्चतस्रऽआपतये त्वाऽष्टौ तमायनी द्वे इन्द्रघोषश्चतस्रो युञ्जन्ते मनो नवदेवस्य त्वा पञ्च देवस्य त्वा षड विभूरसि पञ्चकृष्णोऽसि सप्तेद विष्णो पञ्च दशानुवाके पञ्च पञ्चाशत् । ५ । १० । ५५ । देवस्य त्वा सप्तापरीरयष्टौ नमस्ते सप्त सन्ते नव समुद्रं गच्छ पञ्चकौ हविष्मतीरिमास्तिस्रो हृदे त्वा सप्त देवस्य त्वाऽष्टौ षष्ठेऽष्टौ पञ्चाशत् । ६ । ८ । ५० । वाचस्पतये तिस्रोऽग्नेऽवेनः पञ्च ये देवासस्तस्रऽइन्द्राय त्वा द्वे मूर्धानं दिवस्तिस्रो यस्ते मघवऽइन्द्राग्नीऽआगत माया य ऽओमासश्चर्षणी धृतो विश्वे देवासऽइन्द्र मरुत्वो मरुत्वन्त मरुत्वानोजसा स जोषाऽइन्द्र महाँऽइन्द्रो महाँऽइन्द्रएक सप्त मेद्धा विंश० शतिश्च विंश० शत्। ७।

सर्वेषां यजुमन्त्राणां साधारणमृषिमाह ॥

## अथाग्निं प्रजापतिरपश्यत् ॥

अथानन्तरं प्रजापतिऋषिरग्निं अग्निसञ्ज्ञकम् वाक्यमपश्यत् । अग्निपदेन तन्मन्त्रा लक्ष्यन्ते । तेन युञ्जानइत्यत आरभ्याष्टौ अध्याया अग्निमन्त्राः । तेषां सर्वेषां प्रजापतिऋषिरित्यर्थः अत्र ग्रन्थे दर्शपूर्णमासाग्निष्टोमादिपदैस्तन्मन्त्रा लक्ष्यन्त इति कात्यायनाभिमत । यतः तत्र एते परमेष्ठीप्राजापत्यो यज्ञमपश्यद्दर्शपूर्णमासाविति श्रुते सति परमेष्ठीप्राजापत्यो दर्शपूर्णमासमन्त्राणामृषिरिति दर्शपूर्णमासपदस्य तन्मंत्रपरतां सूचितवान् । अत सर्वत्र कर्मग्रहणैस्तन्मत्रा लक्ष्यंते ।

## साध्या वाऽपश्यन् ॥

अग्निमित्यनुवर्त्तते । अथ वा साध्याऋषय प्रजापतेः प्राणभूता अग्निमपश्यन् । दृष्टवन्त अतो विकल्प अग्निमन्त्राणां प्रजापतिऋषिः साध्या वा ऋषयइति प्रतिचिति ऋषिभेदं वक्ष्यन्ते. पञ्चचितिकत्वमाह ॥

## सोऽग्निः पञ्चचितिकः ॥

---

२० । ४० । कदाचनस्तरीरसि नेन्द्र सश्चसि दाशुषे उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत इति । उपयामगृहीतोऽसि सुशर्माऽसीत्येकैका बृहस्पतिसुतस्य चतस्रो हरिरसि द्वे युक्वाहि तदिन्द्राग्नी इत्येकका यस्मान्न द्वे ऽअग्नऽआयूंषि पवस्वोत्तिष्ठन्नोजसाऽअदृश्रमस्य दृत्य चित्रं देवा ग्निर्नो वाचस्पतिं विश्वकर्म्मन्हविषा वावृधानो विश्वकर्म्मन्हविषा वर्द्धनेनैकैका ऽअग्नये त्वा चतस्रोऽग्ने द्वाविंशतिर्द्वात्रिंशं शत । प्राणाय मे पञ्चोद्गृह्णन्तव समिन्द्र णोऽपि माहिश्चतस्रऽएजतु दशमास्य. पञ्चाजिघ्र षट् परमेष्ठिनव नवमे सप्त षट्चत्वारिंशं शत । ९ । ७ । ४६ । देव सवित षडिन्द्रस्य वज्र सप्त देवस्य च त्रयोदशाग्नये पञ्च वाजस्येममग्निरेकाक्षरेण चतस्रो दशमे षट्त्रयश्चत्वारिंशं शत । १० । ४३ । एषतऽअग्ना देवाश्चतुष्कौ सविता त्वा तिस्र सोमस्य त्विषा षडवेष्टा सप्त सोमस्य त्वा षडिन्द्रस्य वज्रः पञ्च स्योना सि षट् सावित्रा द्वे ऽअश्विभ्या चतस्रऽएकादशमे दश सप्त चत्वारिंशा. द्वे । ११ । १० । ४७ । इत्यनुवाकसूत्राण ॥

अथमग्निः प्रजापतिर्द्दृष्टवान् भाष्या वा दृष्टवन्तः सोऽग्निपञ्चचितिको वर्त्तते । पञ्च चितयो यस्यासौ पञ्चचितिकः अथ प्रतिचित्यृषिनिर्देशमाह ॥

प्रथमा चितिः प्रजापतेः ॥

प्रथमचितिमन्त्राः प्रजापतेरार्षमिति शेषः । "प्रजापतिः प्रथमां चितिमपश्यत्प्रजापतिरेव तस्यामार्षमिति श्रुतिः" ॥

द्वितीया देवानाम् ॥

आर्ष द्वितीयचितिमन्त्राणां देवाऋषयइत्यर्थः । देवा द्वितीयां चितिमपश्यन्नित्यादिश्रुतिः ॥

तृतीयेन्द्राग्न्योर्विश्वकर्मणः ॥

आर्षमिति शेष । तृतीयचितिमन्त्राणां इन्द्राग्नी विश्वकर्मा चेत्येते त्रय ऋषयइत्यर्थः. इन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यन्नित्यादिश्रुतिः ॥

चतुर्थ्यृषीणाम् ॥

आर्षमितिशेष । चतुर्थचितिमन्त्राणां मन्त्रदृश ऋषयः "ऋषयश्चतुर्थीं चितिमपश्यन्नित्यादिश्रुति ॥

पञ्चमी परमेष्ठिनः ॥

आर्षमिति शेषः । पञ्चमचितिमन्त्राणां परमेष्ठी ऋषिरित्यर्थं । "परमेष्ठी पञ्चमीं चितिमपश्यदित्यादिश्रुतिः" ॥

अथ प्रतिकर्मदर्शिनः ॥

अथ साधारणऋष्यभिधानानन्तरं प्रतिकर्म कर्मकर्म प्रति ये दर्शिनो द्रष्टार स ते नेता न सावित्राण्यपश्यन्नित्यादिकाः । प्रातिस्विकमन्त्राणामृषयस्तेऽभिधीयन्त इति शेष ॥

युञ्जानोऽष्टौ सावित्राणि सवितापश्यत् ॥

युञ्जान प्रथममित्यादीन्यष्टौ यजूंषि अष्टौ कण्डिकाः सावित्राणि सवितृदेवत्यानि सवितारमपश्यत् । दृष्टवान् "सवितेति सावित्राण्य-ष्टग्रहीतमुते"। उखासम्भरणस्यादौ अष्टगृहीतं हुतेऽष्टानां विनियोगः । सविताणीत नपुंसकनिर्देशोऽष्टाभिर्यजुर्भिर्जुहोतीति श्रुतौ यजुष्ट्वाभिप्रायेण ॥

आद्या तृतीया वाऽनुष्टुप् ॥

युञ्जानद्यष्टानां मध्ये आद्या युञ्जानस्त्येषा तृतीया, युक्त्वाय स वितर्येषा वानुष्टुप् आद्यायां तृतीयः समाक्षरः चतुर्भस्य व्यूहेन पूरणं तृतीयायां द्वितीयः समाक्षरः तेनैकोने द्वे अपि ॥

चतुर्थीपथ्यो जगत्यौ ॥

युञ्जते तृतीय चतुर्थी यस्य द्वितीय समाक्षर तेनैकोने द्वे अपि चतुर्थीपथ्यष्ठयौ जगत्यो। युञ्जते तृतीयं चतुर्थी, यस्य प्रयाणमिति षष्ठी, एते द्वे जगत्यौ पथ्याः प्रथमस्य व्यूहेन पूरणं। द्वितीया गायत्री, युक्तेन मनसेत्येष द्वितीया गायत्री। अत्र तृतीय पदाक्षर तेनैय शङ्कुमती गायत्री भवति एकाक्षरपादके छन्दः शंकुमती भवती पञ्चमीत्रिष्टुप्, युजे वामितीयं पञ्चमीत्रिष्टुप् । चकाराद्द्वितीयचतुर्थ्यानां व्यूहेन पूरणं । समस्यास्तु प्रागुक्तम् ॥

इमं नो यजुरन्ते गायत्र्यनवसाना ॥

इमं नो देव सवितरित्येतदवसानान्तं यजु व्यूहेन प्राजापत्या जगती । अन्य यजुषोऽन्ते, ऋचा स्तोममित्येषा गायत्री अनवसाना अवसानरहिता । माऽपि यजुरन्ता यस्या अन्ते स्वाहेति पृथक् यजु. । अत्र देवस्य त्वेत्यस्य प्रजापतिसाध्या वा ऋषय अभ्रयादाने विनियोगोवेति विशेषः ॥

आददेऽग्निः ॥

मादहे गायत्रेणेत्यस्याग्निर्देवता धृतिश्छन्दः । १६ । अस्त्राऽ(?)दाने विनियोगः ॥

## इस्तोऽनुष्टुब्यजुरन्ता ॥

इस्तऽआधायेतायमनुष्टुप् यजुरन्ता । अस्या अन्ते आनुष्टुभेनेति यजुः । तस्य यजुस्त्रिष्टुप्छन्दः ॥ ११ ॥ इस्तऽइत्यस्यास्तृतीयचतुर्थयोः न्यूनेन पूरणं । अभ्रिमन्त्रणे विनियोगः । अस्या अभ्रिरेव देवता । अभ्रिरित्यस्य पूर्वसूत्रादनुवृत्तिः ॥ १ ॥

## प्रतूर्त्तन्नाभानेदिष्ट आश्वीमास्तारपङ्क्तिः ॥

प्रतूर्त्तं वाजिन्निति नाभानेदिष्टदृष्टा आश्वी अश्वदेवत्या आस्तारपङ्क्तिश्छन्दस्का । यस्या अन्त्यौ पादौ द्वादशकौ आद्यद्वितीयावष्टकौ सा आस्तारपङ्क्तिः । "अन्त्यौ चेदास्तारपङ्क्तिरित्युक्तेः" अश्वाभिमन्त्रणे विनियोगः ॥

## युञ्जाथां कुश्रिर्गार्दभीं गायत्रीम् ॥

युञ्जाथाऽ रासभमित्येषा ऋच गर्दभदेवता गायत्रीं कुश्रिरपश्यत् । गर्दभाऽभिमन्त्रणे विनियोगः ॥

## योगेयोगे शुनःशेपऽआजीम् ॥

गायत्रीमित्यनुवर्त्तते । योगेयोग इतीमामृचं अजदेवत्यां गायत्रीछन्दस्कां शुनःशेपऋषिरपश्यत् अजाभिमन्त्रणे विनियोगः ॥

## प्रतूर्वन्त्रिष्टुब्विराड्रूपायजुर्गर्भा ॥

प्रतूर्वन्नवक्रामन्निति विराड्रूपा त्रिष्टुप् यजुर्गर्भा । यजुर्मध्ये मदूर्ध्वोऽन्तराले यस्याः सा यजुर्गर्भा । यस्यास्त्रयः पादा एकादशाक्षरा एको दशाक्षरः सा विराड्रूपा एकादशिनस्त्रयश्चैकश्च विराड्रूपेत्युक्तेः । अत्र द्वितीयो द्वादशाक्षरः तेनैकाधिका अस्याः पूर्वार्द्धस्य अश्वस्य प्रागुत्क्रमणे विनियोगः यजुर्गर्भेत्युक्तं किं तद्यजुरि-

स्पर्शयामाह। तत्र यजुः उर्वन्तरिक्षं वीहीत्येतावत्परिमाणमस्या मध्ये यजुरित्यर्थः। गार्हपत्यात्क्रमणेऽस्य विनियोगः दैवीजगती॥

पृथिव्यास्त्रीण्याग्नेयानि॥

पृथिव्याः सधस्थादित्यादीनि त्रीण्यग्निदेवत्यानि यजूंषि। पृथिव्याः आसुरीगायत्री। प्रजस्य मागमने विनियोगः, अग्निं पुरीष्यमङ्गिरस्वदच्छेमस्त्वस्य साम्नगायत्री। पिण्डं प्रति गमने विनियोगः। अङ्गिरस्वदच्छेमस्त्वासुर्यनुष्टुप्। अनड्वाहपुत्रमपेक्षणे विनियोगः॥

अन्वग्निरान्नेयी त्रिष्टुभं पुरोधमः॥

अन्वग्निरुषसामित्येतामृचमग्निदेवत्यां त्रिष्टुभं पुरोधसत्त्वयोऽपश्यन्। वल्मीकवपाच्छिद्रेण पिण्डेक्षणे विनियोगः। अत्र प्रथमपादस्य व्यूहेन पूरणम्॥

आगत्य मयोभुव आग्नेयमनुष्टुभम्॥

आगत्य वाजीतीमामृचमग्निदेवतामनुष्टुभं मयोभुवऋषयोऽपश्यन्। अश्वाभिमन्त्रणेऽस्या विनियोगः अत्रापि प्रथमस्य व्यूहेन पूरणम्॥

आक्रम्यानुष्टुप्॥

आक्रम्य वाजिन्नित्येषाऽनुष्टुप्। अश्वदेवत्या पाद्री पदानुवृत्तेः। अश्वपादेन पिण्डस्याधिष्ठापने विनियोगः॥

द्यौस्ते बृहती॥

द्यौस्ते पृष्ठमित्येषा बृहती। अश्वदेवत्या। अश्वस्योपरि पाणिं धारयतश्चारणे विनियोगः। द्यौस्ते पृष्ठमित्येषा आर्षी बृहती। पादानामनियताक्षरत्वेऽपि षट्त्रिंशदक्षरत्वात्। व्यूहेन छन्दः पूर्तिः॥

उत्क्राम विराट्॥

यदाप्याग्नेयीत्यनुवर्तते उत्क्राम महत इत्येषा अश्वदेवत्या विराट्छन्दस्का । यस्या दशाक्षरायत्वारः पादाः सा विराट्पङ्क्तिः,, "वैराजे विराडित्युक्तेः" अत्र द्वितीय एकादशकः । तेनैकाधिका अश्वस्योत्क्रमणे विनियोगः ॥

उदक्रमीत्त्रिष्टुप् ॥

आश्वीत्यनुवर्तते । उदक्रमीद्द्रविणोदा इतीयमृक् अश्वदेवत्या त्रिष्टुप् अश्वाभिमन्त्रणे विनियोगः ॥

आत्वा द्वे गृत्समद आग्नेय्यौ ॥

आत्वा जिघर्मि आविश्वत इतीमे द्वे ऋचौ अग्निदेवत्ये गृत्समदऋषिदृष्टे । आत्वेत्यस्यास्त्रिष्टुप्छन्दः आविश्वत इत्यस्या अपि त्रिष्टुप्छन्दः त्रिष्टुप्पदानुवृत्तेः अथ "यत्त्रिष्टुभो तेनेन्द्र इति श्रुतेश्च" । व्यूहेन छन्दः पूरणं द्वितीयस्याः अश्वपदे मृत्पिण्डस्योपरि आज्याहुतिहोमे विनियोग उभयोः ॥

परि सोमको गायत्रीम् ॥

आग्नेयीपदमनुवर्तते । परिवाजपतिरितीमामृचमग्निदेवत्यां गायत्रीछन्दस्कां सोमकऋषिरपश्यत् । अभ्रेः पिण्डपरिलेखे विनियोगः । अत्र द्वितीये व्यूहः ॥

परि त्वा पायुरनुष्टुभम् ॥

आग्नेयीपदमनुवर्तते परित्वाग्ने पुरमितीमामृचमग्निदेवतामनुष्टुप्छन्दस्कां पायुऋषिरपश्यत् । पिण्डपरिलेखने विनियोगः ॥

त्वमग्ने गृत्समदस्त्रिष्टुभम् ॥

आग्नेयीत्यनुवर्तते । त्वमग्ने द्युभिरितीमामृचमग्निदेवत्यां त्रिष्टुप्छन्दस्कां । गृत्समदऋषिरपश्यत् । अत्र प्रथमान्त्यौ एकादशकौ द्वितीयतृतीयौ नवाक्षरौ । एवं चत्वारिंशदक्षरा इयं यत

क्षरैव । यदा च तृतीयचतुर्थौ दशाक्षरौ क्रियेते तदेयं विराट्स्थाना त्रिष्टुब् भवति । द्वौ वा वैराजौ नवकश्चेष्टुभश्च विराट्स्थानेत्युक्तत्वात् । तथा च काण्वसंहिताभाष्ये । त्वामग्नऽइतिगृत्समदऽआग्नेयी त्रिष्टुप्पङ्क्ति । सर्वजगतीमित्यपि पाठोऽस्त्येव । ऋग्वेदानुक्रमणामपीयं जगत्येवोक्तास्ति । तदा त्वस्यां मा त्वमग्न्दा' भजित तुवमग्नइत्येवं सप्तभिर्व्यूहैः । सप्ताक्षराणि संपद्यन्ते । ततः दिवस्परिविद्यौ व्यूह एवं जगती सम्पद्यते । तथा च छन्दोगानां । त्वमग्ने त्वतुगन्ध पूर्वपङ्क्ति । तदा त्वमग्ने गृत्समदो जगतीमित्यपि पाठो भवत्येव । पिण्डपरिलेखनेऽस्या अपि विनियोग ॥ २ ॥

## पृथिव्याऽआग्नेयम् ॥

देवस्य त्वेत्यस्य प्रागुक्त । अत्र प्रजापतिऋषिः पिण्डखनने विनियोगइति विशेष. पृथिव्याः सधस्थादित्येतद्यजुरग्निदेवतम् । व्यूहेना त्युष्टिछन्दः । अस्या पिण्डखनने विनियोग: ॥

## अपां पुष्करपर्णं स्वराट्पङ्क्तिः ॥

अपां पृष्ठमसीत्यस्याः पुष्करपर्णं देवता । स्वराट्पङ्क्तिछन्दः । द्व्यक्षराधिकं सर्वं छन्दः विराडित्युच्यते "द्वाभ्यां विराड्स्वराजावित्युक्तेः ।" आद्यौ पादौ दशकौ । अंत्यावेकादशकाविति पङ्क्तेर्द्व्यक्षराधिकत्वादिराड्त्वं युक्तं । तथा च छन्दोगानां द्व्यधिका स्वराडिति । अस्याः कृष्णाजिनस्योपरि पुष्करपर्णास्तरणे चत्वाराणां पादानां विनियोग । दिवो मात्रयेत्यस्य चतुर्थपादस्य विमार्जने ॥

## शर्म द्वे अनुष्टुभौ कृष्णाजिनपुष्करपर्णे ॥

शर्म च स्थः, संवसाथामितीमे द्वे ऋचावनुष्टुभौ अनयोः कृष्णाजिनपुष्करपर्णे देवते । कृष्णाजिनपुष्करपर्णयोरभिमर्शने विनियोग

पुरीष्योऽग्नि ॥

पुरीष्योऽसि विश्वभरा इत्यस्याग्निर्देवता पिण्डाभिमर्शने विनियोगोऽस्य । इयं प्रतिष्ठागायत्री । अत्र प्रथमोऽष्टक द्वितीय. सप्तक तृतीय षट्क. । "अष्टौ सप्तषट्चेत् प्रतिष्ठेति पिंगलः" । कात्यायनोऽपि । यस्यास्तु षट्सप्तकाष्टका. सा वर्द्धमाना विपरीता प्रतिष्ठेति । छन्दोगानां च । अष्टसप्तषड्भिः प्रतिष्ठेति ॥

त्वामग्ने तृचं भरद्वाजमाग्नेयम् गायत्रम् ॥

त्वामग्ने पुष्करात्, तमुत्वा दध्यङ्, तमुत्वा पाथ्य, इत्येतत्तृचमग्निदैवतम् गायत्रीछन्दस्कं भरद्वाजऋषिरपश्यत् । पिण्डपरिग्रहणे विनियुक्तं । तमुत्वा दध्यङ्ङस्य व्यूहेन पूरणम् । तमुत्वा पाथ्य इत्यस्यापि ॥

सीद होतर्देवश्रवा देववातश्च त्रिष्टुभम् ॥

आग्नेयपदमनुवर्त्तते । तदाग्नेयीमिति विपरिणतस्य सम्बध्यते ॥

सीद होतः स्वऽउलोकइतीमामृचमग्निदेवत्यां त्रिष्टुभम् ॥

देवश्रवादेववातश्चेतीमौ द्वावपि अपश्यताम् ॥

निहोता गृत्समदः ॥

त्रिष्टुभमाग्नेयमिति चानुवर्त्तते निहोता होतृषदन इतीमामृचं अग्निदेवत्यां त्रिष्टुप्छन्दस्कां गृत्समदऋषिरपश्यत् ॥

सं॰ सीदस्व प्रस्कण्वो बृहतीम् ॥

सं॰ सीदस्वेतीमामृचं अग्निदेवत्यां बृहतीं प्रस्कण्वऋषिरपश्यत् । अत्राप्याग्नेयपदमनुवर्तते । यकारविकर्षेण तृतीये द्वादशाक्षरपूर्त्तिः । त्वामग्न इत्यादितृचस्य पुष्करपर्णे पिण्डनिधाने विनियोग इति केचित् ॥ २ ॥

अपो देवीः सिंधुद्वीपोऽप्यापी न्यङ्कुसारिणीम् ॥

अपो देवीरित्यप्या न्यङ्कुसारिणीबृहतीछन्दः अपो देवता सिन्धुद्वीपऋषिरपश्यत्। यस्या द्वितीयपादो द्वादशाक्षरः तस्य व्यूहेन पूरणम्। तृतीयो नवाक्षरः अभ्रे अपामवनयनेऽस्या विनियोगः॥

सन्नो त्रिष्टुप्पार्थिवोऽर्द्धो वायव्योऽर्द्धः ॥

सन्नो वायुरित्यस्यास्त्रिष्टुप्छन्दः। अस्या ऋचोऽर्द्धः पार्थिवः पृथिवीदेवतः अपरोऽर्द्धो वायव्यः वायुदेवतः शकटमध्ये वायुप्रक्षेपे विनियोगः। अत्र चतुर्थ एकादशकः। तस्य व्यूहेन पूरणं वा एकोना वा॥

सुजातोऽनुष्टुबाग्नेयी ॥

सुजातो ज्योतिषेतीयमनुष्टुबग्निदेवत्या कृष्णाजिनपुष्करपर्णयोरन्ते ग्रहणे विनियुक्ता। अत्र द्वितीयो नवकस्तेनैकाधिका॥

उदुतिष्ठ विश्वमनाः पथ्याबृहतीम् ॥

आग्नेयीमनुवर्त्तमान आग्नेयीमिति विपरिणमते अर्थवशाद्विभक्तिविपरिणाम इति न्यायात्। एवं सर्वत्र ज्ञेयं। उदुतिष्ठ स्वध्वरेतीमामृचं पथ्याबृहतीछन्दस्कां विश्वमना ऋषिरपश्यत्। चतुर्थं बृहती तृतीयो द्वादशक इति बृहत्येवात्र पथ्याबृहतीत्युच्यते। पथ्यापूर्वश्चेत्तृतीय इति पथ्यालक्षणत्वात्। पिण्डमादायोत्थापने विनियोगः। अत्राद्यो व्यूहेन पूरणम्॥

ऊर्द्ध्वः कण्व उपरिष्टाद्बृहतीम् ॥

आग्नेयीमितिवर्त्तते ऊर्द्ध्व ऊषुण इमामृचमग्निदेवतामुपरिष्टाद्बृहत्युच्यते। अन्त्यश्चेदुपरिष्टाद्बृहत्युच्यते। "अन्त्यश्चेदुपरिष्टाद्बृहतीत्युक्तेः"। पिण्डस्य प्राक्प्रग्रहणेऽस्या विनियोगः॥

स जातस्त्रितस्त्रिष्टुभम् ॥

अश्वाभिमन्त्रणे विनियोगः अत्राप्याग्नेयीत्यनुवर्तते अत ह्यश्वोऽग्नीकृत्य स्तूयते । अत्र प्रथमतृतीययोर्व्यूहेन पूरणम् ॥

## स्थिरो रासभेत्यनुष्टुबुष्णिग्वा ॥

स्थिरो भवेतीयमृक्रासभेयी रासभदेवत्या अनुष्टुब्वा उष्णिग्वा । त्रिंशदक्षरत्वाद्धिकस्य. । अथाद्ययोः पादयोर्यथाक्रमव्यूहसम्भवेऽपि वैकल्पिकं द्व्यधिकोष्णिक्त्वमाह । अतएव ज्ञायते । व्यूहेन पूरणं संभवत्यपि एकद्व्यधिकन्यूनत्वादिना छन्दोन्तरं विकल्पेन कल्पतइति । रासभाभिमन्त्रणेऽस्य विनियोगः ॥

## शिवो भवाजो पथ्याबृहती ॥

शिवो भव प्रजाभ्यइतीयमजदेवत्या पथ्याबृहतीछन्दस्का । अत्र प्रथमः सप्तकः । द्वितीयोऽष्टकः । तृतीयोनवकः । चतुर्थोऽपि व्यूहेन नवकइति । अनुष्टुब्बृहतीवेति संहिताभाष्ययोः । अजाभिमन्त्रणे विनियोगः ॥

## प्रैतुलिङ्गोक्ता महापङ्क्तिस्त्र्यवसाना ॥

प्रैतु वाजीत्येषा लिङ्गोक्तदेवता महापङ्क्तिछन्दस्का । त्र्यवसाना अवसानत्रयोपेता । आद्यावर्द्धर्चावश्वदेवत्यौ । तृतीयोऽर्द्धर्चो रासभदेवतइति लिङ्गोक्तशब्दार्थः । अत्र तृतीयचतुर्थौ व्यूहेन पूरणीयौ । एवं षडपि पादा अष्टाक्षराः सन्ति अतो महापङ्क्तिरियं । "षडष्टकाया महापङ्क्तिरित्युक्ते" आद्यार्द्धर्चयोरश्वस्योपरि पिण्डग्रहणे विनियोगः तृपाग्निमित्यस्य खरस्योपरि पिण्डधारणे विनियोगः ॥

## अग्ने गायत्र्येकपदाग्नेयी ॥

अग्नआयाहीतीयमेकपदागायत्री अग्निदेवत्या । खरात्पिण्डस्य प्रत्याहरणे विनियुक्ता ॥

ऋतमग्निमाग्नेये ॥

ऋतं० सत्यं । अग्निं पुरीष्यमित्येते यजुषी आग्नेये अग्नि-देवते । ऋतमिति प्राजापत्या गायत्री । अजस्योपरि पिण्डग्रहणे विनियुक्ता । अग्निं पुरीष्यं । साममगायत्रीपनष्टापुरुषेत्वे विनियोगः ॥

ओषधयस्त्रिष्टुबनुष्टुभावोषधिदैवत्ये ॥

ओषधयः प्रतिमोदध्वं, ओषधयः प्रतिगृभ्णीतेतीमे ऋचौ क्रमेण त्रिष्टुबनुष्टुप्छन्दस्के ओषधिदैवत्ये । परिवृतमध्ये पिण्डनिधानेऽनयो यत्र प्रथमाया द्वितीयो द्वादशक तृतीया दशकः प्रथमान्त्याविकादशकौ । तेन पूर्वैव त्रिष्टुप् । द्वितीयो द्वादशकः तृतीया दशकः प्रथमान्त्याविकादशकौ । तेन पूर्वैव त्रिष्टुप् । द्वितीयायाः पञ्चमो नवक अन्ये षट्का तेनैकाधिका । परिहृतमध्ये पिण्डनिधाने विनियोगः उभयोः ॥

व्यस्यन्त्वाग्नेयोऽर्द्धर्चः ॥

व्यस्यन्विश्वा इत्ययमर्द्धर्चोऽग्निदेवतः ॥

विपाजसोत्कील. कात्य आग्नेयीं त्रिष्टुभाम् ॥

विपाजसा पृथुनेतीमामृचमग्निदेवत्यां त्रिष्टुप्छन्दस्कां कात्यः कतस्य पुत्र उत्कीलो नन्दर्षिरपश्यत् । योक्त्राबद्धस्य पिण्डस्य विमोचने विनियोगः ॥ ४ ॥

आपो ह्यापर्ठ० सिन्धुद्वीपस्तृचं गायत्रम् ॥

आपो हि ष्ठेतीदं तृच अब्देवत गायत्रीछन्दस्क सिन्धुद्वीपऋषिरपश्यत् पर्णकषायपक्वोदकस्य पिण्डस्योपर्यासेके विनियुक्तम् ॥

मित्रउपरिष्टाद्बृहती मैत्री ॥

मित्र सर्ठ०सृज्येतिमित्रोदेवताउपरिष्टाद्बृहतीछन्दः अजलोमभिः

पिण्डस्य संसर्जने विनियोगोऽस्याः अत्र चतुर्थं सप्तकः । तेनैकोना यकारव्यूहो वा ॥

रुद्राऽअनुष्टुब्रौद्री ॥

रुद्राः सर्ठ० सृज्येत्यनुष्टुप्छन्दस्का रुद्रदेवत्या शर्करापीरसाश्मचूर्णं पिण्डस्य संसर्जने विनियुक्ता ॥

सर्ठ० सृष्टां द्वे सिनीवालीदैवत्ये ॥

सर्ठ०सृष्टामितिद्वे ऋचौ सिनीवालीदैवत्ये अनुष्टुप्छन्दस्केऽनुष्टुप्पदानुवर्तते । पिण्ड सयवने विनियोग उभयोः. सर्ठ०सृष्टामित्यत्र द्वितीयतृतीयौ सप्ताक्षरौ । अन्त्यावष्टकौ । तेनदूयूना । व्यूहो वा । सिनीवालीत्यत्र द्वितीयस्य व्यूहेन पूर्त्तिः, उखामादित्या । अनुष्टु बित्यनुवर्त्तते । उखां कृणोत्वित्ययमनुष्टबादित्य । अदितिर्देवता । पिण्डमंयवनएव विनियुक्ता अत्रापि प्रथम सप्तक, तेनैकोना । यकारव्यूहो वा ॥

मखस्य मृत्पिण्डः ॥

मखस्य शिरोऽसीत्यस्य मृत्पिण्डो देवता । यजुर्गायत्री मृत्पादाने विनियोग. ॥

वसवस्त्वा लिङ्गोक्तानि सर्वत्र ॥

वसवस्त्वा कृण्वन्त्वित्यादीनि लिङ्गोक्तदैवतानि उक्तदेवतानीत्यर्थ नकेवलमत्र किं तु सर्वत्र वसवस्त्वेत्यादीनि लिङ्गोक्तदैवतानीत्यर्थः वसवस्त्वा धूपयतु वसवस्त्वाच्छृन्दन्त्वित्यादी । तत्र वसवस्त्वा । एकाधिका ब्राह्मी अनुष्टुप् । उखातलप्रथमने विनियोग । रुद्रास्त्वेत्यस्यार्षीअनुष्टुप् । एकाधिका । प्रथमभान्त्वरचाने विनियोग, आदित्यास्त्वा ब्राह्मी अनुष्टुप् । उत्तरचात्वाधाने विनियोग विश्वेत्वा एकाधिका ब्राह्मी बृहती । समीकरणे विनियोग ॥

## अदित्यै रास्ना ॥

अदित्यै रास्ना देवताः । यजुर्गायत्री । वर्तिकरणे विनियोगः ॥

## अदितिरौखम् ॥

अदितिष्टे बिलमित्यस्य उखादेवता यजुर्बृहती । उखाया बिल स्पर्शने विनियोगः ॥

## कृत्वायादित्योष्णिगुष्णिगनुष्टुब्वा ॥

कृत्वायसामितीयमृक् अदितिदेवत्या उष्णिक्छन्दस्का । निष्पन्नाया उखायां भूमौ निधाने विनियोगः । अत्र तृतीयपादेऽष्टकः । तेन त्र्यधिकोष्णिक् । अनुष्टुब्वा तदा च पुनेभ्यः गायच्छतृदतितृतीयः पादो व्यूहेन पूरणीयः उष्णिगनुष्टुब्वेति संहिताभाष्ययोः पाठोऽस्ति । अथ वसवस्त्वा धूपयन्त्वित्यादीनि सप्त यजूंषि उखायां धूपने विनियुक्तानि । तेषां देवतोखा प्रागुक्ता । छन्दांस्युच्यन्ते वसवस्त्वात्स्वगायत्री । रुद्रास्त्वा । व्यूहेनत्स्वगायत्री । आदित्या त्स्वगायत्री । विश्वे त्वा । व्यूहेन सामजगती । इन्द्रस्त्वा यजुरुष्णिक् । वरुणस्त्वा यजुरनुष्टुप् । विष्णुस्त्वा । यजुरुष्णिक् ॥

## अदितिरावटम् ॥

अदितिष्ट्वा देवीत्येतद्यजुरवटदेवतम् । व्यूहेन प्राजापत्यात्रिष्टुप् खननखनने विनियोगः ॥

## देवानां पञ्चौखानि ॥

देवानां त्वा पत्नीरित्यादीनि पञ्चौखानि । एषामुखादेवतेत्यर्थः । तत्र देवानां त्वा । प्राजापत्या त्रिष्टुप् । उखावधाने विनियोगः । धिषणास्त्वा । प्राजापत्यात्रिष्टुप् उखाया आदीपने विनियोगः वरूत्रीः त्स्वबृहती,ग्नास्त्वा । सामजगती । जनयस्त्वा त्स्वचं । पङ्क्तिः वरूत्रीरित्यादीनां चयाणामुखामीक्षमाणस्य जपे विनियोगः ॥

मित्रस्य विश्वामित्रो गायत्रीम् ॥

मित्रस्य चर्षणीधृत इतीमामृचं मित्रदैवत्यां गायत्रीं विश्वामित्रऋषिरपश्यत् । पुनः पुनः अपयमप्रक्षेपे विनियोगः ॥

देवस्त्वा सावित्री बृहती ॥

देवस्त्वा सवितेत्येषा सवितृदैवत्या बृहतीछन्दस्का । उपयोदापेऽस्या विनियोगः । पच्यमानेत्यभोपायां उत्तानत्वकरणे । एकाधिका चार्षीबृहती इयं । पादानामनियतापरत्वेऽप्यक्षराणां तावत्संख्याकत्वात् ॥

उत्थाय पूर्वार्धर्चोऽग्न्योऽप्युत्तरो मैत्रः ॥

बृहतीत्यनुवर्तते । उत्थाय बृहती भवतीयं बृहतीछन्दस्का । अस्या पूर्वार्धर्चोऽग्न्यः । अग्निदैवतः । अर्घ्योद्यमने विनियुक्तः । मित्रेणात्त्ययमुत्तरोऽर्धर्चो मैत्रः मित्रदैवतः । अग्निं विलापे अन्नायाः स्थापने विनियोगः । अत्र प्रथमोऽष्टकः । द्वितीयस्सप्तकः तृतीयो द्वादशकः । चतुर्थोऽष्टक इति पूर्वं बृहती । वसवस्त्वाऽऽच्छन्दन्त्वित्यादीनि चत्वारि यजूंषि वस्वादिदैवतानि अज्ञावयसोऽवसेके विनियुक्तानि । वसवस्त्वा । प्राजापत्या । रुद्रा- स्त्वा । प्राजापत्याऽनुष्टुप् । आदित्यास्त्वा प्राजापत्या । विश्वे त्वा साम्नीजगती ॥ ५ ॥

आकूतिं त्रिष्टोकान्युद्ग्रभणानि ॥

आकूतिमग्निं प्रयुजमित्यादीनि यजूंषि त्रिष्टोकदैवतानि । अग्न्यादिगन्तांशदेवतानीत्यर्थः । तथा चोद्ग्रभणसंज्ञानि । चानि- मोद्ग्रभणवर्द्धानि विनियुक्तानि । आकूतिं यजुः षडक्षरैः । मेधां मि- त्रः । यजुस्त्रिष्टुप् । चित्तं । यजुर्जगती । प्रजापतये । यजुः षड्भिः विश्वो देवस्येत्यस्य तु माधुच्छं दर्शं अनुमित्रकरणे पुनः आहारा-

गनिकरण प्राजापत्यादिष्वपि. श्रौदुम्बरपक्षहोमे विनियोग इति विशेषः॥

मा सौर्ख्यौ गायत्रीत्रिष्टुभौ॥

मा सु भित्था। इत्थं इत्य देविदत्येते ऋचौ सौर्ख्यौ उखादेवत्यौ क्रमेण गायत्रीत्रिष्टुप्छन्दस्कौ॥

अग्निश्च पादश्चाग्नेयः॥

मा सु भित्थामृचमग्निर्येद करिष्यथ इत्ययं पादोऽग्निदेवतः। मा सु भित्था इति द्वयोरुखाधिश्रयणे विनियोगः॥

द्रन्नः सोमाहुतिराग्नेयीं गायत्रीम्॥

द्रन्नः सर्पिरितीमामृचमग्निदेवत्यां गायत्रीछन्दस्कां सोमाहुतिर्ऋषिरपश्यत्। कार्मुकसमिदाधानेऽस्या विनियोगः। अत्राद्ययोर्व्यूहेन पूरणम्॥

परस्या विरूपऽआङ्गिरसः॥

गायत्रीमित्यनुवर्त्तते। परस्याऽअधीतीमामृचमग्निदेवत्यां गायत्रीछन्दस्कां अङ्गिरसोऽपत्यं विरूपऋषिरपश्यत्। वैकङ्कतसमिदाधानेऽस्या विनियोगः द्वितीयस्य व्यूहेन पूरणम्॥

परमस्याऽआरुणिरनुष्टुभम्॥

परमस्या इतीमामृचंमग्निदेवतामनुष्टुप्छन्दस्कामारुणिऋषिरपश्यत् श्रौदुम्बरसमिदाधाने विनियोगः॥

यदग्ने हे जमदग्निः॥

अनुष्टुभमित्यनुवर्त्तते, यदग्ने, यदत्तीत्यृग्द्वयमग्निदेवत्यं अनुष्टुप्छन्दस्कं जमदग्निऋषिरपश्यत्। यदग्नऽइत्यस्याः परशवृक्णसमिदाधाने विनियोगः। अत्र चतुर्थः समाक्षरः तत्र व्यूहो वा एकोना वा, यदत्युपेत्य साधशयसमिदाधाने विनियोगः। तत्र प्रथमचतुर्थयोः

व्यूहेन पूरणम् ॥

## अहरहर्नाभानेदिष्टस्त्रिष्टुभौ ॥

अहरहरप्रयाव, नाभा पृथिव्या इतीमे ऋचौ त्रिष्टुप्छन्दस्के अग्निदेवत्ये नेदिष्टऋषिरपश्यत् । अथवा नाभानेदिष्टइत्येव पश्यावस्य ऋषिनाम । मतुर्भ नाभानेदिष्टइत्यत्र तथा दर्शनात् । त्र्यलिगत्व तु त्रिष्टुभाविति द्विवचनाद्गम्यते । पशागसमिदाधानेऽनयोर्विनियोग नाभा पृथिव्या इत्यस्यां द्वितीयतुर्यौ पादौ जागतौ । तथापीयं त्रिष्टुबेव । जगती द्वे तु जागतौ यस्याः सा जागतीजगतीत्रिष्टुभे त्रिष्टुबिति परिभाषणात् ॥

## या सेनाः अनुष्टुभ ॥

तत्र या सेनाइत्याद्याः सर्वाऋचोऽनुष्टुपछन्दस्का । सर्वाअग्नेय्य पर इत्यभधीत्याद्याः सर्वा समिदाधानकारणमन्त्ररूपा ऋचोऽग्निर्देवत्याः तत्र या सेनाइत्यस्या प्रथम. सप्तक । द्वितीयचतुर्थौ नवकौ तृतीयोऽष्टक । द्व्यष्टाभ्या । तत्र प्रथम षटक द्वितीय सप्तक । अत्र व्यूहो वा । अन्त्यावषट्कौ । द्व्यूना । ये जनेषु । तृतीये व्यूह , सर्ठन्शित । आद्य षट्क । द्वितीयतृतीयौ सप्तकौ । चतुर्थो नवक । उदेषा । द्वितीयचतुर्थौ सप्तकौ । द्व्यूना । पूर्वे या सेना अनुष्टुभइत्युक्त, तत्रान्त्या या विशेषमाह ॥

## अन्त्योपरिष्टाद्बृहती ॥

या सेना इत्यादीनामन्ते भवा अन्त्या अथवा अध्यायस्यान्त्या अनुवतेऽनसरीत्येयोपरिष्टाद्बृहती, अस्या अन्त्य पादो द्वादशक आद्यास्त्रयोऽष्टका सोपरिष्टाद्बृहती । "अन्त्यश्चेदुपरिष्टाद्बृहतीत्युक्ते ,,एताःसमिदाधानेऽस्या विनियोग । न त्वनुष्टुप् । या सेनाइत्यादीना ऋषिरनुक्तिकएवाध्यायानुक्तत्वात् ॥ ६ ॥

## दृशानो वत्सप्रीस्त्रिष्टुभम् रौक्मीम् ॥

दृशानो रुक्मइतीमामृचं त्रिष्टुप्छन्दस्कां रौक्मीं रुक्मदेवतां वत्सप्रीऋषिरपश्यत् । रुक्मप्रतिमोचने विनियोगोऽस्याः । अत्र प्रथमस्य व्यूहद्वयेन पूरणम् । द्वितीयो, द्वयकः तेनैकोना ॥

## नक्तोषासा कुत्स आग्नेयीम् ॥

त्रिष्टुभमित्यनुवर्त्तते । नक्तोषासा समनसेतीमामृचमग्निदेवत्यां त्रिष्टुप्छन्दस्कां कुत्सऋषिरपश्यत् । नक्तोषामित्यर्द्धर्चेनोख्यामुखापरिवहने विनियोगः, द्यावा चामेत्यस्य पादस्योखाहरणे । देवाऽग्निमित्यस्य पादस्यासन्द्यामुखानिधाने ॥

## विश्वा श्यावाश्वः सावित्रीं जगतीम् ॥

विश्वा रूपाणीतीमामृचं सवितृदेवत्यां जगतीछन्दस्कां श्यावाश्व ऋषिरपश्यत् । तृतीयपादे व्यूह. । अस्याः शिक्यपाशप्रतिमोके विनियोगः ॥

## सुपर्णः कृतिश्चतुरवसाना गारुत्मी विषघ्नी ॥

सुपर्णोऽसि गरुत्मानितीयमृक् कृतिछन्दस्का चतुरवसाना अवसानचतुष्कायुक्ता गारुत्मी गरुत्मदेवता । विषघ्नी विषहन्त्री विषापनयनकर्त्री । अशीत्यक्षराकृतिः । अत्र त्रिसप्तत्यक्षराणि सन्ति । षट्व्यूहस्थानानि सन्ति । तेन कृतेरेकोनाशीत्यक्षरेयं संपद्यते । अस्याः सशिक्यस्याग्नेः प्राक्प्रग्रहणे विनियोगः ॥

## विष्णोस्त्रिलिङ्गोक्तानि ॥

विष्णोः क्रमोऽसि सपत्नहेत्यादीनि दिव्यविक्रमस्वेत्यन्तानि यजूंषि लिङ्गोक्तदेवतानि । उख्याग्निदेवतानीत्यर्थः । "यः सविष्णुर्यज्ञः स य स यज्ञोऽयमेव सयोऽयमग्निरुखायामिति" श्रुतेः । विष्णुक्रमणे एषां विनियोगः । अयाणां सर्वेषां व्यूहेन ब्राह्मीबृहतीछन्द. । चतुर्थस्य

प्राजापत्याबृहती । दिशोन्विति यजुरुष्णिक् । दिशामीक्षणे विनियोग. ॥

## अक्रन्दद्वत्सप्रीराग्नेयीं त्रिष्टुभम् ॥

अक्रन्ददग्निरितीमामृचमग्निदेवत्यां त्रिष्टुभम् वत्सप्रीऋषिरपश्यत् । अग्ने. पिण्डस्थस्याग्नेरुपहरणे विनियोगः । चतुर्थस्य व्यूहेन पूरणम् ॥

## अग्नऽऊर्ध्वबृहती ॥

अग्नेऽभ्यावर्तिन्नित्यस्या ऊर्ध्वबृहतीछन्दः, यस्यास्त्रय पादा द्वादशकाः सोर्ध्वबृहतीत्युच्यते । "त्रिजागतोर्ध्वबृहतीत्युक्ते" । अत्र तृतीयो दशकस्तस्य व्यूहद्वयेन पूरणम् इयमग्निदेवत्या आग्नेयीत्यनुवृत्ते । अग्नेरवहरणे विनियोग. ॥

## अग्ने महाबृहती ॥

आग्नेयीत्यनुवर्त्तते । अग्नेऽङ्गिरइतीयमृक् । अग्निदेवत्या महाबृहतीछन्दस्का । यस्या एक पादो द्वादशाक्षर । अन्ये चतुरोऽष्टाक्षरा सा महाबृहती त्रिष्टुबुच्यते । "चत्वारोऽष्टका जागतश्च महाबृहतीत्युक्ते" अत्राग्नेऽङ्गिरइत्याद्यपादस्य व्यूहेन द्वादशाक्षरपूरणं । अग्नेरवहरणेऽस्या विनियोग ॥

## पुनर्गायत्र्यौ ॥

पुनरूर्जा सहरय्येतीमे ऋचौ गायत्रीछन्दस्के । अग्निदेवते । आग्नेयी पदानुवृत्ते । अग्नेरवहरणएव विनियोग । पुनरित्यस्याऽन्तस्य व्यूहेन पूरणम् ॥

## आत्वा ध्रुवोऽनुष्टुभम् ॥

आग्नेयमित्यनुवर्त्तते । आत्वा हार्षमितीमामृचमनुष्टुभमग्निदेवतां ध्रुवऋषिरपश्यत् । अभिमन्त्रणेऽस्याविनियोग ॥

## उदुत्तमं० शुनःशेपो वारुणीं त्रिष्टुभम् ॥

उदुत्तममितीमामृचं वरुणदेवत्यां त्रिष्टुप्छन्दस्कां शुनःशेपऋषिरपश्यत् । पाशोन्मोचने विनियोगः चतुर्थस्य व्यूहेन पूर्तिः ॥

अग्ने त्रितऽआग्नेयीम् ॥

त्रिष्टुभमित्यनुवर्त्तते । अग्ने बृहन्नितीमामृचं अग्निदेवत्यां त्रिष्टुभं त्रितऋषिरपश्यत् । अग्नेः प्रागुदग्विप्रकर्षणेऽस्या विनियोगः आद्यान्त्ययोर्व्यूहेन पूरणम् ॥

हꣳसः सऽउक्ता जगतीह यजुरन्ता ॥

इहाग्निप्रकरणे हंस शुचिषदितीयपृथग्जगतीछन्दस्का उक्ता । कीदृशी । यजुरन्ते यस्या सा तथा । राजसूयप्रकरणे त्वियमतिजगतीत्युक्ता न तत्र यजुरन्ता । कुतः । एतामतिछन्दःसंपत्तिश्रुतेर्बृहदित्यस्यावयवस्यापृथग्यजुरभावात् । अत्र तु "अथैनमुपावहरतीति मत्वा जगत्या जगतीमाँल्लोकानमुतोऽर्वाचोऽभ्यश्नुते" हꣳसः शुचिषदिति पूर्यते । बृहदिति निदधातीत्यस्यावयवस्यापृथग्विनियोगश्च श्रूयते । तेनात्र जगती यजुरन्तेति युक्तमेवोक्तं । तृतीयस्य व्यूहेन पूरणम् किन्त्वयजुरित्यपेक्षायामाह ॥

अन्ते बृहद्यजुः ॥

हंसः शुचिषदित्यस्याऽन्ते बृहदित्येतावद्यजुः । हꣳसः इत्यस्या अग्नेरवहरणे विनियोगः बृहदित्यासन्द्यां निधाने ॥

सीद त्वमाग्नेयी त्रिष्टुप् ॥

सीद त्वं मातुरित्येषा अग्निदेवत्या त्रिष्टुप् । उपस्थाने विनियोगः आद्यपादयोर्व्यूहेन पूर्तिः ॥

अन्तरग्नेऽनुष्टुभौ ॥

आग्नेयीपदमनुवर्त्तते । अन्तरग्ने रुचा, शिवो भूत्वेतीमे ऋचौ अग्निदेवते अनुष्टुभौ । उख्याग्नेरुपस्थाने विनियुक्ते । अन्तरित्यस्या आ

यो व्यूहेन पूरणीयौ । शिव इत्यस्य द्वितीयचतुर्थौ च ॥ ७ ॥

दिवस्पर्य्यार्ग्नेयं त्रैष्टुभम् द्वादशर्चं वत्सप्रीर्भालन्दनः ॥

दिवस्परि प्रथममित्येतद् द्वादशर्चं अग्निदैवतं त्रिष्टुप्छन्दस्कं भलं-दनस्य पुत्रो वत्सप्रीऋषिरपश्यत् । उख्यान्वेरुपस्थानेऽस्य द्वादशर्चस्य विनियोगः, इन्धानास्त्वेतमित्यत्र व्यूहेन पूरणम् । विभातइति, दशाक्षरः, समुद्रे त्वा व्यूहः, भारोदसी भानुनेत्यत्र च । विभात्यग्रे । मर्त्तव्यभिः दशाक्षरः, समुद्रे त्वा व्यूहः भारोदसी भानुनेत्यत्र । विभात्यग्रे । मर्त्तव्यभिः । दशाक्षरो हकः, अस्य द्वितीयो यो दशकः, भा-संभज, त्वामग्ने इयोः । अस्ताबीति व्यूहेन कृतेऽपि दशकः । एतेषु पादेषु व्यूहः ॥

समिधाग्निं विरूपाक्षऽआङ्गिरसऽआग्नेयं गायत्री-म् ॥

इतिसूत्रमिदङ्केचिन्न पठन्ति समिधाग्निमित्यस्याऽऽद्यादेः प्राधान्यात् । उख्येऽग्नौऽसमिदाधानेऽस्या विनियोगे वनीवाहने । अत्र वि-रूपाक्षस्थाने विरूपइति नामभेदात्पुनः पाठइत्यपरे ॥

उदुत्वा तापसोऽनुष्टुभम् ॥

उदुत्वा विश्वे देवाइतीमामृचमग्निदैवतामनुष्टुभम् तापसऋषि-रपश्यत् । सासदीकस्योख्याग्नेरुद्यमने विनियोगः अत्र द्वितीयतृती-ययोर्व्यूहः ॥

प्रेदनुष्टुप् ॥

प्रेदग्नइत्यस्या अनुष्टुप्छन्दः । अग्निर्देवताऽऽगमने विनियोगः अत्रापि द्वितीयचतुर्थयोर्व्यूहः ॥

प्रप्रायमाग्नेयीं वासिष्ठस्त्रिष्टुभम् ॥

प्रप्रायमग्निरितीमामृचमग्निदैवत्यां त्रिष्टुप्छन्दस्कां वसिष्ठऋषि-

रपश्यत् । समिदाधानेऽस्या विनियोगः ॥

आपो देवीरापो ॥

त्रिष्टुप्पदमनुवर्त्तते । आपो देवीरित्येषा आपो ऽब्देवता । त्रिष्टुप् भस्मनोऽप्सु प्रक्षेपे विनियुक्ता । प्रथमो द्वादशाक्षरः ॥

अप्स्वग्ने विरूपमाग्नेयीं गायत्रीम् ॥

अप्स्वग्नइतीमामृचं अग्निदैवतां गायत्रीछन्दस्कां विरूपऋषिरपश्यत् । भस्मनोऽप्सु प्रक्षेपे विनियोगोऽस्याः । अत्र प्रथमे व्यूहः ॥

गर्भोऽअसि तिस्रोऽनुष्टुभः ॥

गर्भो अस्योषधीनामित्याद्यास्तिस्र ऋचोऽनुष्टुप्छन्दस्काः । अग्निदेवताः । आग्नेयीपदानुवृत्तेः । गर्भइत्यस्याप्सु भस्मप्रक्षेपे विनियोगः । प्रसद्येत्यनयोरनामिकया भस्मादाने विनियोगः । गर्भस्याद्ये व्यूहः द्वितीयः सप्तकः पुनरूर्ज्जा सहरय्येत्यनयोः प्रागुक्तम् ॥

बोधा मे दीर्घतमास्त्रिष्टुभम् ॥

बोधामइतीमामृचं त्रिष्टुभं दीर्घतमाऋषिरपश्यत् । उपस्थानेऽस्या विनियोगः । चतुर्थे व्यूहः ॥

स बोधि सोमाहुतिराग्नेयीं यजुरन्तां गायत्रीम् ॥

स बोधि सूरिरितीमामृचं अग्निदेवत्यां यजुरन्तां गायत्रीछन्दस्कां सोमाहुतिऋषिरपश्यत् । उपस्थाने विनियोगः, तृतीये व्यूहः ॥

यजुर्वैश्वकर्मणाम् ॥

समिधोत्यस्याग्नये विश्वकर्मणे स्वाहेत्येतद्यजुर्विश्वकर्मदैवतम् । प्रायश्चित्तहोमे विनियुक्तं । दैवीजगती ॥

पुनस्त्वा त्रिष्टुबाग्नेयीम् ॥

पुनस्त्वाऽऽदित्या इतीयमृक् त्रिष्टुप्छन्दस्का अग्निदेवता । समिदाधाने विनियुक्ता । अचात्ययतुर्दशकः । द्वितीयएकादशकः । चतुः

थैरकादशकः । दृष्यधिका ॥ ८ ॥

**अपेत लिङ्गोक्तबहुदेवत्या ॥**

त्रिष्टुबित्यनुवर्त्तते । अपेत वीतेतीयमृक् त्रिष्टुप्छन्दस्का । लिङ्गोक्ता बहवो देवता यस्याः स लिङ्गोक्तबहुदेवत्या गार्हपत्यव्यूहने विनियुक्ता तृतीये व्यूहे ॥

**सञ्ज्ञानमूषदेवत्यम् ॥**

सञ्ज्ञानमित्यूषदेवत्यं यजुः । प्राजापत्याबृहती । ऊषनिवापेऽस्य विनियोगः ॥

**अग्नेः सिकता ॥**

अग्नेर्भस्मासीत्यस्य सिकतादेवता यजुस्त्रिष्टुप् । सिकतानिवापे विनियोगः ॥

**चितः परिचितः ॥**

चितस्थ परिचितइत्यस्य परिचितोदेवता साम्न्युष्णिक् । परिचितां परिश्रयणे विनियोगः ॥

**अयꣳ स पञ्चर्चमाग्नेयं त्रैष्टुभं विश्वामित्रः ॥**

अयꣳसो अग्निः, अग्ने यत्ते दिवि, अग्ने दिवोऽर्णं, पुरीष्यासः, इडामग्नइत्येतत्पञ्चर्चमग्निदेवत्यं त्रिष्टुप्छन्दस्कं विश्वामित्रऋषिरपश्यत् । आद्यानां चतसृणामर्द्धबृहतीनामुपधाने विनियोगः, इडामग्नइत्यस्यास्त्रियग्युपधाने विनियोगः, यदीयसीत्विति नवाक्षरो व्यूहस्तयेनपूरणीयः । येनांतरिक्षमितिचैकेन । अच्छादेवानिति च, या रोचने, यायावस्तादिति च ॥

**चतुर्थ्यनुष्टुप् ॥**

अस्मिन्पञ्चर्चे चतुर्थी पुरीष्यासइत्येषाऽनुष्टुभोऽपवादः । अत्र प्रथमे व्यूह इडामग्नइत्यत्र तृतीयचतुर्थयोर्व्यूहः ॥

अयं तेऽनुष्टुप् ॥

अयं तइत्येषाऽग्निदेवत्याऽनुष्टुप्छन्दस्का तिरश्चयुपधानेऽस्य विनियोग । आग्नेयपदमनुवर्त्तते । इदमपि पुनरुक्तं सूक्तं । अय ते इत्येतस्या. पूर्वमुक्तत्वात् ॥

चिदष्टके ॥

चिदसि, परिचिदसीत्येते यजुषी ऐष्टके इष्टकी देवते । पूर्वयोस्तिरश्च्योरुपधाने विनियोग. चिदसि प्राजापत्यानुष्टुप् । परिचिदग्निर्त्रगायत्री ॥

लोकं लिङ्गोक्तानुष्टुप् ॥

लोकं पृणेतीयमृक्लिङ्गोक्तदेवता अनुष्टुप् । लोकंपृणेयोऽस्यादेवतेत्यर्थः । द्वितीये त्वंशब्दे व्यूहः । लोकपृणाभिमन्त्रणे विनियुक्ता ॥

ताऽअस्यार्षी प्रियमेधऽऐन्द्रः ॥

अनुष्टुबित्यनुवर्तते । ताऽअस्य सूददोहसऽइतीमामृचमब्देवतानुष्टुभं ऐन्द्रः इन्द्रस्य पुत्र प्रियमेधसञ्ज्ञर्षिरपश्यत् । सूददोहसाभिवदने विनियोगोऽस्या ॥

इन्द्रं जेता मधुच्छन्दसऽऐन्द्रः ॥

अनुष्टुभमित्यनुवर्त्तते । इन्द्रं विश्वाऽइतीमामृचं इन्द्रदेवत्यामनुष्टुभं मधुच्छन्दसोऽपत्यं जेताऽपश्यत पुरीषनिवापेऽस्या विनियोगः ॥

समितं चतस्रो द्व्यग्निदेवत्या उष्णिगुपरिष्टाद्बृहत्युष्णिक्पङ्क्तयः ॥

समितं सकल्पेथा । सखा । अग्ने त्वं पुरीष्यो, भवतन्नइत्येतायत

स ऋषी दृष्यग्निदेवता: द्वावग्नीदेवते यासां ता दृष्यग्निदेवता:। यथाक्रमसुष्णिगुपरिष्टाद्बृहत्युष्णिक्पङ्क्तयः। समितमित्यस्या उष्णिक् छन्दः एकाधिकाप्युष्णिक्। अनियताक्षरपादत्वेऽप्यक्षराणामष्टाविंशतिसंख्यत्वात्। सर्वामित्यस्या उपरिष्टाद्बृहती। अत्र द्वितीयसप्तकः तृतीयो नवक. चतुर्थस्त्रयोदशकाइत्येकाधिका। अग्ने त्वं उष्णिक्। इयं एकाधिका। आद्युष्णिक् अनियताक्षरपादत्वेऽप्यक्षरैस्तथात्वात्। भवतं नः पङ्क्तिः। इयमाद्याऽर्षीपङ्क्तिः अनियताक्षरपादत्वेऽप्यक्षरैस्तथात्वात्। उखस्याग्नेर्गार्हपत्यचितौ स्थापने चतसृणां विनियोगः॥

## मातेवेत्युखास्तुतिस्त्रिष्टुप्॥

मातेव पुत्रमितीयमृगुखाया. स्तुति: उखैव देवतेत्यर्थः त्रिष्टुप्। उखाश्याः। शिक्याद्विमोचने विनियोगः। अत्र द्वितीयो नवकः। चतुर्थो द्वादशकः॥ १॥

## असुन्वन्तं नैर्ऋतं तृचं त्रैष्टुभम्॥

असुन्वन्तमयजमानं, नम इति। यस्यास्ते घोरमित्येतत्त्र्यृचं निर्ऋतिदेवत्यं त्रिष्टुप्छन्दस्कं नैर्ऋतीनामुपधाने विनियुक्तं। प्रथमायास्तृतीयो दशकः द्वितीयायाश्च। तृतीयाद्दशक. तृतीयायाः प्रथमो दशकः तृतीयचतुर्थौ द्वादशकौ॥

## यन्ते यजमानदेवत्या॥

त्रिष्टुप्पदमत्रानुवर्त्तते। यन्ते देवीतितीयं यजमानदेवत्या त्रिष्टुप्। शिक्यरुक्मपाशेण्ड्वाऽऽसन्दीनां निरसने विनियुक्ता, अत्र द्वितीयादिपादत्रयं व्यूहेनैव पूर्णम्॥

## नमो विराड्भूतिदैवत्यैकपदा॥

नमो भूत्या इत्येकपदा विराड्भूतिदैवत्या दशाक्षरा हि विरा-

द्विरुच्यती । चतीव व्यूहेन पूर्वोक्तस्थाने विनियोगः ॥

निवेशनऐन्द्रीं त्रिष्टुभं विश्वावसुर्देवगन्धर्वः ॥

निवेशनः सङ्गमन इतीमामृचं इन्द्रदेवत्यां त्रिष्टुभं विश्वावसुर्देवगन्धर्वोऽपश्यत् । ग्रामादारि भवस्य गार्हपत्यचितिदपस्याग्नेरुपस्थाने विनियोगः । द्वितीये व्यूहः ॥

सीरा द्वे सीरदेवत्ये बुधसौम्यो गायत्रीत्रिष्टुभौ ॥

सीरा युञ्जन्ति, युनक्त सीरा इतीमे ऋचौ सीरदेवत्यौ क्रमेण गायत्रीत्रिष्टुभौ सोमपुत्रो बुधऋषिरपश्यत् । युज्यमानस्य सीरस्याभिमन्त्रणे विनियुक्ते । युनक्त सीरेत्यत्र द्वितीयचतुर्थयोर्व्यूहः ॥

शुनं चतस्रः सीतादेवत्याः कुमारहारितो द्वे त्रिष्टुभौ तृतीयापङ्क्तिश्चतुर्थ्यनुष्टुप् ॥

शुनं सुफाला, घृतेन सीता, लांगल, कामङ्कामदुघे । एताश्चतस्रः सीतादेवत्याः कुमारहारितऋषिरपश्यत् । आसु चतसृषु शुनं सुफाला, घृतेन सीता एते द्वे त्रिष्टुप्छन्दस्के । तृतीया लाङ्गलमित्येषा पङ्क्तिछन्दस्का । चतुर्थी कामं कामदुघे इत्येषा अनुष्टुप्छन्दस्का । सर्वासां कर्षणे विनियोगः, घृतेन सीतेति द्वादशाक्षर. । तेनैकाधिका । लाङ्गलम् सप्तकः । तेनैकोना प्रथमो व्यूहः । इन्द्राग्निभ्यां व्यूह. । प्रजाभ्यः सप्तकस्तेनैकोना ॥

विमुच्यध्वमनडुही गायत्री ॥

विमुच्यध्वमित्येषा अनडुद्देवता गायत्री । अनडुद्विमोके विनियुक्ता एकाधिका आर्षीगायत्री । पादानामनियताक्षरत्वेऽपि चतुर्विंशत्यक्षरत्वात् ॥

सजूर्लिङ्गोक्तदेवतम् ॥

सजूरब्द इत्येतद्यजुर्लिङ्गोक्तदेवतम् । कुशस्तम्बे चतुर्गृहीतहोमे वि-

नियुक्तं । प्राजापत्यमनुष्टुप् । छन्दः तथा अश्विनौ सूरी वैश्वानरश्चेति लिङ्गोक्ता देवता ॥ १० ॥

याओषधीः सप्तविꣳशतिमनुष्टुभओषधिस्तुतिमाथर्वणो भिषक् ॥

याओषधीः पूर्वाजाताइत्याद्या, योऽस्या अभिद्रासतीत्यन्ताः सप्तविंशतिसंख्या अनुष्टुप्छन्दस्का ओषधिस्तुतिमोषधिदेवत्या अथर्वणः पुत्रो भिषक्संज्ञकऋषिरपश्यत् । अनुष्टुभइतिद्वितीयाबहुवचनेन । तद्विशेषणम् तु सप्तविंशतिमिति द्वितीयैकवचनं "विंशत्याद्याः सदैकत्वइतिवचनात्"। वीरुधः पारयिष्णव', उच्छुष्मा, अश्वं सनिष्यन्तीनां। अतिविश्वाः स्तेनइवेति, नवक ओषधीः प्रासुच्यवुर्यत्किञ्च,साकं यक्ष्म, साकं वातस्य। हस्पतिस्त्वानो मुञ्चन्तु, एते मरुमाद्दराः एतेषु व्यूहः। असंभवेएकोन छन्द । आद्या. पञ्चदश सर्वौषधवपने विनियुक्ता: अवशिष्टानां द्वादशानां मुञ्चन्तु मा शपथ्यादित्यादीनां क्वापि विनियोगो नास्तीत्याह ॥

मुञ्चन्तु बध्नुर्द्वादशानारभ्याधीताः ॥

मुञ्चन्तु मा शपथ्यादित्याद्या द्वादशर्चोऽनारभ्याधीताः बध्नुऋषिरपश्यत्। कश्चन कर्म विशेषमारभ्याधीता, अनारभ्याधीताः। नआरभ्याधीता अनारभ्याधीता. आसां क्वापि विनियोगो नास्तीत्यर्थः, मुञ्चन्तु मा । अथो वरुण्यात् । बृहस्पतीति सप्तकः । अश्वेस ई । मा वः । सर्वमस्तु । उपधयइतिनवकः । सोमिनेति सप्तकः । अर्यसइति नवकः, त्वांगन्धर्वा । सहस्व। सहस्वपाप्मा, दीर्घायुस्ते, दशकः तेन द्व्यधिका । त्वमुत्तमा । अत्र एतेषु पादेषु यथासंभवं व्यूहः । तदसंभवे छन्दसो न्यूनता॥

मा मा हिरण्यगर्भ कार्यों त्रिष्टुभम् ॥

मा मास्विति एषोदित्तीमामृचं कार्यों कायदैवत्यां त्रिष्टुभम् हिरण्यगर्भऋषिरपश्यत् । द्वितीये व्यूहः पुरस्ताल्लोगेष्टकोपधाने विनियोगोऽस्याः ॥

अभ्यावर्त्तस्वेत्युष्णिगाग्नेयी ॥

अभ्यावर्त्तस्वेतीयमृक् उष्णिक् अग्निदेवत्या । अन्यदेकादृचकस्तेनैकोना । दक्षिणतो लोगेष्टकोपधाने विनियुक्ता ॥

अग्ने यद्गायत्री ॥

आग्नेयीत्यनुवर्त्तते । अग्ने यत्ते शुक्रमितीयमृक् अग्निदेवत्या गायत्रीछन्दस्का पश्चाल्लोगेष्टकोपधाने विनियुक्ता । अत्र प्रथमो नवकः तेनैकाधिका ॥

इषं त्रिष्टुप् ॥

इषमूर्जमित्यस्यास्त्रिष्टुप्छन्दः आशीर्देवता । पादश्चयस्योत्तरतो लोगेष्टकोपधाने विनियोगः चतुर्थस्य सिकतापातने । अत्र प्रथमतृतीययोर्व्यूहः ॥

अग्ने तव पावकोऽग्निराग्नेयपङ्क्तम् ॥

अग्ने तवेति पङ्कृचम् अग्निदेवतम् पावकोग्निऋषिरपश्यत् सिकतावापे विनियोगोऽस्यपङ्कृचस्य ॥

प्रथमे विष्टारपङ्क्तिः ॥

यस्या द्वितीयतृतीयौ पादौ द्वादशकौ आद्यतुरीयावष्टकौ । सा विष्टारपङ्क्तिः । "मध्यमौ चेद्विष्टारपङ्क्ति" रितिवचनात् । बृहद्भानो । अस्य व्यूहेन पूरणम् । पावकवर्चा इत्ययं नवकस्तेनैकाधिका ॥

तिस्त्र सतोबृहत्यः ॥

ऊर्जो नपात् । इरज्यन्नग्ने, इष्कर्त्तार इत्येतास्तिस्रऋचः सतोबृहत्यः । यस्याः प्रथमतृतीयौ द्वादशकौ इतरावष्टकौ सा सतोबृहती-

"षयुजी जागती सतोबृहतीत्युक्तिः" त्वेऽस्यत्यत्र व्यूहः। अश्नो राये। इत्यत्र च॥

उपरिष्टाज्ज्योतिःपङ्क्ती॥

अस्मिन्नेव षड्चेपङ्क्ती श्रुतावानमित्येषा च्तुरुपरिष्टाज्ज्योतिश्छन्दस्का। यस्या ऋचस्त्रयः पादा द्वादशाचराश्चतुर्थोऽष्टाचरः। सोपरिष्टाज्ज्योति" श्चतोऽष्टकस्ततो ज्योतिरित्युक्तिः" अथ शुनकषं देवं मानुषश्त्यनयोर्व्यूहेनपूरणम्॥

आप्यायस्व गोतमः सौमीर्गायत्रीत्रिष्टुबुष्णिहः॥

आप्यायस्व समेतु। सन्ते पयांसि। आप्यायस्व मन्दितमेत्येतास्तिस्त्रऋचः सौमीः सोमदेवताः। क्रमेण गायत्रीत्रिष्टुबुष्णिक्छन्दस्का गोतमऋषिरपश्यत्। आद्ययोराप्यायस्व, सन्ते पयांसीत्येतयोः सिक्तानामाप्यायने विनियोगः, तृतीयस्या विनियोगउक्तो नास्ति। विश्वतः सोमेत्यत्र व्यूहः। संवृण्वानीत्यत्र द्वौ व्यूहौ। दिवीत्यत्र च॥

आतेऽ वत्सारः॥

आते वत्सो मनइत्येतामवत्सारऋषिरपश्यत्॥

तुभ्यंता द्वे विरूपः॥

तुभ्यंता, अग्नि प्रियेष्वितीमे द्वे ऋचौ विरूपऋषिरपश्यत्। तिस्रो गायत्र्य आग्नेय्यः, आते वत्सस्तुभ्यंता, अग्नि, प्रियेष्वितीमास्तिस्त्रऋचोऽग्नि देवता गायत्रीछन्दस्का। तिसृणामपि चयने अग्निभ्यः प्रक्रियमाणेभ्योऽनुब्रूहीति प्रेषितस्य होतुरनुवाचने विनियोगः। परमाचित्। अयं सप्तकः। तनेकोना॥ ११॥

मयि ककुबाग्नेयी॥

मयि गृह्णामीतीयमृक्ककुप्छन्दस्का अग्निर्देवता। यस्यास्त्रिपदा मध्यमो द्वादशक.। प्रथमतृतीयावष्टकौ। सा ककुबुष्णिगुच्यते।

"मध्यमश्चेत्ककुबिति" वचनात् । अत्र तु मध्यमश्चतुर्दशकस्तेन द्व्यधिका यजमानजपेऽस्या विनियोगः ॥

ब्रह्मादित्यदेवता त्रिष्टुप् ॥

ब्रह्मयज्ञानमित्येषा त्रिष्टुप्छन्दस्का । आदित्यदेवता च । तृतीये व्यूहः । एकोनता वा । रुक्मोपधाने विनियोगः ॥

हिरण्यगर्भो हिरण्यगर्भः कायं त्रिष्टुभम् ॥

हिरण्यगर्भः समवर्त्ततेतीमामृचं कायदेवतां त्रिष्टुभं हिरण्यगर्भ ऋषिरपश्यत् । हिरण्यपुरुषोपधानेऽस्या विनियोग । चतुर्थे व्यूहः ॥

नमोऽस्तुसार्पं तृचमानुष्टुभम् ॥

नमोऽस्तु सर्पेभ्य इतीदं तृच सर्पदेवतमनुष्टुप्छन्दस्कं । यजमानस्योपस्थाने विनियुक्तं । नमोऽस्त्वित्ययं षडक्षरः व्यूहेन सप्ताक्षरः । तेनैकोना । सर्पेभ्य इत्यत्र पुनर्यकारव्यूहो वा, याऽइषवइति नवकस्तेनैकाधिका ॥

कृणुष्व पञ्च प्रतिसरा राक्षोघ्ना देवानामार्षम् ॥

कृणुष्व पाज इत्याद्याः पञ्चर्चः प्रतिसरा राक्षोघ्नाः राक्षसान् प्रत्यक्स्वरूपेण सरतीति प्रतिसराः अतएव रक्षोहननसम्बन्धात् राक्षोघ्ना इत्यासां संज्ञाः । देवानामार्षं । देवा आसामृषय इत्यर्थः । "एतद्वै देवा अबिभयुरिति देवान्प्रकृत्य तएता राक्षोघ्नान्प्रतिसरानपश्यन् कृणुष्वपाज इत्यादिश्रवणात्" ॥

सर्वास्त्रिष्टुभ आग्नेयी वामदेवश्चापश्यत् ॥

कृणुष्वपाज इत्याद्याः सर्वाः पञ्चापि त्रिष्टुप्छन्दस्का अग्निदेवताः वामदेव ऋषिरपश्यत् । चकारः पूर्वोक्तैर्देवैर्ऋषिभिः समुच्चयार्थः पुरुषे पञ्चगृहीतहोमे सर्वासां विनियोगः । याऽइह राजेव । तृष्वीममर्धोर्व्यूहः । तपूंष्यग्ने द्वौ व्यूहौ उदग्ने भामिश्वान् । अनयो

र्यूहः । नीचा तं । उदर्ध्वो भवेत्त्र च । चाविरिक्षत्र द्वौ ॥

अग्नेष्टा यजुराग्नेयम् ॥

अग्नेष्ट इत्येतदग्निदेवतम् यजुःपङ्क्तिः काश्मर्यसुगुपधाने विनियोगः । अग्निर्मूर्द्धेत्यस्याः प्रागुक्तं सर्वम् ॥

इन्द्रस्यैन्द्रम् ॥

इन्द्रस्य त्वोजसेति यजुरिन्द्रदेवतम् । यजु पङ्क्तिः । औदुम्बरस्रुगुपधाने विनियोग ॥

भुवस्त्रिशिरा आग्नेयी त्रिष्टुभम् ॥

भुवो यज्ञस्येतीमामृचं अग्निर्देवता त्रिष्टुभम् त्रिशिराऋषिरपश्यत् । औदुम्बर्या सुवरुपधानएषास्या अपि विनियोगः ॥ १२ ॥

ध्रुवासीदूर्ध्वबृहती ॥

ध्रुवासि धरुणेतीयमृक् ऊदर्ध्वबृहती, यस्यास्त्रयः पादा द्वादशकाः । सोदूर्ध्वबृहती । "त्रिजागतोदूर्ध्वबृहतीत्युक्ते." । अत्र प्रथमस्त्रयोदशक. द्वितीयो द्वादशकः । तृतीयो दशकइति । व्यूहेन छन्दः पूर्त्ति ॥

प्रजापतिरनुष्टुप् ॥

प्रजापतिष्टेतीयमनुष्टुप् । आद्यौ नवकौ । चतुर्थः सप्तकः ॥

भूरसि प्रस्तारपङ्क्तिः ॥

भूरसीत्यस्याः प्रस्तारपङ्क्तिछन्दः । यस्या आद्यौ द्वादशकौ । अन्त्यावष्टकौ सा प्रस्तारपङ्क्ति । "आद्यौ चेत्प्रस्तारपङ्क्तिरित्युक्तेः" अत्र आद्यएकादशक' द्वितीयस्त्रयोदशकः तृतीयचतुर्थौ अष्टमाष्टकावइति एवं चत्वारिंशदक्षरैव ॥

आसाए स्वयमातृण्णा देवता विश्वस्माएतस्य च यजुषः ॥

आसां ध्रुवासीत्यादितसृणामृचां विश्वस्मै प्राणायेत्येतस्य यजुषश्च स्वयमातृण्णा देवता । स्वयमातृण्णोपधाने सर्वेषां विनियोगः । वि-

अथ एकाधिकारमे आर्षी अनुष्टुप् ॥

काण्डात्काण्डादानुष्टुभं तृच्यूचमग्निना दृष्टम् दूर्वेष्टकदैवतम् ॥

काण्डात्काण्डात्, या शतेनेत्येतद्व्यृचमृग्द्वय दूर्वेष्टकदैवतमग्निना दृष्टं अग्निरस्यऋषिरित्यर्थः । तत्रास्ते द्वयत्र व्यूह. । दूर्वेष्टकोपधाने विनियोग. ॥

यास्तऽआग्नेयं तृच्यूचमानुष्टुभमिन्द्राग्निभ्यां दृष्टम् ॥

यास्ते अग्ने, या वो देवादृत्येतत्द्व्यृच ऋग्द्वय अनुष्टुप्छन्दस्कमिन्द्राग्निभ्यां दृष्टं । इन्द्राग्नी यस्य ऋषिरित्यर्थः । अथ दिवमातन्वतीति नवकः । तेनैकाधिका । गोष्वश्वेष्वित्यत्र व्यूहः । द्वियजुषउपधाने विनियोग ॥

विराडयं लोकः ॥

विराड्ज्योतिरित्यस्याय लोकोदेवता । यजुरनुष्टुप् । रेतः सिगुधाने विनियोगः ॥

स्वराडसौ लोकः ॥

स्वराड्ज्योतिरित्यस्यासौ लोकोदेवता । यजुरनुष्टुप् । रेतः सिगुपधाने विनियोगः ॥

प्रजापतिर्दृष्टा वैश्वज्योतिषम् ॥

प्रजापतिष्ट्वेत्येतद्यजुर्वैश्वज्योतिषम् । विश्वज्योतिरस्य देवतेत्यर्थः । व्यूहः शक्करीछन्दः । विश्वज्योतिषउपधाने विनियोगः ॥

मधुश्चर्तुदैवतम् ॥

मधुश्चर्तुदैवतं । मधुश्च माधवश्चेत्येतद्यजुर्ऋतुदैवतं अत्र षटोक्षारगतमक्षराणि सन्ति तेनानियताक्षरत्वाच्छन्दसोऽभाव । ऋतव्योपधानेऽस्य विनियोग. ॥

'अषाढाऽसि सविताऽपश्यत् । द्वे वाऽपश्यन्निष्टका-दैवतम् ॥(१)

अषाढासि इतीमामृचं इष्टकादैवत विराडनुष्टुप्छन्दस्कां स-विताऋषिरपश्यत् ॥

प्रथमौ एकादशाक्षरौ तृतीयोऽपि व्यूहेनैकादशक । तेनेयं विराडनुष्टुप् । "दशकास्त्रयो विराडेकादशका वेति" वचनात् । अषा ढोपधाने ऽस्या विनियोगः ॥ १३ ॥

मधु वाता वैश्वदेवं तृचं गायत्रं गोतमः ॥

मधु वाता इत्येतत्तृच विश्वदेवत्यं गायत्रीछन्दस्कं गोतमऋषिरप-श्यत् । दधिमधुघृते. कूर्माञ्जनेऽस्य विनियोगः । अत्र माध्वीर्न इत्यत्र व्यूह । मधुमान्नस्तु समक । तेनैकौना ॥

अपां गंभन्पङ्क्तिः ॥

अपां गंभनित्यस्या. पङ्क्तिः छन्दः अत्र तृतीयो द्वादशक: अन्ये दशका । तेन द्व्यधिका स्वराट्पङ्क्तिरिय कूर्मोपधाने विनियोगः ॥

अौक्षसमुद्रांस्त्रिष्टुप् ॥

अौक्षसमुद्रानित्यस्यास्त्रिष्टुप्छन्दः । अत्र प्रथमो दशक: तृतीयोद्वा-दशक अन्यौ एकादशकौ ॥

कौर्म्यं द्व्यृचम् ॥

अपां गंभन् अौक्षसमुद्रानित्येतत् ऋग्द्वयं कौर्म्यं कूर्मदेवतम् कूर्मस्य "प्रजापतिरादित्यो वेति संहिताभाष्ये" अौक्षसमुद्रानित्यस्य कू-र्मकाने विनियोग । तृतीयाऽन मही द्यौरिति कूर्मोपधाने विनियु-क्ता । तथा ऋग्यादि प्रागुक्तम् ॥

'ध्रुवाऽसि त्रिष्टुप् ॥

(१) अषाढाऽसि 'द्वे सविताऽपश्यद्द्वेवा वाऽपश्यन्निष्टकादैवते विराडनुष्टुभाविति. काण्वशाखीय सर्वानुक्रमपाठो बोध्य ॥

ध्रुवासि धरुणेतद्यस्याखिष्टुप्छन्द. उखोपधानेऽस्या विनियोगः । प्रथमो द्वादशकस्तेनैकाधिका ॥

दृषे बृहती ॥

इषे रायइत्यस्या बृहतीछन्दः उखोपधानएव विनियोगः । अथा यो द्यकः । अन्योऽपि व्यूहेन द्यकः द्वावष्टकौ । तेनैयमार्षीबृहती पादाक्षरनियमाभावेऽपि ॥

औखं द्व्यृचम् ॥

ध्रुवाऽसि, इषे रायइत्येतद्व्यृचमौखं उखादेवताम् ॥

अग्ने युद्धाग्नेयन् द्व्यृचङ्गायत्रम् ॥

अग्ने युक्ष्वाहीत्येतद्व्यृचमग्निदेवतम् गायत्रीछन्दस्कं । उखायां स्रुवाहुतिहोमे उपस्थाने वा विनियुक्तम् ॥

आद्यायां भरद्वाजः ॥

आद्यायाः अग्ने युक्ष्वाहीत्यस्याः भरद्वाजऋषिः ॥

द्वितीयस्या विरूपः ॥

द्वितीयस्या युक्ष्वाहीत्यस्याः विरूपऋषिः । अत्र तृतीये व्यूह. ॥

सम्यक्त्रिष्टुब्लिङ्गोक्तदेवता ॥

सम्यक्स्रवन्तीतीयमृक्त्रिष्टुप्छन्दस्का लिङ्गोक्तदेवतामुखे हिरण्यशकलप्रासने विनियुक्ता ॥

ऋचे त्वा बृहती ॥

ऋचे त्वा रुचे त्वेतीयं लिङ्गोक्तदेवता हिरण्यशकलदेवतेत्यर्थः । बृहतीछन्दस्का । व्यूहेनैयमार्षीबृहती । पादानामक्षरनियमाभावात् । खण्डय पदस्थानेषु हिरण्यशकलप्रासने विनियुक्ता । ऋचे त्वेत्यस्य दक्षिणमासिकायाम् । रुचेत्वेति सव्यायां । भासे त्वा दक्षिणचक्षुषि अमूदिदं । दक्षिणयोषे ॥

## अग्निर्ज्योतिषोष्णिक् ॥

लिङ्गोक्तदेवतेत्यनुवर्त्तते । अग्निर्ज्योतिरितीयमृक्तत्रोष्णिक्छन्दस्का । आद्यस्याऽनयोत्तरस्याश्च हिरण्मयशकलपासने विनियोगः, सत्त्वसदादित्य-पुरुषशिरसः उद्धरणे। द्वाभ्यामष्टकौ। तृतीयस्य व्यूहेन द्वादशाक्षर-पूरणम् ॥

## आदित्यं गर्भं पञ्चर्चमाग्नेयं त्रैष्टुभम् ॥

आदित्यं गर्भं पयसा । वातस्य जूतिम् । अजस्रमिन्दुम् । वरूत्रीं त्वष्टु, योऽअग्निरग्नेरित्येतत्पञ्चर्चं अग्निदेवतं त्रिष्टुप्छन्दस्कं। आदित्यं गर्भमित्यस्याः पुरुषशिरसउपधाने विनियोगः, वातस्य जूतिमित्यस्याश्वशिरसउपधाने । अजस्रमिन्दुमित्यस्या गोः शिरसउपधाने । वरूत्रीमित्यस्या अविशिरसउपधाने । योऽअग्निरित्यस्याजशिरसउपधाने विनियोगः । अत्र पञ्चर्चे अग्ने माहिंसीः । अजस्रमिन्दु अनयोर्व्यूहः । मा माहिंसी. इमक, योऽअग्नि. व्यूहः । योकादृवादशक', विश्वदेवानामित्यस्यास्तु त्वष्टादि प्रागुक्तं । (१)पश्चार्द्धस्य सुवाहुखीहोमे विनियोगइतिविशेष ॥

## इमं मा पञ्चर्चमाग्नेयं त्रैष्टुभमेव हिंसी अन्ते यजुषी ॥

इमं माहिंसीः । इमं मा हिंसीद्द्विपादं । इममूर्णायुं । इममूर्णायुं । अजो ह्यग्नेरित्येतत्पञ्चर्चमग्निदेवत त्रिष्टुप्छन्दस्कमेव नतु मयुग्ने शुग्च्छत्वित्यादीनामवराणि मध्ये गणयित्वाधिकछन्दोऽन्तरशंका कार्येत्येवकारार्थ । पञ्चानामप्यृचामन्ते प्रत्येकं द्वे द्वे यजुषी । मयुग्ने शुक् । यदिश्वस्ततइत्यादिके । उपधाक्रमेण पुरुषादिशिरसामुपस्थाने क्रमेण पञ्चानामृचां सयजुष्काणां विनियोग । इममा हिंसीद्विपादं । इमक , तेन चिन्वान व्यूह' । मयुग्ने । देवीजगती । यजिह

---

(१) अद्द्वरहा. सुवाहुखीहोमे विनियोगइति पक्षेतिपाठ. ॥

य॰ यजुर्बृहती । गौरन्ते दैवीजगती । गवयन्ते यजुरनुष्टुप् । उष्ट्र-न्ते । दैवीजगती । शरभन्ते यजुरनुष्टुप् यन्निदमदतियजुर्बृहत्येव सर्व-त्र । व्यचमान । यजो ह्मग्ने: व्यूह: । सोऽग्निपरदशक: । इमएसा-हस्रमित्याद्यासु तिसृषु अवसानद्वयात्पराणि त्रीणि यजूंषि । गवय-मारण्य, उष्ट्रमारण्य । शरभमारण्यमित्यादीनि, गवयं, शरभ । इमौ सामनिषट्भौ । उष्ट्रं ऋतुष्णिक ॥

त्वं यविष्ठोशना: काव्यश्रानेयीमनिरुक्तां गायत्रीम् ॥

त्वं यविष्ठेतीमामृक अग्निदेवतामनिरुक्तां मध्येऽग्निपदनिरुक्तिरहि-तां गायत्रीं कुबेरपत्यमुशना ऋषिरपश्यत्, प्रथमे व्यूह, चित्योपस्थाने ऽस्या विनियोग ॥

अपां त्वा विश्वतिरैष्टकानि ॥

अपां त्वेमन्नित्यादीनि पाङ्क्तेन त्वा छन्दसेत्यन्तानि विशतियजूंषि इष्टकादेवतानि । अपस्यानामुपधाने विनियुक्तानि । अपात्वेमन् । १। अ-पात्वोद्मन् ।२। यजुरनुष्टुभौ । अपां त्वा भस्मन् । यजुर्बृहती ॥३॥ ज्योतिषि । यजु: पङ्क्ति ॥ ४ ॥ अयने । यजुर्बृहती ॥ ५ ॥ अर्णवे ॥ ६ ॥ समुद्रे ॥ ७ ॥ सरिरे ॥ ८ ॥ यजुस्त्रिष्टुभ । क्षये । यजुर्बृहती ॥ ९ ॥ सधिषि ॥ १० ॥ सदनि ॥ ११ ॥ सधस्थे ॥ १२ ॥ यजु: पङ्क्तय: । योनौ ॥ १३ ॥ यजुर्बृहती । पुरीषे ॥ १४ ॥ पाथसि ॥ १५ ॥ यजु प-ङ्क्ती । गायत्रेण ॥ १६ ॥ त्रैष्टुभेन ॥ १७ ॥ जागतेन ॥ १८ ॥ यजु-र्जगत्य । आनुष्टुभेन ॥ १९ ॥ आसुर्यनुष्टुप् । पाङ्क्तेन त्वा ॥ २० ॥ यजुस्त्रिष्टुप् ॥

अयं पुर: पञ्चाशत्प्राणभृद्दैवत्यानि ॥

अयपुरोभुवइत्यादीनि वाचं त्वहामि प्रजाभ्यइत्यन्तानि पञ्चाश-द्यजूंषि प्राणभृतामुपधाने विनियुक्तानि । एषां छन्दांस्युच्यते । भ-

यंपुरः । यजुर्गायत्री ॥ १ ॥ तस्य प्राणः । यजुरनुष्टुप् ॥ २ ॥ वसन्तः यजुरुष्णिक् ॥ ३ ॥ गायत्री । वासन्ती ॥ ४ ॥ गायत्र्यै ॥ ५ ॥ गायत्रात् ॥ ६ ॥ दैव्यस्त्रिष्टुभः, उपांशुर्दैवीपङ्क्तिः ॥ ७ ॥ त्रिवृत. । दैवीजगती ॥ ८ ॥ वसिष्ठः दैवीपङ्क्तिः ॥ ९ ॥ प्रजापतिगृहीतः ऋग्गायत्री ॥ १० ॥ अयं दक्षिणा । यजुर्बृहती ॥ १ ॥ तस्य मनो । यजुर्बृहती ॥ २ ॥ ग्रीष्मो दैवीपङ्क्तिः, । ३ । त्रिष्टुप् । दैवीबृहती ॥ ४ ॥ त्रिष्टुभः, दैवीपङ्क्तिः ॥ ५ ॥ स्वारात् यजुर्गायत्री ॥ ६ ॥ अन्तर्यामात् यजुरनुष्टुप् ॥ ७ ॥ पञ्चदशात् यजुर्गायत्री ॥ ८ ॥ भरद्वाजो यजुर्गायत्री ॥ ९ ॥ प्रजा० ऋग्गायत्री ॥ १० ॥ अयं पश्चात् । यजुर्बृहती ॥ १ ॥ तस्य चक्षु । यजुर्बृहती । २ । वर्षाः दैवीपङ्क्तिः ३ जगती दैवीपङ्क्तिः ४ जगत्या ऋक्समं । यजुर्गायत्री । ५ । ऋक्समात् दैवीपङ्क्ति । ६ । शुक्रात् । दैवीत्रिष्टुप् । ७ । सप्तदशात् । दैवीजगती । ८ । जमदग्नि, यजुर्गायत्री । ९ । प्रजापतिः । ऋग्गायत्री । १० । इदमुत्तरात्स्व । यजुर्गायत्री । १ । तस्य श्रोत्रं यजुर्गायत्री । २ । शरच्छ्रौत्री । यजुर्बृहती । ३ । अनुष्टुप् । यजुर्गायत्री । ४ अनुष्टुभ ऐडम् । यजुर्गायत्री । ५ । ऐडात् । दैवीबृहती । ६ । मन्थिनो दैवीजगती । ७ । एकविंशात् । दैवीजगती । ८ । विश्वा । दैवीत्रिष्टुप । ९ । प्रजापति, ऋग्गायत्री ॥ १० ॥ इयमुपरि । दैवीजगती । १ । तस्यै । दैवीपङ्क्ति । २ । हेमन्तो । दैवीपङ्क्ति । ३ । पङ्क्तिर्हैमन्तीर्दैवी पङ्क्ति । ४ । पङ्क्त्यै । यजुर्गायत्री । ५ । निधनेवत । यजुर्बृहती । ६ आग्रयणात् । यजुस्त्रिष्टुप् । ७ । त्रिणवत् । सामोष्णिक् । ८ । विश्वकर्मऋषि । यजुर्गायत्री । ९ । प्रजापतिर्ऋग्गायत्री । १० ।

लोकं ताऽइन्द्रं तिस्रः प्रतीकोक्ताः ॥(१)

(१) लोकम्पृण ताऽअस्येन्द्रोऽश्वरश्चसिनस. प्रतीकोक्ता इति काण्वपाठ. ॥

लोकं पृण च्छिद्रं पृण । ताऽअस्य सूददोहसः, इन्द्रं विश्वा इत्ये तास्तिस्रऋचो ऽत्र प्रतीकोक्ताः । प्रतीकेनादिमात्रेणोक्ताः सन्त्यः सकलाः प्रयोगकाले ज्ञेयाः, लोकं पृणेत्यस्याः । लोकंपृणाभिमर्शने विनियोग. । ताऽअस्येत्यस्याः सूददोहसाभिवदने । इन्द्रं विश्वाइत्यस्याः पुरीषनिवपने ॥ (१)

## एवर्ठ॰ सर्वत्र ॥

यत्र लोकं ता इन्द्रमित्येवं संहितायां पठ्यते । अनड्वान्वयइत्यस्यां कं हिकायां । यन्त्रीराडित्यस्यां । नवविर्ठ॰शत्या स्तुवतेत्यस्याध्यायांते तत्र सर्वत्र । एतास्तिस्रऋचः प्रतीकोक्ता. सकला ज्ञेयाः ॥ २४ ॥

## इति प्रथमा चितिः समाप्ता । अथ द्वितीया चितिः ॥

अभिधीयतइतिशेषः द्वितीया देवानामित्यस्य विषयोप प्रदर्शनार्थमिदमुक्तम् ॥

## ध्रुवक्षितिः पञ्चाश्विन्यः ॥

ध्रुवचितिध्रुवयोनिः । कुलायिनी । स्वेदंसैः । पृथिव्याः पुरीषं । अदित्यास्त्वापृष्ठइत्येताः पञ्चऋचआश्विन्यः अश्विदेवत्याः आश्विनीनामुपधाने क्रमेणविनियुक्ताः । आसां छन्दांस्याह ॥

## तासां प्रथमा विराट्चतस्रस्त्रिष्टुभो यजुरन्ताः ॥

तासां पञ्चानां प्रथमा ध्रुवक्षितिरित्येषा विराडनुष्टुप् । "दशकास्त्रयो विराडेकादशकावित्युक्ते" । कुलायिनीत्याद्यास्तस्रस्त्रिष्टुभः । पञ्चापि यजुरन्ताः । पञ्चस्वप्यश्विनाध्वर्यूइत्येतद्यजुरन्ते अस्तीत्यर्थः । अस्य यजुषः । सामगायत्रीछन्दः ध्रुवक्षितिः आद्यतृतीयावेकादशकौ । द्वितीयो दशकः । स्योने सीद स्वेदंसैः । स्वावेशा ।

(१) नियाते विनियोग इतिपदत्रिपठः ॥

अग्नेर्दश ॥

अग्नेर्दश अग्नेर्भागोऽसीत्यादीनि दशयजूंषि । अग्नेर्भाग । प्राजापत्याबृहती । १ । इन्द्रस्य । साम्नीत्रिष्टुप् । २ । नृचक्षसां । साम्नीजगती । ३ । मित्रस्य । आर्चीबृहती । ४ । अग्नेरित्यादीनां चतुर्णां मृत्युमोक्षेष्टकोपधाने विनियोगः । वसूनां भाग । ५ । आदित्यानां । साम्नीजगत्यौ । ६ । अदित्यै प्राजापत्याबृहती । ७ । देवस्य सवितुः पङ्क्तिः । ८ । यवानां । व्यूहौ । आर्चीबृहती । ९ । ऋभूणां व्यूहः । आर्चीबृहती । वसूनामित्यादिषण्णां षट्पद्योपधाने विनियोगः ॥

एकया सप्तदश ॥

एकयाऽस्तुवतेत्यादीनि सप्तदशयजूंषि सप्तदशसृष्टीनामुपधाने विनियुक्तानि ॥

सर्वाणि लिङ्गोक्तदैवतानि ॥

सर्वाणीति आयुरित्यादीन्यष्टादश, अग्नेरित्यादीनि दश, एकयेत्यादीनि सप्तदशयजूंषि, लिङ्गोक्तदैवतानि । आयुरित्यादीनां विश्वज्योतिरादयो देवता । अग्नेरित्यादीनां च अथवा सर्वासामुपधीयमाना इष्टका एव देवता ॥

सहस्रवर्त्तव्यम् ॥

सहस्र सहस्रमित्येतद्वर्त्तव्यं । वस्तुदैवतं प्रत्युक्तौ दशसप्तदशानि । एतावत्परिमाणस्य छन्दसोऽभावात्तत्र छन्दो नास्ति । तदुक्तं । यजुषामनियताक्षरत्वादेकैषां छन्दो न विद्यत इति ॥ एकयाऽस्तुवतेत्यादीनां छन्दांस्युच्यन्ते । एकया । साम्नीत्रिष्टुप् । १ । तिसृभिः । व्यूहेन साम्नीजगती २ । पञ्चभिः । साम्नीजगती ३ । सप्तभिः । साम्नीत्रिष्टुप् । ४ नवभिः । प्राजापत्याबृहती ५ । एकादशभिः । साम्नीजगती ६ । त्रयोदशभिः साम्नीजगती ७ । पञ्चदशभिरुष्णिक् ८ । सप्तदशभिः । आर्चीबृह

## रश्मिनैकोनत्रिंश० मन्त्र ॥

रश्मिना सत्यायेत्यादीन्येकोनत्रिंशद्यजूंषि स्तोमभागानामुपधाने विनियुक्तानि। तत्र। रश्मिना १ प्रेतिना। २ यजुः पङ्क्ती, अन्वित्या यजुर्बृहती। ३। सन्धिना। ४ प्रतिधिना। ५। यजुर्जगत्यौ। विष्टम्भेन यजुः पङ्क्तिः, ६ प्रवया दैवीजगती, ७ अनुया। यजुर्बृहती। ८ उशिजा यजुः पङ्क्तिः। ९ प्रकेतेन। यजुर्जगती। १०। सन्नुना। साम्न्युष्णिक, ११ सर्वं०सर्पेण। यजुस्त्रिष्टुप् १२ ऐडेन। यजुस्त्रिष्टुप्। १३। ऊधसेन। यजुस्त्रिष्टुप् १४ वयोधसा। १५। अभिजिता। १६। यजुस्त्रिष्टुभौ, प्रतिपदसि १७ यजुः पङ्क्तिः, अनुपदसि १८ यजुर्बृहती। संपदसि १९ यजुरनुष्टुप्। तेजोऽसि। २०। दैवीजगती, त्रिवृदसि २१ प्रवृदसि। २२। विवृदसि २३। संवृदसि। २४। आक्रमोऽसि। २५। यजुरनुष्टुभ, संक्रमोऽसि। २६। यजुर्बृहती। उत्क्रमोऽसि। २७। उत्क्रान्तिरसि। २८। यजुरनुष्टुभौ। अधिपतिना। २९। यजुर्बृहती ॥

## राज्ञ्यसि पञ्च ॥

राज्ञ्यसीत्यादीनि पञ्चयजूंषि। नाकसदामुपधाने विनियुक्तानि। तत्र राज्ञ्यसीत्यस्याः षष्टादशोत्तरं शतमक्षराणि। विराडसि। अत्र वा विंशतशतमक्षराणि। सम्राडसि। अत्र सप्तविंशतशतमक्षराणि। स्वराडसि। अत्र, त्रयोविंशतशतमक्षराणि। अधिपत्न्यसि। अत्र अष्टाविंशतशतमक्षराणि। एतेषु राज्ञ्यसीत्यादिषु पञ्चसु छन्दो नास्ति एतावत्परिमाणस्य छन्दसोऽभावात्। तदुक्तं यजुषामनियताक्षरत्वादेतेषां छन्दो न विद्यत इति ॥

## अयं पुरः पञ्च ॥

अयं पुरो हरिकेश इत्यादीनि पञ्चयजूंषि। पञ्चचूडानामुपधाने विनियुक्तानि। तत्रायं पुर इयं द्वानवत्यक्षरा विकृतिः, अयं दक्षिणा

इयं व्यूहेन चतुरशीत्यक्षराप्रकृति, अयं पश्चात् । इयमशीत्यक्षराकृति. । प्रयमुत्तरात् । इयं सप्तसप्तत्यक्षरा ततेक्ष्वाधिका मतिधृतिः । अयमुपरि । इयं व्यूहेनाशीत्यक्षराकृतिः । एतानि सर्वाणि लिङ्गोक्तदेवतानि एवञ्छन्दस्त्वादध्यायमुपधेयाभिश्चुरित्यमतानि एतानि सर्वाणि यजूंषि लिङ्गोक्तदेवतानि । उपधीयमानेष्टकैव एतेषां देवतात्वम्: ॥१८॥

अग्निर्मूर्द्धाऽऽग्नेयोऽनुवाकः ॥

अग्निर्मूर्द्धा दिव. ककुदित्ययमनुवाकस्तस्मा क्षोविष्टदीदिवदन्तं.,आग्नेयः अग्निदैवत. अत्रैव क्रमेण छन्दांस्याह ॥

प्रथमस्तृचो गायत्रः ॥

गायत्रीछन्दस्कः । गायत्रीणामुपधाने विनियुक्तः, अत्र पति पृथिव्या इत्यस्य व्यूहे चरम ॥

द्वितीयस्त्रिष्टुभो भुवः ॥

अस्मिन्नेवानुवाके । भुवो यज्ञस्य रजसामग्निः, ।, सर्वोषाम कवयइत्ययं द्वितीयस्तृच त्रिष्टुप्छन्दस्कः त्रिष्टुभामुपधाने विनियुक्तः । दिवि मूर्द्धानं । अर्वोष्वग्निः, अर्वोषाम एष व्यूहः ॥

तृतीयो जागतोऽयमिह ॥

अस्मिन्नेवानुवाके अयमिह, जनस्य गोपा, त्वामग्ने अङ्गिरस इत्ययं तृतीयस्तृचो जगतीछन्दस्कः । जगतीनामुपधाने विनियुक्तः होता यजिष्ठ, वनेषु चित्रं, द्युमदिमाति । त्वामग्ने अङ्गिरसः । त्वमा हु । एष व्यूहः ॥

चतुर्थ आनुष्टुभः ॥

सखायः, सठं. समित्, । त्वां चित्रश्रवस्तमेत्ययं चतुर्थस्तृच आनुष्टुभः अनुष्टुप्छन्दस्कः । अनुष्टुभामुपधाने विनियुक्त. ॥

सखाय. सम् ॥(१)

अथ सखाय सम्। इम उ स्तोमं,अनयोर्व्यूहः। वर्षिष्ठाय। सम्रक्ः, अग्ने विश्वानि। सनो वसूनि अनयोर्व्यूहः ॥

पञ्चमः प्रगाथ एना वः ॥

अस्मिन्ननुवाके एना वइत्ययं पञ्चमस्तृचः प्रगाथसञ्ज्ञः। द्वयोर्ऋचो। प्राग्द्वयपठनेन ऋक्तृचयसम्पादनं प्रगाथइत्युच्यते। तत्प्रकारमाह ॥

तत्र पूर्वा बृहती सतोबृहत्युत्तरा ताभ्यां तिस्रो बृहत्य. सम्पादिता. ॥

तत्र एना व इत्यत्र तृचे पूर्वा एनावइति। उत्तरा सयोजतइती सतोबृहती। यस्यास्तृतीय पादो द्वादशाक्षर सा बृहती "तृतीयो द्वादशकइत्युक्ते"। यस्याश्च प्रथमतृतीयौ पादौ द्वादशाक्षरौ। द्वितीयचतुर्थावष्टाक्षरौ। सतोबृहती। "अयुजौ जागतौ सतोबृहतीत्युक्ते" ताभ्या बृहती सतोबृहती। ताभ्यां तिस्रो बृहत्यः बृहतीछन्दस्का ऋच संहिता पाठएव संपादिताः कृताः। तत्रायं प्रकार। एना वो अग्नि नमसोर्जो न पातमाहुवे। प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतमितीयं बृहती,सयोजते अरुषा विश्वभोजसा सदुद्रवत्स्वाहुत। सुब्रह्मा यज्ञ सुशमी वसूनां देवं राधो जनानामिति सतोबृहती, तत्र एनावइतीयमेका सतोबृहती। विश्वस्य दूतममृतमिति सतोबृहती,एषामन्त्यं अष्टाक्षरं पाद द्वि. पठित्वा, सयोजते अरुषेति तृतीयो द्वादशाक्षर सदुद्रवदित्यष्टाक्षरश्चतुर्थ. पठित.। एव द्वितीयाबृहती संपादिता। ततः पुनः सदुद्रवदितीममष्टाक्षर पाद द्वि पठित्वा सुब्रह्मा यज्ञइतिस्तृतीयो द्वादशाक्षरो देवं-

(१) स्वा चित्रश्रवस्तम वैकाहिकीम् । इत्यधिक.. काण्वपाठ ॥

राधइत्ययमष्टाक्षरश्चतुर्थः पठितः एवमृचोः परस्परं प्रग्रथनात्प्रगाथइत्युच्यते । अस्य तृचस्य बृहतीनामुपधाने विनियोगः । अत्र मियं चेतिष्ठेत्यत्र व्यूहः । सदुद्रवदित्यत्र च । सुमना अयमेवाद्दशकः । देवं राधइत्ययमष्टकः । तेन द्व्यूना ॥

षष्ठ्यौष्णिहोऽग्ने वाजस्य ॥

अस्मिन्नेवानुवाके अग्नेवाजस्य सद्धान', अपोदाजनित्ययं षष्ठ्यत्वऔष्णिहः । उष्णिक्छन्दस्कः । उष्णिहामुपधाने विनियुक्तः अग्नीडिभ्यः सप्तकः । अत्र व्यूहः न्यूनता वा ॥

सप्तमः पुनः काकुभः प्रगाथो भद्रो नः ॥

अस्मिन्ननुवाके भद्रो नो अग्निरित्यय सप्तमस्तृचः पुनः काकुभः प्रगाथः ककुप्छन्दस्कः प्रगाथइत्यर्थः ककुभामुपधाने विनियुक्तः । नवमे प्रगाथमाह ॥

तत्र पूर्वा ककुप् सतोबृहत्युत्तरा ताभ्यां तिस्रः ककुभः सम्पादिताः ॥

तत्र भद्रो न इत्यस्मिन्सप्तमे तृचे पूर्वा भद्रो न इत्येषा ककुप्छन्दस्का । उत्तरा भद्रं मनः कृणुष्वेत्येषा सतोबृहती यस्यास्त्रिपदाया मध्यमः पादो द्वादशाक्षरःअन्त्यावष्टकौ सा ककुप् । "मध्यमश्चेत्ककुबित्युक्तेः" यस्याश्च प्रथमतृतीयौ द्वादशकौ अन्त्यावष्टकौ सा सतोबृहती । "अयुजौ जागतौ सतोबृहतीत्युक्तेः" । ताभ्यां ककुप्सतोबृहतीभ्यां तिस्रः ककुभः ककुप्छन्दस्का ऋचः संपादिताः । तत्रायंप्रकारः । भद्रो नो अग्निराहुतो भद्रारातिः सुभगभद्रोऽअध्वरः । भद्राऽउत प्रशस्तयः । इत्येषा ककुप्, भद्रंमनः कृणुष्व वृत्रतूर्ये । येना समत्सु सासहः, अवस्थिरा तनुहि भूरि शर्धतां, वनेमातेऽअभिष्टिभिरिति, सतोबृहती, तत्र भद्रोनो अग्निराहुतइतीयमेका सत

एव ककुप् । अस्याएवांत्यं भद्रा एत प्रथमस्तृतीयमष्टाक्षर पाद पुन पठित्वा भद्र मनइति द्वादशाक्षरो द्वितीय पठित । ततो येना समरिष्मत्यय तृतीयोऽष्टाक्षर पठित एव ककुप्द्वितीया सम्पादिता । अथ तृतीया । येनासमत्स्विसीसमेवाष्टाक्षर पाद पुन पठित्वा अव स्थिरा तनुहीत्यय द्वादशाक्षरो द्वितीय पठित । यदीमानद्त्ययमष्टाक्षरस्तृतीय पठित । एवतृतीया ककुप्सम्पादित, एक पूर्व प्रगाथ उक्त, अथ द्वितीय प्रगाथइति, पुन शब्दप्रयोग अग्नभद्रम मन अयमेकादशक । तेनैकोनता वा व्यूहेन पूरणमथा, पदपाङ्क्तो नवमो ऽन्ते । अग्निर्देवताग्रथाके अग्नेतमद्य, अथाग्ने, एभिर्नो अर्कैरित्य यं नवमस्तृच ॥

अष्टम पाङ्क्तोऽग्निं तं पदपाङ्क्तो नवमोऽन्ते तम् ॥

पदपङ्क्ति छन्दस्क, यस्या पञ्चाक्षराश्चत्वार पादा षडक्षर श्च पदपङ्क्ति । अथवा यस्यास्त्रय पञ्चाक्षरा । चतुर्थश्चतुर । पञ्चम षडक्षर । सापि पदपङ्क्ति, पञ्चकाश्चत्वार षटकश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्तिरित्युभयथोक्ति"। पदपङ्क्तीनामुपधाने अस्य तृचस्य विनियोग । तत्राग्नेतमद्येत्यत्र चतुर्थश्चतुष्कोऽपीति पदपङ्क्ति, अथाग्ने । व्यूह स्वर्णज्योतिरित्ययमपि चतुष्क, अत्रापि व्यूहो वा ॥

अग्निर्ठ० होतारमतिच्छन्दास्त्र्यवसाना ॥

त्र्यवसाना अवसानत्रययुक्ता । अतिच्छन्दास्त्र्यवसाना । ८ । अग्निर्ठ० होतारमितीयमृक् अतिच्छन्दा । छन्दांस्यतिक्रान्ता अतिच्छन्दा छन्दसउपधाने विनियुक्ता । इय चतु षष्ट्यक्षरा अत्यष्टिच्छन्दस्का । अत्यष्टिरितिषट्षष्ट्या । तत्र व्यूह्य "अष्टिरत्यष्टिर्वेतिभष्टिताभाषे" अत्र च "यथैतासां ककुभां चत्वारि चत्वार्यक्षराण्यादायातिच्छन्दांस्युक्‌द्वतीतिश्रुत्या"भद्राराति , अत्र तूर्य अवस्थिराग्निर्ठ०होतारमित्येता

नि द्वादशाक्षराणि प्रयोगकाले अधिकानि संविहितानि सन्ति तेन त-
त्रेयमतिधृतिछन्दस्का ॥

अग्ने त्वं द्वैपदस्तृचः ॥

अग्निरात्नेये अनुवाके अग्ने त्वं नो अन्तम', वसुरग्निः । तस्त्वा शो-
चिष्टेत्ययं द्वैपदः । द्विपदाछन्दस्कः द्विपदानामुपधाने विनियुक्तः । १८ ।
अथाग्निरग्नेवाग्निर्मूर्द्धेत्यनुवाके मन्त्राणामृषीनाह ॥

अयमग्निर्विरूपः ॥(१)

अयमग्निः सहस्रिणइत्यस्या विरूपऋषिः ॥

अबोधि बुधगविष्ठिरौ ॥

अबोध्यग्निरित्यस्या बुधगविष्ठिरावृषी ॥

जनस्य सुतम्भरः ॥

जनस्य गोपा इत्यस्याः सुतंभरऋषिः ॥

सखायऽइषः ॥

सखायः संवइत्यस्य इषऋषिः ॥

सꣳ समित्सꣳवननः ॥

सꣳ समिदित्यस्याः सꣳवननऋषिः ॥

त्वां प्रस्कण्वः ॥

त्वां चित्रश्रवस्तमेत्यस्याः प्रस्कण्वऋषिः ॥

एनावो वसिष्ठः ॥

एनावो अग्निमित्यस्या वसिष्ठऋषिः ॥

अग्ने वाजस्य गोतमः ॥

अग्ने वाजस्येत्यस्या गोतमः । अग्निर्ऋषिः ॥

भद्रो नः सौभरिः ॥

---

(१) अयमग्निर्विरूपः । इति कात्यायनानुक्रमेऽधिकः पाठो बोध्यः ॥

भद्रो नो अग्निरित्यस्याः सौभरिर्ऋषिः ॥

अग्निं तं कुमारस्त्वौ ॥

अग्निं त कुमारवृष्णौ। अग्निं तं मन्थ इत्यस्या कुमारवृषाहृषी। अनु क्तानां साधारण परमेष्ठीऋषि ॥

येनाष्टावाग्नेय्यः षड्त्रिष्टुभो द्वे अनुष्टुभौ ॥

येनऋषयइत्याद्या अष्टौऋचोऽग्निदेवताः। तासां मध्ये षाद्या षड्त्रिष्टुप्छन्दस्का। येन वहसि। अयं ते योनिरितीमे द्वे ऋचावनुष्टुप्छन्दस्कौ। पुनश्चित्युपधाने विनियोगोऽष्टानामपि ॥

तपश्चर्तव्यम् ॥

तपश्च तपस्यश्चेत्येतदृतुदैवतं ऋतव्योपधाने विनियुक्तम् द्व्यधिकाऽष्टकृति छन्द ॥

परमेष्ठी सौरम् ॥

परमेष्ठीत्येतीद यजु सूर्यदैवत विश्वज्योतिषउपधाने विनियुक्तम्। व्यूहो। शक्करीछन्द ॥

प्रोथदश्वो वसिष्ठस्त्रिष्टुभमाग्नेयीम् ॥

प्रोथदश्वइतीमामृचं त्रिष्टुप्छन्दस्कामग्निदेवत्यां वसिष्ठऋषिरपश्यत्। विकर्ण्युपधानेऽस्या विनियोग। आद्ययाव्यूह ॥

आयोर्हे स्वयमातृण्णादैवते ॥

आयोष्ट्वा। परमेष्ठीत्वेत्येते द्वे यजुषी स्वयमातृण्णादैवते। स्वयमातृण्णोपधाने विनियुक्ते। आयोरिति ब्राह्मी उष्णिक्, परमेष्ठीत्वा। आकृतिछन्द ॥

सहस्रस्य पञ्चाग्नेयानि ॥

सहस्रस्य प्रमासीत्यादीनि पञ्च यजूंष्यग्निदेवतानि हिरण्यशकलैरग्नेः प्रोक्षणे विनियुक्तानि। प्रमासि। दैवीजगती। प्रतिमा

सि । प्राजापत्यागायत्री । उष्णासि । दैवीत्रिष्टुप् । साहस्रोसि । दैवीबृहती सहस्रायता । दैवीपङ्क्तिः ॥ २० ॥

रौद्राध्यायः परमेष्ठिन आर्षं देवानां वा प्रजापतेर्वा ॥

नमस्ते रुद्र मन्यव इत्ययं रुद्रदैवत्योऽध्यायः परमेष्ठिनआर्षं । अस्याध्यायस्य परमेष्ठीऋषिरित्यर्थः ॥

देवानां वा आर्षम् ॥

अथवाऽस्याध्यायस्य देवाऋषयः प्रजापतेर्वार्षं । अथवा ऽस्याध्यायस्य प्रजापतिऋषिरित्यर्थः ॥

आद्योऽनुवाकः षोडशर्च एकरुद्रदैवत्यः ॥

अस्मिन्नध्याये आद्यः षोडशर्चोऽनुवाकोरुद्रदैवत्यः । एको रुद्रो देवता यस्य एकरुद्रदैवतः ॥

प्रथमा गायत्री ॥

अस्मिन्नाद्येऽनुवाके प्रथमा नमस्ते रुद्रमन्यवइत्येषा गायत्रीछन्दस्का ॥

तिस्रोऽनुष्टुभः ॥

ततो या ते रुद्र । यामिषुं । शिवेन वचसा, इत्येतास्तिस्रोऽनुष्टुप्छन्दस्काः । यामिषुमित्यस्यास्तृतीयचतुर्थौ नवकौ । तेन द्व्यधिका । यामिषु' । सप्तकः । हस्तेइत्यत्र व्यूहः । एकोना । शिवेन । व्यूह ॥

तिस्रः पङ्क्तयः ॥

पञ्चम्याद्या अध्यवोचत् । असौ यस्ताम्रः । असौ यो व इत्येतास्तिस्रः पङ्क्तिश्छन्दस्काः । अत्र प्रथमो देव्यः । सर्वाँश्चेति सप्तकः सर्वांश्चेति व्यूहः । असौ यो वेति व्यूह, अदृश्यन् सप्तकः ॥

सप्तानुष्टुभः ॥

ततोऽष्टस्यायाः सप्तऋचो नमोऽस्तु नीलग्रीवाय, प्रमुञ्च । विज्यं । याते । परिते धन्वनो । अवतत्य । नमस्तऽआयुधायेत्येताः अनुष्टुप्छन्दस्का ॥

द्वे जगत्यौ ॥

ततः आद्येऽनुवाके पञ्चदशीषोडश्यौ मा नो महान्तं । मा नस्तोक-इति द्वे ऋचौ जगत्यौजगतीछन्दस्के । मा नः पितादित्यत्र व्यूह । मा नो वीरानित्येकादशक ॥

मा नो द्वे कुत्सः ॥

मा नो महान्तं, मा नस्तोक इतीमे द्वेऋचौ कुत्सऋषिरपश्यत् ॥ २१ ॥

अन्त्यानुवाके सप्तैकरुद्रस्तुतिः ॥

अन्त्यानुवाके द्रापेऽअन्धसस्पत इत्यस्मिन्निमे अनुवाके सप्तर्चपर्यकस्य रुद्रस्य स्तुतिः । आसां सप्तानामृचामेको रुद्रो देवतेत्यर्थः ॥

आद्योपरिष्टाद्बृहती ॥

तासां सप्तानामाद्या प्रथमा द्रापेऽअन्धसस्पत इत्येषा उपरिष्टाद्बृहतीछन्दस्का अथाद्य सप्तकं द्वितीयोऽष्टकः । तृतीयो दशक । चतुर्थो द्वादशक इति नैकान्तोऽधिका ॥

द्वितीया जगती कुत्सस्य ॥

द्वितीया इमा रुद्रायेतीयं जगतीछन्दस्का कुत्सस्य आर्षः कुत्सोऽस्या ऋषिरित्यर्थः ॥

तृतीयाऽनुष्टुप् ॥

तृतीया याते रुद्रेत्येषाऽनुष्टुप्छन्दस्का ॥

द्वे त्रिष्टुभौ ॥

परिणो रुद्रस्य मीढुष्टमेत्येते द्वे ऋचौ त्रिष्टुभौ । मीढुष्टमेत्यस्यां तृतीयएकादशः । प्रथमद्वितीयचतुर्थपञ्चमा अष्टाक्षरा । एवमेकोना

# वाराणसी संस्कृतपुस्तकमालास्थग्रन्थाः।

| | रु. | आ. | पा. |
|---|---|---|---|
| सिद्धान्ततत्त्वविवेकाखंड ५ मे ... ... | ५ | ० | ० |
| अर्थसङ्ग्रहअंग्रेजीभाषानुवादसहित ... | १ | ० | ० |
| तन्त्रवार्त्तिक खंड १० मे ... .. | १० | ० | ० |
| कात्यायनमहर्षिप्रणीतशुक्लयजुः प्रातिशाख्य सभाष्य खंड ६ मे ... .. | ६ | ० | ० |
| सांख्यकारिका चंद्रिका टीकासंवलितगौडपादभाष्यसहिता .. ... | १ | ० | ० |
| वाक्यपदीय खंड ३ मे . .. | ३ | ० | ० |
| रसगङ्गाधर खंड ८ मे .. .. | ८ | ० | ० |
| परिभाषावृत्ती खंड २ मे ... ... | २ | ० | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् ... ... | १ | ० | ० |
| शिक्षासङ्ग्रह खंड ५ मे ... .. | ५ | ० | ० |
| नैष्कर्म्यसिद्धि खंड ३ मे ... ... | ३ | ० | ० |
| महर्षिकात्यायनप्रणीतशुक्लयजुःसर्वानुक्रमसूत्रम् सभाष्य खंड २ मे ... ... | २ | ० | ० |
| ऋग्वेदीयप्रातिशाख्यसभाष्य (यंत्रस्थ) ... | ० | ० | ० |
| न्यायलीलावती (यंत्रस्थ) ... | ० | ० | ० |

इनसे अधिकाव इतनीसंस्कृतअंग्रेजी आदिपुस्तकें हमारे यहांमिलती हैं जिनको अपेक्षित होहमारेपास लिखें।

हरभूषनदास और कम्पनी

बनारस।

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A.

AND

G. THIBAUT, PH. Dr.

No. 49.



## महर्षिकात्यायनप्रणीतम् शुक्लयजुःसर्वानुक्रमसूत्रम् ।

याज्ञिकानन्तदेवविरचितभाष्यसहितम् ॥

श्रीकाशिकराजकीयप्रधानपाठशालयाधीतविद्येन श्रीमिथिला
धीशात् लब्धवैदुष्यप्रतिष्ठेन काशीस्थसुप्रसिद्धविद्वज्जनसं
स्थापितवेदविद्यालयप्रधानाध्यापकेन च पाठको
पाह्वश्रीयुगलकिशोरशर्म्मणा निर्मितया सर्वा
नुक्रमणीतत्त्वप्रकाशाख्यटिप्पण्या समेतम् ॥

## KÁTYÁYANA'S SARVÁNUKRAMA SÚTRAS OF THE WHITE YAJUR VEDA

WITH THE COMMENTARY OF YÁJÑIKÁNANTADEVA

EDITED AND ANNOTATED BY PANDIT YUGALAKISORA PATHAKA

Late Scholar of the Benares Sanskrit College.

Fasciculus III.

BENARES:

PRINTED AND PUBLISHED BY

MESSRS. BRAJ B. DAS & CO.

AT THE BENARES PRINTING PRESS.

1894.

यजुषां रुद्राणां तिस्रोऽशीतयो देवताः ॥

तेषामुभयतो नमस्कारा अन्ये ॥

तेषां रुद्राणां मध्ये अन्ये केचिद्रुद्रा उभयतो नमस्काराः । नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नम इत्यादि, नमः सभाभ्यः सभापतिभ्यश्च वो नम इत्यादयः ।

अन्यतरतो नमस्कारा अपरे ॥

अपरे केचन रुद्रा अन्यतरतो नमस्काराः अन्यतरतः आदावेव नमस्कारो येषां तेऽन्यतरतो नमस्काराः । नमो भवाय चेत्यादयो नम आश्रिद्रते च प्रतिद्रते चेत्यादयः । नमः पुरुद्रेभ्यो अनुपुरुद्रेभ्यश्च वो नम इत्युभयतो नमस्काराः ॥

जातानामरुद्राः सभाभ्य इत्यादयः ॥

नमः सभाभ्य इत्यादयो जातानामरुद्राः जातसञ्ज्ञका रुद्रा इत्यर्थं । अस्मिन्प्रकरणे "गणजातेभ्यो जुहोतीत्यत्र" संव्यवहारार्थं । तदेवमत्र तिस्रोऽशीतयो रुद्राः पूर्णाः, अथ नमो वः किरिकेभ्य इत्यादीनां चतुर्णां यजुषां । हृदयभूता अग्निवायुसूर्याः किरिकादिशब्दवाच्या देवता आह ।

नमो वः किरिकेभ्य इत्यग्निवायुसूर्या हृदयभूताः पञ्चव्याहृतयो यज्ञरुद्रदेवत्याः ॥ २३ ॥

किरिकेभ्यो विविध्यत्केभ्य इत्येवमादिष्वन्तविशिष्टानामेव देवतात्वेन वचनात् । अग्निवायुसूर्या हृदयभूता इति आसां चतसृणां व्याहृतीनां अग्निवायुसूर्या एव देवता हृदयभूता रुद्राणां प्रधानभूता देवता किरिकादिशब्दैर्यौगिकैरग्न्यादय एवाभिधीयन्त इत्यर्थः । अथवा व्याहृतिविशेषणत्वेन व्याख्येयं । कीदृश्यो व्याहृतयो अग्निवायुसूर्याः हृदयभूताः प्रधानभूताः किरिकविविध्वतादिभिर्यौगिकै

शब्देरितालेन प्रतिपाद्या यासां व्याहृतीनां तास्वग्निवायुसूर्यहृदयभूताः । अत्र किरिकिरा विचिन्वत्का विक्षिणत्का आनिर्हताग्निवायुसूर्या एव । ते च रुद्राणां देवानां हृदयभूताः, कुतः नमो वः किरिकेभ्यइतिप्रकृत्य देवानाᳬ हृदयेभ्य इत्यग्निवायुरादित्या "एतानि हृतानि देवानाᳬहृदयानीतिश्रुतेः" । हृदयानीव हृदयानि । यथा हृदयं सर्वेषामङ्गानां प्रधानभूतं । एवमेते रुद्राणां प्रधानभूताइत्यर्थः । अत्र नमो वः किरिकेभ्यइत्यादौ निचत्वार्येव यजूंषि चतुर्ष्वेवाद्यौ नमः शब्दपाठात् । देवानां हृदयेभ्यइत्येतत्तु किरिकेभ्यइत्यादीनां चतुर्णां विशेषणमेव । न पृथग्युता इतरेषामिवाद्यौ नमः शब्दभावात् । मयोभवाय चेत्यादीनामिव चकारोपबन्धाभावाच्च । एवमेव हरिकेशाभिमाधवाचार्यैर्म हताभाष्यकारा अपि सर्वग्रन्थेषूक्तवन्तः । अग्नोऽन्यादृयएवेदं सर्वं जगत्कुर्वन्तीति किरिकाइत्युच्यन्ते । "एते हीदᳬ सर्वं कुर्वन्तीतिश्रुतेः" एतेषां प्राजापत्यश्रुतिप्रसिद्धेभ्यउत्पत्तेः प्राजापत्यत्ववत्त्वात् । तथा विचिन्वन्ति धर्मकारिणमधर्मकारिणं च पृथक्कुर्वन्तीतिविचिन्वत्काःस्तएव । तथा विविधं क्षिणन्ति हिंसन्तीति विक्षिणत्काः । तएव । तथा आनिर्हतेभ्यः इतिर्गत्यर्थः । एते ह्यग्निवायुसूर्याः सर्वतोऽग्रभिमुख्येन एतेभ्यो लोकेभ्यो निर्हताः । निर्गताः । "तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतीᳬष्यजायन्ताग्निर्योऽयं पवते सूर्यइतिश्रुतेः" । नमो विचिन्वत्केभ्यइत्येते हीदᳬ सर्वं विचिन्वन्तीत्यादौ सर्वमेतच्छ्रूयते । पंञ्चादिदेवतालसाम्याच्चैतेषां व्याहृतीत्वमुक्तम् । अत्र केचित्पञ्चव्याहृतयइतिपठन्ति । तदयुक्तं । पञ्चमस्य यजुषोऽभावात् । अस्य समस्तस्य रौद्राध्यायस्य शतरुद्रियहोमे विनियोगः ॥ १६ ॥ अथ नमो हिरण्यबाहवइत्यादीनां प्रत्येकं छन्दांस्यभिधीयन्ते ॥ १७ ॥ नमो हिरण्य० यजुस्त्रिष्टुप् । दिशां च । यजुरनुष्टुप् । वृक्षेभ्यः । यजुः पङ्क्तिः । शष्पिञ्जराय । हरिकेशाय यजुस्त्रिष्टुभौ । पशूनां । पुष्टानां । यजुरनुष्टुभस्त्रिस्रः । १७ । न

भगाय यजुर्बृहती । भवस्य । दैवीजगती । रुद्राय । यजुर्बृहती ।
सूताय यजुर्जगती । अन्ये पञ्च यजुरनुष्टुभः । १८ । रोहिताय ।
यजुः पङ्क्तिः, वृक्षाणां यजुरनुष्टुप् । भुवन्तये । यजुर्जगती । ओष-
धीनां यजुर्बृहती । मन्त्रिणे । यजुर्बृहती । कक्षाणां अनुष्टुप् । उ-
च्चै । यजुस्त्रिष्टुप् । पत्तीनां । तिस्रो गायत्री । १९ । कृत्स्नाय ता-
या । पङ्क्तिः, सत्वनां । अनुष्टुप् । सहमानाय । त्रिष्टुप् । आव्या-
धिनीनां । पङ्क्तिः, निषङ्गिणे । पङ्क्तिः । स्तेनानां । अनुष्टुप् । निचे-
रवे । त्रिष्टुप् । अरण्यानां । बृहती ॥ २० ॥ वञ्चते पङ्क्तिः, स्तायूनां
अनुष्टुप् । निषङ्गिणे । त्रिष्टुप्, तस्कराणां । बृहती । सृकायिभ्यः ।
पङ्क्तिः । मुष्णतां अनुष्टुप् । असिमद्भ्य पङ्क्तिः, विकृन्तानां । बृह-
ती ॥ २१ ॥ उष्णीषिणे । त्रिष्टुप् । कुलुञ्चानां । बृहती । इषुमद्भ्यः ।
गायत्री । धन्वा० । अनुष्टुप् । आतन्वा० उष्णिक् । प्रतिदधा० पङ्क्तिः ।
आयच्छद्भ्य । गायत्री । अस्यद्भ्योऽनुष्टुप् । २२ । विसृजद्भ्य गायत्री ।
विध्यद्भ्य । उष्णिक् । स्वपद्भ्य । दैवीपङ्क्तिः, जाग्रद्भ्यः उष्णिक् । श-
यानेभ्यः । गायत्री । आसीनेभ्य अनुष्टुप् । तिष्ठद्भ्य दैवीपङ्क्तिः । धा-
वद्भ्य उष्णिक् । २३ । सभाभ्य । दैवीपङ्क्तिः, सभापतिभ्य । बृहती ।
अश्वेभ्य दैवीबृहती । अश्वपति० । बृहती, आव्याधिनीभ्य । उष्णि-
क् । विविध्यन्ती । उष्णिक् । उगणा । गायत्री । तृंह० त्री० अनुष्टुप् ॥ २४
गणेभ्य । दैवीपङ्क्तिः, गणपति० बृहती, व्रातेभ्य । दैवीपङ्क्तिः । व्रातप-
ति० । बृहती । गृत्सेभ्य दैवीपङ्क्तिः, गृत्सपति । बृहती, विरूपेभ्य गा-
यत्री । विश्व० बृहती । २५ । सेनाभ्य दैवीपङ्क्तिः, सेनानिभ्य । अनुष्टु-
प् । रथिभ्य । दैवीपङ्क्तिः, अरथेभ्य । अनुष्टुप् । क्षत्तृभ्य । दैवीप-
ङ्क्तिः, संग्रहीतृ० । बृहती, । महद्भ्य दैवीपङ्क्तिः, अर्भकेभ्य । २६ ।
अनुष्टुप् । तक्षभ्य । दैवीपङ्क्तिः । रथकारेभ्य बृहती, कुलालेभ्य । गा-
यत्री । कर्मारेभ्य अनुष्टुप् । निषादेभ्यः । गायत्री । पुञ्जिष्टेभ्य । अनु-

ष्टुप्। ग्रनिभ्य देवीपङ्क्तिः। मृगयु०। अनुष्टुप्॥ २७॥ ग्रभ्यः। देवीबृहती। ग्रपति० अनुष्टुप्। भवाय। गायत्री। रुद्राय च देवी बृहती। शर्वाय गायत्री। पशुप०। गायत्री। नीलग्रीवाय। अनुष्टुप्। शितिकंठा०। गायत्री। २८। कपर्द्दि०। उष्णिक्। व्युप्त० गायत्री। सहस्रा०। अनुष्टुप्। शत०। गायत्री। गिरिशयायअनुष्टुप्। शिपि० गायत्री, मीढु०। अनुष्टुप्। इषुमते च। देवीपङ्क्तिः॥ २९॥ ह्रस्वाय। गायत्री। वामना। देवीपङ्क्ति। बृहते। व्वर्षीयसे। देवी पङ्क्ति, वृद्धाय गायत्री। सवृधे च। देवी बृहती। अग्र्याय पङ्क्ति, प्रथमाय। पङ्क्तिः। ३०। आशवे। गायत्री। अजिराय, पङ्क्ति, शीघ्र्याय। गायत्री। शीभ्याय। बृहती। ऊर्म्याय। गायत्री, अवस्वन्याय। गायत्री। नादेयाय। उष्णिक्। द्वीप्याय। बृहती॥ ३१॥ ज्येष्ठाय। गायत्री। कनि०। पङ्क्ति, पूर्वजाय। उष्णिक्। अपर० गायत्री। मध्यमाय। उष्णिक्। अपगल्भाय। गायत्री। जघन्या। उष्णिक्। बुध्न्याय। देवीबृहती॥ ३२॥ सोभ्याय। गायत्री। प्रति० गायत्री। याम्याय। गायत्री, क्षेम्याय पङ्क्ति। श्लोक्याय। गायत्री। अवसान्याय। गायत्री। उर्वर्य्याय। उष्णिक्। खल्याय। बृहती। ३३ वन्याय। गायत्री। कक्ष्याय च। बृहती। श्रवाय। गायत्री। प्रतिश्रवाय। गायत्री। आशुषेणाय। अनुष्टुप्। आशुरथाय। गायत्री। शूराय। गायत्री। अवभेदिने गायत्री। ३४। विल्मिने। गायत्री। कवचिने। पङ्क्ति। वर्म्मिणे गायत्री। वरूथिने पङ्क्ति, श्रुताय। गायत्री, श्रुतसेनाय। गायत्री। दुन्दुभ्या०। उष्णिक्। आहु०। गायत्री॥ ३५॥ धृष्णवे। गायत्री। प्रमृ०। पङ्क्ति। निषङ्गि०। उष्णिक्। इषुधि। गायत्री। तीक्ष्णेषो०। उष्णिक्। आयु०पङ्क्ति, स्वायु०। उष्णिक, सुध०पङ्क्ति। ३६। स्रुत्याय। गायत्री। पथ्याय बृहती। काट्या०। गायत्री। नीप्या०। बृहती कुल्या०। गायत्री। सर०। गायत्री। नादेया उष्णिक्। वैशं। पङ्

क्तिः । ३७ । कूप्याय । गायत्री ॥ अवट्याय । पङ्क्तिः । वीध्र्याय । गायत्री । आतप्या० पङ्क्तिः मेघ्या० । गायत्री । विद्युत्याय । पङ्क्तिः । वर्ष्याय । गायत्री । अवर्ष्या० । पङ्क्तिः । ३८ । वात्याय । गायत्री । रेष्म्या० । पङ्क्तिः । वास्तव्या० । उष्णिक् । वास्तु० । पङ्क्तिः । सोमाय गायत्री, रुद्राय । बृहती । ताम्राय । गायत्री । अरु० पङ्क्तिः, । ३९ । शङ्गवे । गायत्री । पशु० गायत्री । उग्रा० । गायत्री । भीमा० । बृहती । अग्रेवधा० उष्णिक् । दूरे० । गायत्री । हन्त्रे पङ्क्तिः । हनीयसे । पङ्क्तिः । वृक्षेभ्यः हरिकेशेभ्यः । यजुः पङ्क्तिः । ताराय । दैवीपङ्क्तिः ॥ ४० ॥ शम्भवाय । उष्णिक् । मयो० । गायत्री, शङ्क० । उष्णिक् । मयस्कराय । गायत्री । शिवाय । शिवतरा० । गायत्री ॥ ४१ ॥ पार्याय । गायत्री । अवार्याय पङ्क्तिः । प्रतरणाय । अनुष्टुप् । उत्तरणा । गायत्री । तीर्थ्याय । गायत्री । कूल्या । बृहती । शष्प्याय गायत्री । फेन्याय । बृहती ॥ ४२ ॥ सिकत्याय । उष्णिक् । प्रवा० । पङ्क्तिः । किंशि० शि० । उष्णिक् । चय० पङ्क्तिः, कप० उष्णिक् । पुल० पङ्क्तिः । इरि० । उष्णिक् । प्रप० । पङ्क्तिः ॥ ४३ ॥ व्रज्याय । गायत्री । गोष्ठ्या० । बृहती । तल्प्या० । गायत्री । गेह्या० । बृहती । हृद० । उष्णिक् । निवे० । पङ्क्तिः । काट्या । गायत्री । गह्व । गायत्री ॥ ४४ ॥ शुष्क्या० । गायत्री । हरि० । पङ्क्तिः । पांसव्य० । उष्णिक् । रज० पङ्क्तिः । लोप्या । गायत्री । उर्व० । पङ्क्तिः, सूर्व्या । गायत्री । सूर्म्या० बृहती ॥ ४५ ॥ पर्णाय । गायत्री । पर्ण० गायत्री । उद्गुर० । अभि० । पङ्क्तिः, आखिद० उष्णिक् । प्रखि० । पङ्क्तिः । इषु० गायत्री । धनु० अनुष्टुप् । किरिकेभ्यः । ४६ । देवानां० हृदयेभ्यः साम्नी उष्णिक् । विचि० । उष्णिक् । विक्षि० । नमऽआनिर्हतेभ्यो यजुरुष्णिक् । अथेदं दृश्यं । षडक्षरा यजुर्गायत्री । सप्ताक्षरा । यजुरुष्णिक्, अष्टाक्षरा यजुरनुष्टुप् । नवाक्षरा यजुर्बृहती । दशाक्षरा यजुः पङ्क्तिः, एकादशाक्षरा यजुस्त्रिष्टुप् । द्वादशाक्षरायजुर्जगती, पञ्चाक्षरा दैवीप

ह्नि", चतुरक्षरा दैवी बृहतीत्येतान्येवात्र छन्दांसि सन्ति ॥ २३ ॥

अश्मन्मारुतम् ॥

अश्मन्नूर्जमित्येतद्यजुर्मारुतं । मरुद्देवतं । चित्यपरिषेके विनियुक्तम् । आर्षी त्रिष्टुप् ॥

अयमंस्तेऽश्मा ॥

अयमंस्ते चुदित्यस्याग्मा देवता आर्द्रो कुम्भकरणे विनियोगः । दैवी बृहती ॥

मय्याग्नी: ॥

मयि सऽजर्गित्यस्याग्नेर्देवता पुनः कुम्भादाने विनियोगः । दैवीबृहती ॥

यं त्विष्टाऽअभिचारिकम् ॥

यन्द्विष्मस्तत्राद्यत्येतदाभिचारिकं अभिचारप्रयोजनं । अस्य शुक्रा देवता । यजुर्बृहती । अद्रिसहितस्य कुम्भस्य निरसने विनियोगः ॥

इमा मऽआग्नेयम् ॥

इमा मे अग्न इत्येतद्यजुरग्निदेवत । इय व्यूहेन द्वानवत्यक्षरा विकृति । पाषाणऽउपरि प्राणायामे जपे विनियोग. ॥

ऋतवो बृहती पङ्क्तिर्वा ॥

ऋतवस्थ इत्यस्या बृहतीछन्दः पङ्क्तिर्वा । अष्टात्रिंशदक्षरत्वाद्विकल्प । द्व्यधिका बृहती न्यूनापङ्क्तिर्वेति । एषाऽप्याग्नेयी । आग्नेयपदानुवृत्ते. । इष्टकादेवतेति कण्वभाष्ये प्राणायामजप एव विनियुक्ता ॥

समुद्रस्य द्वे गायत्र्यौ ॥

आग्नेयपदमनुवर्तते । तत्र यथार्थं विपरिणस्यते । समुद्रस्य त्वा, हिमस्य त्वेतीमे ऋचौ अग्निदेवते गायत्र्यौ । अग्नेरवकर्षणे विनियुक्ते । अनयोरन्त्यौ पादौ दशकौ । तेन द्व्यधिके ॥

**उपज्मं जगती त्रिष्टुब्वा ॥**

आग्नेयपदमनुवर्तते । उपज्मन्नुपवेतसस्तीयमृगग्निदेवता जगतीछन्दस्का त्रिष्टुप्छन्दस्का वा । इयं चतुश्चत्वारिंशदक्षरा । तेन त्रिष्टुब्भवत्येव, यदीषु भासादमिति व्यूहद्वयेन दृष्टा जगती भवति । अग्नेरवकर्षणे विनियोगः ॥

**अपामिदम् बृहती ॥**

अपामिदमित्यस्या बृहतीछन्दः । अग्निर्देवता आग्नेयपदानुवृत्तेः अग्नेर्विकर्षणे विनियोगः ॥

**अग्ने पावक वसूयवः ॥**

अग्ने पावकेतीमां वसूयव ऋषयोऽपश्यन् ॥

**स नो मेधातिथिः ॥**

स नः पावकेतीमां मेधातिथिऋषिरपश्यत् ॥

**एते आग्नेय्यौ गायत्र्यौ ॥**

अग्ने पावक, स नः पावकेत्येते, अग्निदेवत्ये गायत्रीछन्दस्के । अग्ने पावकेत्यस्या दक्षिणपक्षविकर्षणे विनियोगः, स नः पावकेत्यस्याः पुच्छविकर्षणे विनियोगः ॥

**पावकया जगती भरद्वाजः ॥**

आग्नेयपदमनुवर्तते । पावकया इतीमामृचमग्निदेवतां जगतीं भरद्वाजऋषिरपश्यत् । उत्तरपक्षे विकर्षणेऽस्या विनियोगः । यादौ व्यूहः ॥

**नमस्ते बृहतीमाग्नेयीमृषिसुता लोपामुद्रा ॥**

नमस्ते हरस इतीमामृचं बृहतीमग्निदेवतामृषिसुता ऋषेः पुत्री लोपामुद्रेतिनाम्नी अपश्यत् दृष्टवती । अग्नेरारोहणेऽस्या विनियोगः । प्रथमो नवकः । द्वितीय सप्तकः । तृतीय एकादशकः । चतु-

र्यो दृशकाऽसि । तेनेयं सप्तत्रिंशदक्षरत्वादेकाधिका बृहती ॥ २४ ॥

नृषदे पञ्चाग्नेयानि ॥

नृषदे वेडित्यादीनि पञ्चयजूंष्याग्नेयानि । अग्निदैवतानि । स्वयमातृण्णायां पञ्चगृहीतहोमे विनियुक्तानि । नृषदे । दैवीबृहती । अप्सुषदे । बर्हिषदे । वनसदे । दैव्यः पङ्क्तयः । स्वर्विदे दैवीबृहती ॥

ये देवा जगत्यौ प्राणदेवत्ये ॥

ये देवा देवानां, ये देवा देवेष्विती द्वे जगत्यौ प्राणदेवत्ये । दधिमधुघृतैरग्नेः प्रोक्षणे विनियुक्ते । व्यूहेनाद्याया पूर्त्तिः ॥

प्राणदा बृहतीपङ्क्तिर्वाग्नेयी ॥

प्राणदा अपानदा इतीयं बृहती वा पङ्क्तिर्वाग्निदेवत्या । अष्टात्रिंशदक्षरत्वाद्विकल्पः अग्नेः सकाशादवरोहणे विनियोगः ॥

अग्निस्तिग्मेनाग्नेयीं गायत्रीं भरद्वाजः ॥

अग्निस्तिग्मेन शोचिषेतीमामृचमग्निदेवत्यां गायत्रीछन्दस्कां भरद्वाजसञ्ज्ञऋषिरपश्यत् । पञ्चगृहीतहोमेऽस्या विनियोगः । द्वितीये यकारस्य व्यूहः ॥

यऽइमा वैश्वकर्मणीस्त्रिष्टुभो विश्वकर्माभौवनः ॥

यऽइमा विश्वा इत्याद्या विश्वकर्मा ह्यजनिष्टेत्यन्ता वैश्वकर्मणी विश्वकर्मदेवताः त्रिष्टुप्छन्दस्का विश्वकर्माभौवनऋषिरपश्यत् । षोडशगृहीताहुतयो होमे विनियुक्ताः सर्पिर्होता । व्यूह, किंस्विदासीदष्टकः, किंस्विद्द्वादशकः, अग्नौ द्वादशको । याति द्वादशकः । स्वयं । व्यूह, वाचस्पतिं । द्वादशकः । ममशुभ, व्यूहः । यन्तास्य । द्वादशकः, तद्भ्य । व्यूह । ऋषयः द्वादशकः, नीहारेण । व्यूह । विश्वकर्मा [. व्यूह । प्रथमं गर्भं व्यूहः ॥ २५ ॥

आशुरैन्द्रीर्द्वादश त्रिष्टुभोऽप्रतिरथ ॥

आशु शिशानइत्याद्या अमीषां चित्तमित्यन्ता द्वादश ऋचस्त्रि-ष्टुभ ऐन्द्रदेवत्या इन्द्रस्य पुत्रोऽप्रतिरथसंज्ञकऋषिरपश्यत् । स चय-नेऽग्निनयने ब्रह्मणा जपे द्वादशानां विनियोग । सङ्क्रन्दनेन द्वौ द्वादशकौ । तथापीय त्रिष्टुप । द्वौ तु जागतौ यस्मा सा जागते 'जग ती चैष्टुभि त्रिष्टुबितिवचनात्' । सऽइषुहस्तै द्वादशक, प्रभञ्जन् । द्वा दशक, अस्माक स्मक । जयन्त द्वादशक, अभिगोत्राणि द्वादश क, । इन्द्रआसां दशक । जयतीना । व्यूह । अस्माकमिन्द्रो द्वाद-शक । रहाणाङ्गानि दोव्यूहौ ॥

अवसृष्टानुष्टुविषुदेवत्या ॥

अवसृष्टा परेत्येषा अनुष्टुप इषुदेवत्या । अमीषि ते इत्येतत्पर्यंता नामरतिरथेतिसहिताभाष्ये, अस्तो विनियोगाभावऽशक्तापत्ति । सा-ध्या वा न भवन्ति । सर्वसाधारणे विष्वानिवत्यर्थविरित्यपरे ॥

प्रेत योद्धृष्टन्द्रीत्यनुष्टुप् ॥

प्रेतोजयतेतीयमनुष्टुप् । योद्धारोऽस्या देवतादत्यर्थं , मद्रुतेत्येवमन व्यूह ॥

असौ या मारुती ॥

असौ या इत्यस्या अग्यापचलियादेवता त्रिष्टुप ॥

यत्र लिङ्गोक्तदेवता पङ्क्ति ॥

यत्र बाणा इतीय लिङ्गोक्तदेवता पङ्क्तिच्छन्दस्का पञ्चपदा च त्वारिंशदक्षरा पङ्क्तिरित्युच्यते । इन्द्रो बृहस्पतिरदितिश्चात्र देव ता लिङ्गोक्ता ॥

मर्म्माणि लिङ्गोक्तेव त्रिष्टुप् ॥

मर्माणि ग्रडृतीयं लिङ्गोक्तवर्मिदेवता त्रिष्टुप् । मङ्ग्रामे घत्रि- याय कवचसमर्पणेऽस्य विनियोगः पूर्वासां चतसृणां आऽपि विनियोग कल्पकारैर्नो नास्ति । जयन्तं त्वामनुवितिवृचः, मत्र सोमो वरुणो देवाश्च लिङ्गोक्ता देवताः । अथवा वर्मैव देवता । स- र्वत्र सम्बोध्यत्वेनाम प्रधानत्वात् । न सोमादयः ॥

## उदेनं तिस्रोऽनुष्टुभः ॥

उदेनमुत्तरानित्याद्यास्तिस्रोऽनुष्टुप्छन्दस्का ज्ञेयाः ॥

## आद्याग्नेयी ॥

तिसृणामाद्या उदेनमित्येषाग्निदेवत्या द्वितीये वृचे ॥

## द्वितीयैन्द्री ॥

पूर्वोक्तानां तिसृणां मध्ये द्वितीया इन्द्रेममित्येषा इन्द्रदेवत्या ॥

## तृतीया लिङ्गोक्तदेवता ॥

पूर्वोक्तानां तिसृणां मध्ये तृतीया, यस्य कूर्मइत्येषा लिङ्गोक्तदेवता, तमग्ने वृचः । घृतावितादौदुम्बरसमिदाधाने विनियोगः । आसां । अग्नेरुत्वित्यस्य कल्पादिपूर्वसूक्तं । अत्र मदीतस्येमस्येत्यमते विनियोग इतिविशेषः ॥

## पञ्चदिश्यं पञ्चयज्ञाग्निसाधनवाद्यिन्यः ॥

पञ्च दिशो दैवीरित्याद्याः पञ्चर्चो यज्ञाग्निसाधनवाद्यिन्यः य- ज्ञं चाग्निसाधनं यागसाधनमेव वदन्तीति यज्ञाग्निसाधनवाद्यिन्यः । अथासां छन्दांसि क्रमेणाह ॥

## आद्ये द्वे त्रिष्टुभौ ॥

आसां पञ्चानां मध्ये प्रथमद्वितीये पञ्चदिशः समिद्धोऽग्नावि- त्येते द्वे त्रिष्टुभौ । पञ्चदिशः दिशोदेवताः । आद्यस्त्रयोदशकः । द्वि- तीयस्त्वेकादशकः । तृतीयो द्वादशकः । चतुर्थो दशकः । इत्यधिकाउ-

भयच इतिनवक, व्यूहेनछन्दःपूर्त्तिः, अग्निर्देवता ॥

तृतीया पङ्क्तिर्बृहती वा ॥

पञ्चानां मध्ये तृतीया दैव्याय धर्त्र इत्येषा पङ्क्तिर्वा । बृहतीवा । अष्टात्रिंशदक्षरत्वादिकत्वः । अत्राप्यग्निर्देवता । अक्षरसख्यैव प ङ्क्तिर्बृहती वा पादाक्षरनियमस्तु नास्ति ॥

चतुर्थी बृहत्येव ॥

पूर्वोक्तानां पञ्चानां मध्ये चतुर्थी वीतर्ठ॰ हविरित्येषा बृहत्ये- व । बृहतीछन्दस्कोऽ, यकारव्यूहेनाक्षरैर्बृहती । अत्रापि पादाक्षर- नियमो नास्ति । हविर्यज्ञश्च देवता ॥

अन्त्या त्रिष्टुप् ॥

पञ्चदिवइत्यादिपञ्चानामन्त्या सूर्यरश्मिरितीयं त्रिष्टुप् । अग्नि- रेव देवता । पञ्चानामपि वित्यंगति गमने विनियोगः ॥

विमानो द्वे आदित्यदेवते ॥

त्रिष्टुप्पदमनुवर्त्तते । विमानऽएष,ऽउग्रा समुद्रऽइतीमे द्वे ऋचौत्रि- ष्टुभौ । आदित्यदेवे । पूषणसोपधाने विनियुक्ते । विमानमे व्यूह. ॥

आद्या विश्वावसोः ॥

विश्वावसुरस्या ऋषिरित्यर्थ ॥

द्वितीयाऽप्रतिरथस्य ॥

पूर्वोक्तयोर्मध्ये द्वितीया उग्रा समुद्रइत्येषा अप्रतिरथस्यार्षी । अ॰ प्रतिरथोऽस्या ऋषिरित्यर्थं, इन्द्र विश्वाऽइत्यस्यर्थादि ॥गुरुत्व । अ तिक्रमपीत्र विनियोगइति विशेष ॥

देवहूर्विधृतिरनुष्टुब्यज्ञदेवत्या ॥

देवहूरित्यस्या विधृतिऋषिरनुष्टुप्छन्दो यज्ञोदेवता त्रिंशदक्षर त्वादिय इयूनानुष्टुप । उपधानेति सहिताभाष्ये । अत्रापि पादा

चरे नियमो नास्ति ॥

**वाजस्यैन्द्र्यनुष्टुप् ॥**

वाजस्य मा प्रसवद्वतीयमैन्द्री इन्द्रदेवत्या अनुष्टुप्छन्दस्का ॥

**उद्ग्राभमैन्द्राग्न्यनुष्टुवेव ॥**

उद्ग्राभं च निग्राभं चेतीयमृक्‌ऐन्द्राग्नी । इन्द्राग्नी अस्या देवता अनुष्टुप्छन्दः, देवबर्हिरित्यादीनामग्निं प्रतिगमने विनियोगः । तृतीयो नवकः । चतुर्थः सप्तकः तेन पूर्णैव ॥ २६ ॥

**क्रमध्वं पञ्चाग्नेय्योऽन्त्याद्यानुष्टुप्तस्त्रिष्टुप् । ततोबृहती पिपीलिकमध्या ॥**

क्रमध्वमग्निनेत्याद्याः पञ्चसङ्ख्योऽग्निदेवताः तासां पञ्चानां मध्ये आद्या क्रमध्वमित्यनुष्टुप् । अत्रत्र्याद्व्यूहः, ततोऽनन्तरं द्वितीया सावीमनुष्टुप्, अत्र तृतीयो दशकः, चतुर्थो द्वादशकः । तेन पूर्तिः । ततोऽनन्तरं तृतीया पृथिव्याऽहं पिपीलकमध्यावृहती । यस्याः प्रथमतृतीयौ त्रयोदशकौ । मध्यमो द्वितीयोऽष्टकः सा पिपीलिकमध्यावृहतीत्युच्यते । "त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्येत्युक्तेः" । अत्राद्यस्त्रयोदशकः द्वितीयोनवक, तृतीयस्त्रयोदशकइति षट् संख्यत्वात्बृहती त्रिपाद्यष्टमध्या पिपीलिकमध्येतिवचनात्पिपीलिकमध्या च ॥

**ततोऽनुष्टुप्त्रिष्टुबन्त्या ॥**

ततोऽनन्तरं चतुर्थी स्वर्यन्तइत्यनुष्टुप् । पादे व्यूहः । ततः च त्वाऽग्नेप्रेहीति पञ्चमी त्रिष्टुप् । द्वितीये व्यूहः, चतुर्थे तु अस्तीति ति व्यूहेऽपि दशकः । क्रमध्वमित्यादिपञ्चानामग्न्यारोहणे विनियोगः ॥

**अग्ने सहस्राक्षविराडाग्नेयी ॥**

अग्ने सहस्राक्षेत्याग्निदेवत्या विराट्छन्दस्का । यस्या दशाक्षराश्चत्वारः पादाः सा विराट्पङ्क्तिः । अथ चतुष्पदा विराड्दशकाद्युक्ते." । चतुर्थोऽथ नवमः, स्वाहा । पृथग्यजु । स्वयमातृण्णायामुपरि पयोहीति विनियोगः ॥

सुपर्णो द्वे पङ्क्तित्रिष्टुभौ ॥

सुपर्णोऽसि आजुह्वानस्त्रीमे द्वे ऋचौ अग्निदैवत्ये यथाक्रमं पङ्क्तित्रिष्टुभौ । सुपर्णोऽसि पङ्क्तिः । आजुह्वानस्त्रिष्टुप् । अग्निनिधाने विनियोगः । आग्नेयीत्यनुवर्तते । तथाचाग्नेय्यौ इत्ययि परिणम्यते । अथ सुपर्णः असीत्येवं व्यूह्य तेनेयं चत्वारिंशदक्षरा पङ्क्तिः । पञ्चपदा च पादानामक्षरसंख्या नियता नास्ति । आजुह्वानइत्यत्र तृतीयेन व्यूह्य चतुर्थो द्वादशकोपितः ॥

ताए सवितुः सावित्रीं त्रिष्टुभं पुरस्ताज्ज्योतिषं कण्वो ददर्श ॥

ताए सवितुरित्येतां सवितृदेवत्यामृचं त्रिष्टुभं कण्वऋषिर्ददर्श । अत्र वरेण्यस्येति व्यूहः । पुरस्ताज्ज्योतिषमिति केचित्पठन्ति । तदयुक्तं । तल्लक्षणस्याभावात् । तेन त्रिष्टुभं कण्वो ददर्शेत्येव सत्यः पाठः, संहिताभाष्ययोस्तु पुरस्ताज्ज्योतिषमित्यपि पाठो लिखितोऽस्ति । तदा द्व्यधिका सा भवति शमीमयसमिदाधाने विनियोगः ॥

विधेमाग्नेयी गृत्समदस्त्रिष्टुभमस्यास्त्रिस्थानोऽग्निर्देवता ॥

विधेम तइतीमामृचमग्निदेवतां त्रिष्टुभं गृत्समदोऽपश्यत् अस्यास्त्रिस्थानोऽग्निर्देवता । त्रीणि स्थानानि यस्यासौ त्रिस्थानः तानि त्रीणि स्थानानि मन्त्रमध्ये कथितानि सन्ति । वैकङ्कतसमिदाधानेऽस्या विनियोगः ॥

प्रेद्धो विराडाग्नेयी वसिष्ठस्य ॥

प्रेद्धोऽग्न इत्येषा अग्निदेवत्या विराट्वसिष्ठस्यार्षं वसिष्ठोऽस्या ऋषिरित्यर्थः । अस्या दशाक्षरास्त्रयः पादाः सन्ति, द्वितीयस्य व्यूहेन पूर्त्तिः । तेनेयं विराडनुष्टुप् । "दशकास्त्रयो विराडिति वचनात्" । औदुम्बरसमिदाधाने विनियोगः ॥

चित्तिं वैश्वकर्मण्यतिजगती ॥

चित्तिं जुहोमीतीयमृक् विश्वकर्मदेवता अतिजगतीछन्दस्का । "द्विपञ्चाशदक्षरा अतिजगतीत्युच्यते" । अत्र द्वाभ्यां व्यूहाभ्यां पूरणं । स्रुवाहुतिहोमे विनियोगः ॥

सप्ततऽआग्नेयी त्रिष्टुप् सप्तऽर्षीणाम् ॥

सप्त तेऽअग्न इत्येषा अग्निदेवत्या त्रिष्टुप्छन्दस्का सप्तर्षीणामार्षं सप्तर्षयोऽस्या ऋषय इत्यर्थः, षट्चत्वारिंशदक्षरेयं । येन द्व्यधिका त्रिष्टुप् । सर्वाहुतिहोमेऽस्य विनियोगः ॥ २७ ॥

शुक्रज्योतिः पञ्चमारुत्यः ॥

शुक्रज्योतिरित्याद्याः पञ्चर्चो मारुत्यः । मरुतश्चासां देवता इत्यर्थः ते च शुक्रज्योतिरित्यादिनामकाः । मन्त्रलिङ्गात् । ते चैकैकस्यामृचि सप्त सन्ति । तेन प्रत्यृचं सप्तानां सप्तानां मन्त्रनामकानामुद्देशः कार्यः, आसां क्रमेण छन्दांस्याह ॥

आद्या चतुर्थी चोष्णिक् ॥(१)

पञ्चानां मध्ये आद्या शुक्रज्योतिरितीय उष्णिक्, चतुर्थी ऋतश्चेति इयञ्चोष्णिक् । प्रथमाऽष्टाविंशत्यक्षरा । चतुर्थी एकाऽधिका ।

द्वितीया तृतीया च गायत्री ॥(२)

---

(१) आद्या तृतीयोष्णिक् इति कात्यायनसर्वानुक्रमपाठः ॥

(२) द्वितीया चतुर्थी च गायत्री इत्यपि तत्रत्यः पाठः ॥

असौ यथ्यां द्वितीया इंद्रश्चेति गायत्री । ऋतधेति तृतीया च गायत्री ॥

पञ्चमी जगती ॥

पथां मध्ये पञ्चमी इंद्रवायवइति जगती । अष्टाचत्वारिंशदक्षरत्वात् ॥

षष्ठी गायत्र्युष्णिग्वा ॥

षष्ठी ऋतवानित्येषा गायत्री । उष्णिग्वा । षड्विंशत्यक्षरत्वादित्यन्यः । पञ्चानामपि क्रमेण मारुतपुरोडाशहोमे विनियोगः ॥

इन्द्रं दैवीर्मारुतम् ॥(१)

इन्द्रं दैवीरित्येकामरुतं दैवतं यजुः व्यूहेन षट्पञ्चाशदक्षरात्मकं । जपे विनियोग ॥

इमं त्रयोदशर्चं आग्नेयस्त्रैष्टुभोऽनुवाको यज्ञस्तुतिर्घृतस्तुतिर्वा वसोर्द्धाराभिवादिनी वा ॥

इमं स्तनमित्येष त्रयोदशर्चोऽनुवाकोऽग्निदेवतस्त्रिष्टुप् छन्दस्कः एषोऽनुवाको यज्ञस्तुतिर्वा वसोर्द्धाराऽभिवादिनी घृतस्तुतिश्च, यद्वै वसोर्द्धाराहोमो भविष्यति तदभिवादिनी घृतस्तुतिरप्येष दृश्यते सकलस्यानुवाकस्य जपे वाचने वा विनियोगः ॥

घृतं मिमिक्षे गृत्समदः ॥

अग्निरनुवाके घृतं मिमिक्ष इत्यस्या गृत्समदऋषिः ॥

समुद्राद्वामदेवः ॥

समुद्रादूर्मिः । इत्यस्या वामदेवऋषिः ॥

चत्वारि शृङ्गा यज्ञपुरुषदेवत्यऽस्त्यपरो मन्त्रः ॥

---

(१) इन्द्र दैवीर्मारुती इत्यत्र इत्यादि तथैव ठः ॥

चत्वारि शृङ्गेत्ययं मन्त्रो यज्ञपुरुषदेवताः प्रथमः मन्त्रोक्तरूपभाक्-यो यज्ञपुरुषोऽस्य देवतेत्यर्थः अत्र । घृते स्थितः । व्यूह, घृतस्य नाम । व्यूहः । चतुः शृङ्गः व्यूहः, द्वे शीर्षे व्यूहः । एता अर्षन्ति । व्यूहः । कल्याण्यः । अक्षुयन्त्याणां । व्यूहः । धामन्ते द्वादशकः । अपाङ्गनीके द्वौ दशकौ । अथानुक्रमणीयां सर्वमन्त्राणामप्यग्निं प्रजापतिरपश्यत्साध्या वाऽपश्यन्नित्यत एव प्रत्ययः ॥ २८ ॥

वाजश्च मे देवानामार्षम् ॥

वाजश्च म इत्यादीनि वेदिष्वाहेत्यन्तानि वसोर्धाराहोममन्त्रभूतानि यजूंषि देवानामार्षं । एतेषां यजुषां देवा ऋषय इत्यर्थः, वसोर्धाराहोमे विनियोगः ॥

एतैर्यजुर्भिर्यजमानोऽग्नेः कामान्याचते ॥

यजमानः एतैर्वाजश्च म इत्यादिभिर्यजुर्भिरग्नेः सकाशात् । वाजोऽन्नं मेऽस्त्वित्येवं कामानभिलाषान्याचते प्रार्थयते । अत एवैतेषां यजुषामग्निरेव देवता । तथा च श्रुतिः । "अथातो वसोर्धारां जुहोत्यत्रैव सर्वोऽग्निः संस्कृतः सएषोऽत्र वसुस्तस्मै देवा एतां धारां प्राप्यन्स्तयैनमप्रीणन्नित्यादि" । कामप्रार्थनं च श्रूयते कामादिहं च मह्यं च मह्यमनेन चात्मा प्रीणात्यनेन चात्माशिषस्त्वनेन चेत्येतदथो इदं च मे देहीदं च मह्यमसीति । तथा "एतद्वै देवा अमुं यज्ञेनाप्त्वा कामानाप्नुवन्ति प्रतीच्यामश्रुवन्नेवैत्यमुं यज्ञो वै देवानामात्मा यत एष एव यजमानस्य स यदाह यज्ञेन कल्पन्तामित्यात्मा मे कल्पन्तामित्याहेति" । अत्र वाजादयः काम्यमानत्वात्कामाः । अत छन्दांसि । ऊर्क् च म इत्यादियजुषां दैव्यनुष्टुप् । वाजश्च म इत्यादिचतुरक्षराणां दैवीबृहती, प्रयतिश्च म इत्येव पञ्चाक्षराणां दैवीपङ्क्तिः, आधिपत्यं च म इत्यादि षडक्षराणां दैवीत्रिष्टुप् यजुर्गायत्री वा । सप्ताक्षराणां हारियोजनश्च इत्यादीनां दैवीजगती । यजुरुष्णिग्वा । अष्टाक्ष-

राणां वायुर्यन्त्रेन इत्यादीनां यजुरनुष्टुप्। भुवनस्य पतये स्वाहेत्यादीनां नवाक्षराणां यजुर्बृहती। दशाक्षराणां सुखाय वैनर्ट॰ मिनायेत्यादीनां यजुः पङ्क्तिः। एकादशाक्षराणां विमर्ठ ग्रिमपीत्यायमाय स्वाहेत्यादीनां यजुस्त्रिष्टुप् इ.दशाक्षरस्य पशुस्तयः। यज्ञद्वयी द्विपदमस्त्वस्य यजुर्जगती एवमनुमानमपि कल्पनीयं, अत्र च चत्वारिंशताऽप्येकाधिकानि यजूंषि सन्ति। तत्र चाजस्य मन्त्यायासु ज्येष्ठ्यं च मे, वसु च म इतिकण्डिकाद्वयवर्जितासु एकोनविंशतिकण्डिकासु त्रयोदश त्रयोदश यजूंषि सन्ति। ज्येष्ठ्य च मइत्यस्यां तु पञ्चदश यजूंषि। वसु च म इत्यस्यां नव। अग्निश्च मे घर्मश्च मइत्यस्यां कामास्त्रयोदश। यजूंषि तु द्वादशैव। यज्ञस्तयः यज्ञद्वयी द्विपदम्त्वेकमेव यजुः अत्र कामास्त्रयः। यजुर्जगतीछन्दो, व्रतं च म इत्यस्यां कामा दश यजूंषि चैव,चहोरात्रे उर्वष्ठीवे इहद्रथन्तरे च म इत्येतावदेकं यजुः। अग्निनष्टकामाः। प्राजापत्यानुष्टुप्सामानुष्टुप् छन्दः, एका च मइत्यस्यां त्रयस्त्रिंशत्। चतस्रश्च मइत्यस्यां त्रयोविंशतिः। त्र्यविश्च म इत्यस्यामेकादश। पष्ठवाट्च मित्यस्यां नव,वाजायस्वाहेत्यस्यां चतुर्दश। तत्र त्रयोदश स्वाहाकारानि। चतस्रिश चतुर्दश व्यूहाभ्यामष्टाविंशत्यक्षरा प्राजापत्या अनुष्टुप् तस्य छन्दः। आयुर्यज्ञेनेत्यस्यैकविंशतिः। तत्र द्वादश कल्पन्तामन्तानि। स्तोमश्चेत्यादीनि षट्। स्वर्देवा अगन्मामृता अभूमेत्येकं। साम्नगायत्री तस्य छन्दः। व्यूहश्च। प्रजापतेः प्रजा अभूमेत्येकं। यजुर्बृहती। वेट्स्वाहेत्येकं। दैव्यनुष्टुप्, एवं च चत्वारिंशतान्येकाधिकानि पूर्णानि॥

वाजसवीयर्ठ॰ समाप्तम्॥

सप्ताध्यायानां समाहारः सप्तर्चं वाजसवीयसम्बन्धिसप्तर्चं अभिधीयतइति शेषः। वाजस्य नित्यप्सा अपि परधी प्रसवे गच्छतास-

सप्तर्षयो भवन्ति । यत्रास्तु ऋचो भवन्ति । यत्रास्तु ऋच्यादि ग्रा-
ह्यम् ॥

विश्वे त्रैष्टुभं (१)वैश्वदेवं स्रुगोपधानाद्याः ॥

विश्वे त्वेत्येतत्त्रिष्टुप् छन्दस्कं विश्वदेवदेवतं स्रुगोपधानादावुपयुक्त-
म् । अत्र द्वितीये व्यूहः । आग्निकराजसूयीयहोमेऽस्य सर्वस्य
विनियोगः ॥

वाजो नस्तिस्रोऽन्नदेवत्या आद्याऽनुष्टुप् द्वे त्रिष्टु-
भौ ॥

वाजो नः सप्त इत्याद्यास्तिस्र ऋचोऽन्नदेवत्याः । तासामाद्याऽनु-
ष्टुप् छन्दस्का वाजो नः सप्तेत्येषा । तृतीये व्यूहः । ततो वाजो नो
अद्य, वाजः पुरस्तादितीमे द्वे त्रिष्टुभौ ॥

सम्रा विराजावाग्नेय्यौ ॥

सम्रा, पयः पृथिव्यामित्यनयोः प्रजापतिर्ऋषिः अग्निर्देवता विराड-
नुष्टुप्छन्दः । देवस्य त्वा प्र॰सवितादेव॰प्राजापत्याबृहतीछन्दोऽभिषे-
के विनियोगः ॥

सरस्वत्यै लिङ्गोक्तम् ॥

सरस्वत्यै प्र॰यजमानो देवता प्राजापत्या बृहतीछन्दोऽभिषेके
विनियोगः ॥

ऋताषाड्गन्धर्वोऽप्सरसः ॥

ऋताषाट् प्र॰ऋतधामाग्निः प्राजापत्या बृहती । इषिरो व्यूहेन
ऋग्बृहती । तस्यापो आसुरी उष्णिक्, मुद्. । एकाधिका प्राजा-
पत्या पङ्क्तिः । तस्य दक्षिणा । एकाधिका प्राजापत्याऽनुष्टुप् । प्रजा-
पतिः । प्राजापत्या त्रिष्टुप् । तस्य ऋक्सामानि । ऋग्गायत्री । राष्ट्र

---

(१) वैश्वदेवी इति काण्वपाठ ॥

भद्रोमि त्वतामादित्यादिद्वादशमन्त्राणां विनियोगः ॥

स नः प्राजापत्या प्रस्तारपङ्क्तिः ॥

स नो भुवनस्येत्यष्टतीयं प्रजापतिदेवत्या । यस्याः प्रस्तारपङ्क्तिश्छन्दः यथा आद्यौ द्वादशकौ अन्त्यावष्टकौ सा प्रस्तारपङ्क्तिः । "आद्यौ चेत्प्रस्तारपङ्क्तिरित्युक्तेः" रथशीर्षे पञ्चदशीतद्घोमेऽस्या विनियोगः । अत्र तृतीयो नवकः । चतुर्थ. स्वाहाकारेण सहाष्टकः ॥

समुद्रोऽसि वायव्यानि त्रीणि ॥

समुद्रोऽसि नभस्वानित्यादीनि त्रीणि यजूंषि वायुदेवतानि वातहोमे विनियुक्तानि । समुद्रोऽसि व्यूहेन ऋचामनुष्टुप् । मारुतोऽसि । त्र्युष्णिक् । अवस्यूरसि । प्राजापत्याबृहती, यास्ते अग्ने, या व इत्यनयोः प्रायुक्तहोमे विनियोगः ॥

रुचमाग्नेय्यनुष्टुप् ॥

रुचं नो धेहीतीयमग्निदेवत्याऽनुष्टुप्होमे विनियुक्ता । प्रथमोऽत्र नवकः । नैतिकाधिका ॥

तत्त्वा वारुणी त्रिष्टुभर्ठ· शुनःशेप । ॥

तत्त्वा यामीमामृचं वरुणदेवत्यां त्रिष्टुभं शुनःशेपऋषिरपश्यत् । आज्याहुतिहोमेऽस्या विनियोगः ॥

स्वर्णाग्नेयानि पञ्च ॥

स्वर्ण घर्मइत्यादीनि पञ्च यजूंष्यग्निदैवतानि । आज्याहुतिहोमएवैषां विनियोग । पञ्चानामपि यजुर्गायत्रीछन्द द्वितीये व्यूह. । दैवीपङ्क्तिः ॥

अग्निं युनज्म्याग्नेय्यस्तिस्त्र आद्ये द्वे त्रिष्टुभौ पङ्क्तिस्तृतीया ॥

अग्निं युनज्मि, इमौ ते पक्षौ, इन्दुर्दक्ष इत्येतास्तिस्र ऋचोऽग्निदेवत्याः। तासां आद्ये द्वे त्रिष्टुप्छन्दस्के। तृतीया इन्दुर्दक्ष इत्येषा पङ्क्तिः। अग्नियोजने तिसृणां विनियोगः। तत्र पद्यं। द्वादशकः। इमौ ते। द्वादशकः। याभ्यां द्वौ व्यूहौ। अत्र अष्टय. चतुर्दशकः, तेनैकाधिका। इन्दुर्दक्षः नवकः। द्वितीयतृतीयौ एकादशकौ। चतुर्थो नवकः। तेन चत्वारिंशदक्षरा पङ्क्तिः॥

## दिवो द्वे आग्नेय्यौ परोष्णिङ्महापदपङ्क्ती॥

दिवो मूर्द्धाऽसि, विश्वस्य मूर्द्धन्नितीमे द्वे ऋचावग्निदेवत्ये यथाक्रमं परोष्णिङ्महापदपङ्क्तिः। तत्र दिवो मूर्द्धा परोष्णिक् यस्यास्त्रिपदा। आद्यावष्टकौ। तृतीयो द्वादशकः। तेनैकाधिका आद्यपादयोरक्षरनियमो नास्ति, विश्वस्य मूर्द्धन्निति जगती महापदपङ्क्तिः। पञ्चचत्वारिंशदक्षरा। महापङ्क्तिलक्षणं त्वत्र परिभाषायां नास्ति। महापङ्क्तिलक्षणं विद्यते। अष्टकः सप्तकः। षट्कौ दशको नवकौ गपञ्चाष्टका वा महापङ्क्तिरिति, तेनात्र विश्वस्य मूर्द्धन्निति प्रथमो यकारव्यूहेन पञ्चाक्षरः पादः, तिष्ठसीत्यादिर्द्वितीयः सप्तकः, समुद्रे ते तृतीयो दशकः। अपो दत्तेत्यष्टकः, पृथिव्या इत्यपि नवकः। तेनात्र परोष्णिङ्महापङ्क्तीत्येव पाठो युक्तः। इतरस्तु प्रमादपाठः अग्निविमोकेऽनयोर्विनियोगः॥

## इष्टो यज्ञो द्वृचं यजमानाग्निदैवत्यं गालवः। आद्योष्णिग्द्वितीया गायत्री॥

इष्टो यज्ञ इत्येतद्द्व्यृचं ऋग्द्वयं ऋषिश्च यजमानाग्निदेवतं गालवऋषिरपश्यत् अस्मिन्द्वृचे आद्या इष्टो यज्ञ इत्युष्णिक् अष्टाविंशत्यक्षरत्वात्। पादाक्षरनियमो नास्ति द्वितीया इष्टोऽग्निर्गायत्री। आद्यः सप्तकः। तेनैकोना। स्वगाद्दमितिति पूरणं वा। आग्नि-

कसमिष्टयजुर्होमे तयोर्विनियोग ॥

यदाकूतादष्टर्चमाग्नेयं विश्वकर्मणः ॥

यदाकूतात्समसुस्रोद्धृदो इत्यादष्टर्चं अग्निदैवतं । विश्वकर्मणश्चार्षं विश्वकर्माऽपश्यदित्यर्थः । स्रुचाहुतिहोमे विनियोगोऽस्याष्टर्चस्य ॥

तृतीया दैवी वा ॥

अग्निमष्टर्चे तृतीया एतं जानाथेत्येषा दैवी वा । देवा अस्या दैवतमित्यर्थः । आग्नेयी वेति विकल्पः ॥

आद्या जगती ॥

अनाद्या यदाकूतादित्येषा जगती । अत्र चतुर्थश्चतुर्दशकः । अथ एकादशकाः । तृतीये व्यूहः ॥

तिस्रस्त्रिष्टुभः ॥

एतं॰ सधस्थ, एतं जानाथ, उद्बुध्यस्वेत्येतास्तिस्र ऋचस्त्रिष्टुभः । एतं॰ सधस्थेत्यत्र चतुर्थे व्यूहः । एतं जानाथ । व्यूहः । उद्बुध्यस्वेत्यत्र तृतीयो दशकः, चतुर्थो द्वादशकः ॥

चतस्रोऽनुष्टुभः ॥

येन वहसि । प्रस्तरेण, यद्दत्तं, यत्र धारा इत्येताश्चतस्र ऋचोऽनुष्टुभः । स्वर्देवेषु इत्यत्र सुवर्देवेष्विति चतसृष्वपि चतुर्थपादे व्यूहः, अधीर्घृतस्येत्यन्ततः ॥

अग्निरस्म्यन्त्याद्वैतवादिनी त्रिष्टुभं देवश्रवादेववात-श्चभारतौ ॥

अग्निरस्मि जन्मना इत्येतामृचं त्रिष्टुप्छन्दस्कामद्वैतवादिनीं भारतौ भरतपुत्रौ देवश्रवोदेववातौ द्वावृषी अपश्यताम् । अस्या अग्निर्देवता । आत्मनोऽग्निना सहाद्वैतमैक्यं वदतीत्यद्वैतवादि

नीयस्या विनियोगो यज्ञकर्मणि नास्ति ॥

ऋचो यजु ॥

ऋचौ नामासीत्येतद्यजु । एकवचनादेकमेव सप्तदशाक्षरो व्यूहेन अनुगायत्री आकाशदेवता । अस्याऽपि विनिय गतको नास्ति ॥

येऽअग्नयोऽनुष्टुबाग्नेयी ॥

येऽग्नय पाचजन्यादृतीयमनुष्टुबग्निदेवत्या । अग्नेरुपस्थाने विनियुक्ता । अस्या पृथिव्या । व्यूह ॥ १० ॥

वार्त्रहत्याय सप्तर्चमिन्द्रोऽपश्यत् ॥

आग्नेयपदमनुवर्त्तत, वार्त्रहत्यायेत्यादि सप्तर्च ऋच सप्तक चित्या ग्निदेवत इन्द्रऋषिरपश्यत् । "इदमेतत्सप्तचमपश्य दितिश्रुत" । पुरीषधर्या यतक स्थाने विनियोग ॥

आद्ये द्वे वार्त्रघ्न्यौ गायत्रित्रिष्टुभौ विश्वामित्रस्य च ॥

अत्र सप्तर्चे आद्ये द्वे ऋचौ वार्त्रहत्याय, सहदासुमित्यिति वार्त्रघ्न्यौ क्रमेण गायत्री त्रिष्टुभौ विश्वामित्रस्य च ऋषेरार्ष चकारादिन्द्रस्य च । अनयोरिन्द्रविश्वामित्रौ द्वावृषी स्यादित्यर्थ । विश्वामित्रे चेंद्रस्य चार्षो साभूदिति । चकार समुच्चयार्थ । अतएव यन्नादन्यत्राविशेषोक्तेन ऋ यथा सामान्यस्यापवादो भवतीति गम्यते, पृतनाषाह्याय चेत्यत्र व्यूह ॥

त्रिनेऽनुष्टुप् ॥

त्रि मरुद्भिरित्यनुष्टुप ॥

मृगो न त्रिष्टुप् ॥

मृगो न भीमस्तीय त्रिष्टप् ॥

प्रथमाऽभ्यां भारद्वाज ॥

अथवा विन इन्द्रइतीमा भारद्वाजस्य पुत्र शास ऋषिरपश्यत् । वि न शासोभारद्वाजइति सायुक्तोऽपि इन्द्रेण ऋषिणाऽत्र विशेषोम दिष्टेन इन्द्रएवसाक्षसमपश्यदितिगत्यश्रुतेन शासस्य बाधो माभू दिति पुनरुक्त । इन्द्रोऽप्यत्र भवत्येव । प्रत्यक्षश्रुतत्वात् ॥

द्वितीया जयऐन्द्र ॥

द्वितीयां मृगो नेतीमा "इन्द्रस्य पुत्रोजयसञ्ज्ञऋषिरपश्यत् । तथा चोक्तं द्वितीययास्मै च प्रत्यक्षश्रुति" ॥

द्वे वैश्वानर्यौ गायत्रीत्रिष्टुभौ ॥

वैश्वानर, पृष्टोदिवीतीमे द्वे ऋचौ वैश्वानरदेवते क्रमेण गायत्री त्रिष्टुभौ । वैश्वानरो गायत्री । पृष्टोदिवि त्रिष्टुप ।

पृष्टो दिवि कुत्सस्य च ॥

पृष्टो दिवीत्येषा कुत्सस्यार्षं चकारादिन्द्रस्य च । तस्या इन्द्रकुत्सौ द्वावप्यृषी इत्यर्थ । अत्रापि चकार समुच्चयार्थ ॥

अश्याम द्वे त्रिष्टुभावाग्नेय्यौ कामवत्यौ ॥

अश्याम त । वय ते, अग्नेतीमे द्वे ऋचौ त्रिष्टुभौ अग्निदेवते काम शब्दवत्यौ ॥

अश्याम भरद्वाजस्य च ॥

अश्याम त इत्येषा भरद्वाजस्यार्षं । चकारादिन्द्रस्य च । चकार समुच्चयार्थं । इन्द्रभरद्वाजावस्या ऋषी इत्यर्थ ॥

वयं ते कात्यस्योत्कीलस्य ॥

त्रिष्टुप्पदमनुवर्त्तते । वय तइत्येषा त्रिष्टुप कात्यस्य कतापत्यस्यो त्कीलस्य । आर्षमिति शेष । कतस्य पौत्र उत्कील ऋषिरि त्यर्थ । त्रिष्टुपस्यानएत्रविकल्पेन विनियोग ॥

धामच्छदनुष्टुब्वैश्वदेवी ॥

धामच्छदग्निरित्येषा वैश्वदेवदेवताऽनुष्टुप् दशमिरुपस्थानपद्ये चि-त्युपस्थाने विनियुक्ता, प्रथमः सप्तकः । चतुर्थे व्यूहं कृत्वा छन्दः प-रणम् ॥ २१ ॥ (१)

अथ सौत्रामणी ॥

अथानन्तरं सौत्रामणी । अभिधीयत इति शेषः । सौत्रामणीम-न्त्राणामृष्यादिकमभिधीयत इत्यर्थः ॥

प्रजापतेरार्षमश्विनोः सरस्वत्याश्च ॥

सा सौत्रामणी प्रजापतेरार्षं । सरस्वत्याश्चार्षं । सौत्रामण्यां म-न्त्राणां प्रजापतिरश्विनौ च सरस्वती च एते ऋषयः सन्तीत्यर्थः ॥

स्वाद्वीं त्वाऽनुष्टुप् सुरासोमदेवत्या ॥

स्वाद्वीं त्वा स्वादुनेत्ययमनुष्टुप् यस्याः सुरासोमौ देवता । सुरा-रूपः सोमः सुरासोम इत्युच्यते । अथ प्रथमोऽष्टकः तृतीयोऽष्टकः । चतुर्थः सप्तकः । सुरायाः संसर्जने विनियोग ॥

सोमोऽसि चत्वारि सौराणि ॥

सोमोऽस्यश्विभ्यामित्यादीनि चत्वारि यजूंषि सौराणि सुरा-संसर्जन एव विनियुक्तानि । सोमोऽसि । दैव्यनुष्टुप् । अश्विभ्यां यजु-र्बृहती ॥

परीतो भारद्वाजः सौमीं बृहतीम् ॥

परीतोषिञ्चतेतीमां बृहतीं सोमदेवत्यां भरद्वाजऋषिरपश्यत् । प्रथमोऽष्टकः तृतीयो व्यूहाभ्यां द्वादशकः । सेयं बृहती । पयसा सु-रापरिषेके विनियोगः ॥

वायोःपूतो गायत्रः सौम्यश्चाभूतेः ॥

---

(१) काण्वसर्वानुक्रमेऽत्रैव द्वितीयाध्यायः समाप्तः कृतः ॥

ओजोऽसि सुरादेवत्यानि ॥

ओजोऽस्योजो मयि धेह्रीत्यादीनि त्रीणि यजूंषि सुरादेवत्यानि । ओजोसि यजुरनुष्टुप् सुराग्रहग्रहणे विनियोगस्तथाप्यग्रिमपि मध्वसि । यजुः पङ्क्तिः । सहोऽसि । यजुर्बृहती ॥

या व्याघ्रं ३ हैमवर्चरनुष्टुब्विषूचिकासुतिः ॥

या व्याघ्रमित्येषाऽनुष्टुप् हैमवर्चं । आर्षमिति शेषः । हैमवर्चिसंज्ञोऽस्याऋषिरित्यर्थः । इय विषूचिकायाः व्याधिविशेषस्य स्तुतिः सैवात्र देवता । स्तुतिमात्रोदेवतात्वमुक्तत्वात्, व्याधीनामप्यधिष्ठात्री देवताः सन्ति तत्रापिसाविषूचिकाऽत्र स्तूयतइत्यर्थः, शिनपताभ्यां यजमानस्य पावने विनियोगः । या व्याघ्रमित्यस्य व्यूहेन पूर्तिः, सहसं पातु, अंहस इतिहो व्यूहो ॥

यदा पिपेषाग्नेयी बृहती ॥

यदा पिपेषेत्येषाऽग्निदेवत्या बृहती । अग्निप्रेरणे विनियुक्ता । अत्र तृतीयएकादशकः । अन्योऽष्टका एकोना ॥

सम्पृचस्थ पयोग्रहाः ॥

सम्पृचस्थेत्यस्य यजुष पयोग्रहा देवताः । यजुस्त्रिष्टुप् । पयोग्रहसंसर्गने विनियोगः ॥

विपृचस्थ सुराग्रहाः ॥

विपृचस्थेत्यस्य सुराग्रहादेवता । यजुस्त्रिष्टुप् । सुराग्रहसंसर्गेने विनियोगः ॥

देवा यज्ञं ब्राह्मणानुवाको विंशं०ग्रतिरनुष्टुभः सोमसम्पत् ॥

देवा यज्ञमतन्वतेत्याद्या विंशतिऋचोऽनुष्टुप्छन्दस्काः । ब्राह्मणानुवाकः । अयं विंशतिकाण्डकात्मको ब्राह्मणरूपोऽनुवाको न तु मं-

अथ नवर्चं पावेद्वे प्रश्नो 'पुनन्तु मा' इत्येते अनुष्टुभौ पितृदेवत्ये। अध्यायस्य प्रथमो ऽष्टकः । तेन दृश्यधिका वा ॥

**प्रजापतिस्तृतीयां वैखानसमप्याग्नेयीं गायत्रीम् ॥**

अग्न आयूंषि पवस इति तृतीयां गायत्रीमग्निदैवतां वैखानसः प्रजापतिर्ऋषिरपश्यत् ॥

**चतुर्थी लिङ्गोक्तदेवतानुष्टुप् ॥ (१)**

पुनन्तु मा देवजना इत्येषा चतुर्थी लिङ्गोक्तदेवतानुष्टुप्छन्दस्का देवजना धियो, विश्वा भूतानि जातवेदाश्चास्यां लिङ्गोक्ता देवता ॥

**पञ्चम्याग्नेयी गायत्री ॥**

पवित्रेण पुनीहि मेत्येषा गायत्री अग्निदेवता च । ग्रहेण । व्यूढः ॥

**षष्ठ्याग्नेयी ब्राह्मी वा गायत्री ॥ (२)**

यत्ते पवित्रमित्येषा षष्ठी गायत्री अग्निदेवत्या ब्रह्मदेवत्या वा ॥

**ब्राह्मस्तृतीयः पादः ॥**

यत्तदित्यस्यास्तृतीयः पादश्च, ब्रह्म तेनेयं ब्राह्मी ब्रह्मदैवतः ॥

**सौमी सप्तमी ॥**

पवमानः सदित्येषा सप्तमी ऋक् गायत्री सोमदेवता च गायत्रीत्यनुवर्तते ॥

**सावित्र्यष्टमी ॥**

गायत्रीत्यनुवर्तते । उभाभ्यामित्येषा अष्टमी गायत्री सवितृदेवत्या च । मां पुनीहीति सप्तकः । तत्र व्यूहो वा ॥

**नवमी त्रिष्टुब्वैश्वदेवी ॥**

---

(१) दैवतमनुष्टुप् । इति काण्वसर्वानुक्रमपाठः ॥

(२) ब्राह्मी च गायत्री इति काण्वसर्वानुक्रमपाठे बोध्यम् ॥

दृष्टेशइत्युक्तत्वात्, इयच मध्ये ज्योतिर्जगतीत्युच्यते, अस्य जगत्या एकपादाऽष्टक । सा ज्योतिष्मती । तथाचोक्तं । पिङ्गले । एकेन त्रिष्टुब्ज्योतिष्मती । तथा जगती । पुरस्ताज्ज्योति: प्रथमेन । मध्ये ज्योतिर्मध्यमेनोपरिष्टाज्ज्योतिरन्तेनेति । सरस्वतीत्यन्या अन्त्यौ दशकैकादशकौ । तथाऽपि जगती द्वौ तु जागतौ यस्या सा जागत जगतीत्युक्तत्वात् । पयसा शुक्रमित्यस्यां त्रयएकादशका । चतुर्थो दशक: । तत्र तृतीये एको व्यूह । चतुर्थे द्वौ व्यूहौ । एव द्वौ द्वादशकौ । चतुर्थस्तु स्वतएव द्वादशक । एव द्वौ द्वादशकौ तेनेयमपि जगती । अन्नात्परीत्यत्र चत्वारोऽप्येकादशका । चतुरूनाऽपि सा जगत्येव । इत्यद्दिश्यइत्युक्तत्वात् । "जगतीभिर्जुहोतीतिश्रुतेश्च" । कुर्म्यावमिष्टुरित्यत्र आद्यएकादशक चत्वादशक । तथाऽपि जगत्येव बहुनाऽपि । मुखं सदित्यत्र द्वितीया द्वादशका । त्रय एकादशका । तथापि जगती अग्निभ्यां चक्षुरित्यत्रापि तृतीयो द्वादशक । त्रयएकादशका: अविर्नैत्यत्राद्यो दशक, द्वितीयात्त्यावेकादशकौ । तृतीयो नवक, इन्द्रस्यरूपमित्यत्र चतुर्थो द्वादशक. । त्रय एकादशका । आत्मन्नुपस्थइत्यत्र तृतीयो द्वादशक । अन्य एकादशका, अङ्गान्यात्मन्नित्यत्र द्वितीया द्वादशक । प्रथमो व्यूहेन तथा । अन्त्यावेकादशकौ । सरस्वती योन्यामित्यत्राद्यो दशक । त्रयएकादशका । तेज पशूनामित्यत्र प्रथमएकादशक । त्रयो द्वादशका । अत्र "जगतीभिर्जुहोति षोडशभिर्ऋग्भिर्जुहोतीति" श्रुतिबलाद्बहुभिरक्षरैरप्यूनाना जगतीमेव । न छन्दोऽन्तरत्वम् ॥ ३५ ॥

## क्षत्रस्य योनिर्द्विपदा गायत्र्यासन्दीदेवताका ॥ (१)

क्षत्रस्य योनिरिमतीय द्विपदा गायत्री । आसन्दी देवता यस्याः सा आसन्दीदेवता । "शेषाद्विभाषेति कप्" । वेद्यामध्ये आसन्द्या-

(१) याजिरित्यत्र नामिरात काण्वसङ्गात्मपाठ ॥

निधानीऽस्या विनियोग ॥

मा त्वा कृष्णाजिनम् ॥

मा त्वेत्यस्य यजुष. कृष्णाजिन दैवता । कृष्णाजिनस्यासयामास्तरणे विनियोग । प्राजापत्या गायत्री ॥

स्त्योकृक्षौ॥

मृत्या पाहि विद्योत्पादीत्यनयोर्द्वयोर्यजुषो ऋक्षौ दैवते पादयोरुकर्मापासने उभयोर्विनियोग । देव्यो बृहत्यो नियमादेत्यत्र तु प्राग्रुक्तम् ॥

अग्निर्नोर्मैपञ्येन लिङ्गोक्तदेवतानि त्रीणि ॥

अग्निनोर्मैपञ्येनेत्यादीनि त्रीणि लिङ्गोक्तदेवतानि । वसाप्रद्-सस्रेर्यजमानाभिषेके विनियुक्तानि । अग्नविमो. प्राजापत्याबृहती सरस्वत्यै करगायत्री । इन्द्रस्य करगायत्री ॥

कोऽसि प्राजापत्यागायत्री ॥

कोऽसि कतमोऽसीत्येषा प्रजापतिदैवता गायत्रीछन्दस्का । यजमानालम्भने विनियुक्ता । प्रथमो व्यूहेन सप्ताक्षर. । द्वितीय षडक्षर । तृतीयएकादशक । तनैयमुष्णिग्गर्भागायत्रीत्युच्यते । "षट् सप्तेकादशोष्णिग्गर्भेत्युक्ते" ॥

शिरो मे पञ्चर्च मिन्द्रशरीरावयवदेवताकम् ॥

इन्द्रस्य शरीरावयवा देवता यस्य तदिद शरीरावयवदेवताकं । तृतीया गायत्री । पञ्च पञ्चर्चे तृतीया बाहू मे बलमित्येषा गायत्रीछन्दस्का । पञ्च द्विती । सप्तक । पञ्चम्या महापङ्क्तिश्छन्दसा । अथ पञ्चर्चे नाभिर्मेचित्तमित्येषा पञ्चम्या महापङ्क्ति । पञ्चसाप्तम य युक्ता च । पञ्चाष्टाक्षरा । षड्दा सन्ति तनैयं महापङ्क्ति "प ट्टका वा महापङ्क्तिरित्युक्ते" पायुर्मे । भग , सौभाग्य । पञ्चमो

व्यूहः । अनुष्टुभोऽन्त्याः, अत्र पञ्चर्चे अस्याः शिरो मे, जिह्वा मे, पृष्ठीर्मे, इत्येता अनुष्टुभः । अस्य पञ्चर्चस्य यजमानकर्तृके यथालिङ्गं विभज्य विभज्याङ्गसंमर्शने विनियोगः ॥

प्रतिक्षत्रे वैश्वदेवम् ॥

प्रतिक्षत्रइत्येतद्यजुर्विश्वेदेवता । यजमानस्यासन्दीतः कृष्णाजिनेऽवरोहणे विनियुक्तं । अष्टापञ्चाशदक्षराणि । द्वौ व्यूहौ । तेनातिशक्करीछन्दः ॥

त्रया देवा दैवी पङ्क्तिस्त्र्यवसाना ॥

त्रया देवा इत्येतस्य दैवी देवता पङ्क्तिः त्र्यवसानयुक्ता च । देवस्य सवितु. व्यूहः । अष्टकाः पञ्चपदाः । तेन चत्वारिंशदक्षरा पङ्क्ति. । तर्यस्तिंशस्य सगराय्य वसायहस्य होमे विनियोगः ॥

प्रथमा द्वितीये वैश्वदेवमाशीर्लिङ्गम्, ॥

प्रथमाद्वितीयेरित्येतद्यजुर्विश्वदेवदेवतमाशीर्लिङ्गं आशिषां लिङ्गानि यस्मिन् तदाशीर्लिङ्गं पूर्वोक्तस्य यज्ञस्य होमे विनियुक्तं । अत्र अशीतिरक्षराणि एको व्यूहः । तेन प्रकृतिश्छन्दः, त्रया देवाइत्यादीनां सप्तदशानां पादानां शस्त्रमध्ये निविद्रूपे शसने विनियोगः ॥

लोमान्यनुष्टुब्लिङ्गोक्तदेवता ॥

लोमानि प्रयतिरित्येषा लिङ्गोक्ता देवता अनुष्टुप् । अत्र तृतीयः सप्तकश्चतुर्थो नवक. । लोमत्वङ्मांसमस्थिमज्जानोऽग्निलिङ्गोक्ता देवता. यजमानस्य यद्दर्षेयभक्षे विनियोगः । ३६ ॥

यद्देवास्तिस्रोऽग्निवायुसूर्यदेवत्याअनुष्टुभः कूष्माण्डी. ॥

यद्देवा,यदि दिवा, यदि आग्रदित्येतास्तिस्रऋचः क्रमेणाग्निवायुसूर्यदेवत्या अनुष्टुभः । कूष्माण्डीसञ्ज्ञकाश्च । गासरकुम्भस्नावने वि-

नियुक्ता', विश्वाम्भुवस्तु अंहमइति व्यूहः ॥

यद्ग्रामे लिङ्गोक्तदैवतम् ॥

यद्ग्रामेऽइत्येतत्पुरस्तादवयज्ञमसीत्यन्तं लिङ्गोक्तदैवतं । मासरकुम्भप्लावनएव विनियुक्त । एकाधिका आर्षी त्रिष्टुप् । यच्चायोऽपचन्यातृतीयं वारुणी गायत्र्यवसाना प्रथमे व्यूहः । मासरकुम्भप्लावनएव विनियोग ॥

अवभृथेति यज्ञदैवतम् ॥

द्वौ व्यूहौ । ब्राह्मीअनुष्टुप मासरकुंभमार्जने विनियोगः ॥

समुद्रे ते द्विपदा विराडापो ॥

समुद्रे ते तृतीयं विराट्द्विपदा आपः अप्यादेवता । मासरकुम्भमार्जन एव विनियुक्ता । दशाक्षरौ द्वौ पादौ । "दशाक्षराद्वि विराडिति श्रुतेः" अतएव विनियुक्ता ॥

द्रुपदादिवानुष्टुबापो ॥

द्रुपदादिवेति यजुरनुष्टुप्छन्दस्काऽब्दैवत्या । आपो देवताः, तेन द्व्यधिका । स्नानोपासने विनियोग ॥

उद्वयथं० सौर्यनुष्टुप्प्रस्कण्वस्य ॥

उद्वयतमित्येषा सूर्यदैवत्याऽनुष्टुप्प्रस्कण्वस्यार्षं प्रस्कण्वोऽस्याऋषिरित्यर्थ जलादुत्थाने विनियोग, द्वितीयव्यूहः ॥

अपोऽअद्याग्नेयी पङ्क्ति ॥(१)

अपोऽअद्यान्वचारिषमितीयमग्निदैवत्या पङ्क्तिछन्दस्का पञ्चपदा चत्वारिंशदक्षरा पङ्क्ति । आहवनीयोपस्थाने विनियोग ॥

एधोऽसि समिद्देवत्ये यजुषी ॥

एधोऽसि, समिदसीत्येते यजुषी समिद्दैवत्ये । एधोऽसीत्यस्य दैवो-

---

(१) ऋच ई पङ्क्तिरिति काण्वसर्वानुक्रमात् ॥

जगती समिदादाने विनियोगः। समिदसीत्यस्य समिदाधाने वि-
नियोग.। व्यूहेन सामीध्यिक्॥

समाववर्त्यनिरुक्ता गायत्री॥

समाववर्त्तीत्येषा अनिरुक्ता गायत्रीछन्दस्का। आज्याहुतिहोमे वि
नियुक्ता। अग्निदेवत्येति कर्कसंहिताभाष्ये॥

वैश्वानरज्योतिर्यजुः॥

वैश्वानरज्योतिरितीदं यजु, मन्त्रक् अस्य वैश्वानरो देवतेति क
ख्वभाष्ये स्वराड्गायत्री। पूर्वसूत्रोक्तहोमएव विनियोग.॥

अभ्यादधाम्याग्नेयमानुष्टुभं त्वमग्नेश्वतराश्विः॥

अभ्यादधामि समिधमित्येतदृचमनुष्टुप्छन्दस्कमग्निदेवत्यमाश्व
तराश्विर्ऋषिरपश्यत्। क्रमेण समिदभ्याधाने विनियोगः। यत्र इ
न्द्रयेति व्यूहः॥

अर्ध०शुनासीर्यनुष्टुप्॥

अर्ध०शुना नहरत्येषा सौरी सूर्यदेवत्याऽनुष्टुप्। सुरासंसर्जने वि
नियुक्ता। आद्यः अष्टकः। नेन हृद्यूना॥

सिञ्चन्ति परि सौत्रैन्द्री वाऽनुष्टुप्॥

सिञ्चन्ति परिषिञ्चन्तीत्येषा सौरी। ऐन्द्री वा। सूर्यइन्द्रो वा
अस्य देवतेत्यर्थः। अनुष्टुप्छन्दः। पूतायाः सुराया आदाने विनि-
योगः। अर्धांशयोर्व्यूहः॥

धानावन्तमैन्द्री गायत्री विश्वामित्रस्य॥

धानावन्तमित्येषा इन्द्रदेवत्या गायत्रीछन्दस्का। विश्वामित्रस्यार्षे
अस्या विश्वामित्रऋषिः। अध्याकर्माणि धानाहोमे विनियोग.॥

यद्दिन्द्राय बृहतीनृमेधपुरुमेधयोरध्वर्यो गाय-
त्री॥

ऐन्द्रीत्यनुवर्त्तते । बृहदिन्द्रायेत्येषा बृहती नृमेधपुरुषमेधयोरार्षं । नृमेधपुरुषमेधनामानो यस्या ऋषीइत्यर्थः । यस्या हि सोवास रायां सामगानं विहितं । अथ मामगायत्रीति प्रत्यक्षऐन्द्र्या बृहत्या गायतीति । अध्वर्यो गायत्री,अध्वर्योर्षद्रिरितिगायत्री । बृह्मण च योऽनुमन्त्रणे विनियुक्ता ॥ ३१ ॥

यो भूतानामात्मप्रवादा पङ्क्तिर्नारायणीया कौण्डिन्य स्य ॥

योभूतानामित्येषा पङ्क्तिरात्मप्रवादा नारायणीयकौण्डिन्यस्यार्षं नारायणीयस्य शिष्यो नारायणीयः स चासौ कौण्डिन्यनारायणीय कौण्डिन्यः सोऽस्या ऋषिरित्यर्थः । आत्मनः प्रवादो यस्यां सा चा त्मप्रवादा । यस्यां हि य परमात्मा सर्वभूतानां अधिपतिः इत्यादा त्मप्रवादोऽस्ति । ग्रहमार्षा महेन्द्रदेवता । चयस्त्रिग्रह्य वसाग्रहण ग्रहणे विनियोग । उपयामीति सानचिष्टुप् । एष ते योनिः प्राजा पत्याबृहती । उभयोर्मदेवता ॥

प्राणपा मे द्वे अनुष्टुबुपरिष्टाद्बृहत्यौ लिङ्गोक्तदेवते ॥

प्राणपा मे, अग्निनक्तस्यतीमेहे ऋचा यथाक्रममनुष्टुबुप.रष्टादबृहत्यौ लिङ्गोक्तदेवते च प्राणपामइत्यनुष्टुप् । अग्निनक्तस्त्येपरि ष्टादबृहती । अत्र व्यूहेन छन्द. पूर्ण, पादाक्षरनियमो नास्ति अ. त्रमार्षी ग्रहशेषां देवतालिङ्गोक्ता । स एवात्र स्तूयते यत. ॥

समिद्धऽइन्द्र एकादशाप्रीस्त्रिष्टुभऽआङ्गिरसः ॥

समिद्धऽइन्द्रउषसामनीकइत्याद्या एकादशऋचस्त्रिष्टुपछन्दस्का आप्रीसंज्ञका आंगिरसऋषिरपाग्रतपामा देवता आह ॥

इध्मस्तनूनपान्नराशंस,इडो बर्हिर्द्वारऽउषासानक्ता दैव्या होतारा तिस्रो, देवीस्त्वष्टावनस्पति, स्वाहाक्ृ

तदद्वल्येता आप्रीदेवताः ॥

इध्मादय एकादशसङ्ख्या यथाक्रममेतासां प्रसिद्धाऽन्त्यस्त्वाग्नी-
मां स्तोकानामिन्दुमित्यस्तानामाप्रीण देवताः । अत्र वक्तव्याः
प्रयतानं । व्यूहः, सुवीरा वीरं द्वादशकः । यच्छुभ्रं द्वादशकः ॥

आया तु सप्तत्रिष्टुभ ऐन्द्र्यः ॥

आयाह्विन्द्रेत्याद्याः सप्तर्चस्त्रिष्टुभ इन्द्रदेवत्याः, आद्या षडैन्द्र-
पशुवपापुरोडाशपशूनां याज्यापुरोनुवाक्यास्विम विनियुक्ताः । अत्र ।
आयाह्विन्द्र । व्यूह । मा नः समक । मान्दइन्द्रो हरिभि , आ याहि
व्यूह । यास्ताना मघवा वा व्यूहो । इन्द्रः सुपाना व्यूहः । सुवीर्यस्य । दो-
व्यूहो, यदि भद्रे ससतामा । इयाद्व्यूह ॥

आमन्द्रैर्बृहती ॥

चतुर्थी बृहती तृतीया द्वादशकस्त्वेव त्रिधा ॥

आयातु वामदेवः ॥

आयात्विन्द्र इत्यष्टा वामदेवस्तर्षिः ॥

त्रातारङ्गर्गः ॥

त्रातारमिन्द्रमित्यष्टा गर्गस्तर्षिः ॥

आमन्द्रैर्विश्वामित्रः ॥

आमन्द्रैरित्यष्टा विश्वामित्रस्तर्षिः ॥

एवेद्वसिष्ठ ॥

एवेदित्यष्टा वसिष्ठस्तर्षिः. इन्द्रोदेवता । वसिष्टास द्वौ व्यूहो, यूयं
पात । व्यूह ॥ ३८ ॥

अथ हौत्रं त्रिपद्यो ॥

अथानन्तरं त्रिपद्योहौत्रं कांतु कर्माध्यात इति शेष ॥

समिद्धोऽग्निराप्रीर्द्वादश विद्भिरग्निसरस्वतोन्द्र

देवत्या अनुष्टुभः ॥

समिद्धोऽअग्निरश्विनेत्याद्या द्वादशर्चः । आश्वीसरस्वत्य अनुष्टुभोऽश्विसरस्वतीन्द्रदेवत्याः विदर्भिऋषिरपश्यत् । इत्यादय एवासौ देवता इतिहरिस्वामी । "अनुष्टुभ आश्विनी भवन्तीति श्रुतेरनुष्टुभमाश्वीरित्युक्त." । त्रिपशोः प्रयाजयाज्यात्वेनासौ विनियोगः । मध्वार जाठंसि, अश्विना भारतीडा, स्वाहेन्द्रे सुतं मधु । वपु व्यूह ॥

अश्विना हविस्तिस्रोऽनुष्टुभएकैकाऽश्विसरस्वतीन्द्रदेवत्याः ॥

अश्विना हविरित्याद्यास्तिस्रोऽनुष्टुभः । एकैकाश्विसरस्वतीन्द्रदेवत्याः, तास्विन्द्रस्यापि प्रत्येकं तिसृष्वपि तिस्रो देवता द्रष्टव्यं, न तु यथासंख्येन, नमुचिर्वधिया भवन्त, त्रिपशुपशूनां याज्यापुरोनुवाक्यात्वेनासौ विनियोग ॥

यऽइन्द्रऽइन्द्रमवित्यवरुणदेवत्यास्तिस्रोऽनुष्टुभः ॥

यऽइन्द्रऽइन्द्रियं दधुरित्याद्यास्तिस्रऋचः प्रत्येकं इन्द्रसवितृवरुणदेवत्याः, अनुष्टुप्छन्दस्काश । अत्राप्येकैकाऽस्यानुवर्तते, त्रिपशोः पशुपुरोडाशानां याज्यापुरोनुवाक्यात्वेन विनियुक्ताः ॥

अश्विना गोभिस्तिस्रोऽनुष्टुभ. ॥(१)

अश्विना गोभिरिन्द्रियमित्याद्यास्तिस्रऋचोऽनुष्टुभः । अत्र एकैकाश्विसरस्वतीन्द्रदेवत्या इत्यनुवर्तते । हविषां याज्यात्वेन विनियुक्ताः । अश्वैर्निर्वीर्यमिति नियामक ॥

युवं पुत्रमिवानुष्टुप्त्रिष्टुभौ ॥

युवं सुरामं, पुत्रमिवेतीति च द्वे अनुष्टुप्त्रिष्टुप्छन्दस्के । अश्विसरस्वतीन्द्रदेवत्ये तदेवाप्यवित्यर्थं । ग्रहाणां याज्यापुरोनुवाक्यात्वेन

---

(१) गोभिरश्विसरस्वतीन्द्रदेवत्या. इति [illegible] अनुष्टुभ. ८८ ॥

विनियुक्ते। अनयोरार्षादिकं प्रागुक्तमेव। युवमनुष्टुप्पुरुषमिव, त्रिष्टुब-ग्निमरुत्वत्तीन्द्रदैवत्ये इति। तेन पुनरुक्तमिदं तत्सूत्रं इति केचित्-पठन्त्येव। तत्राधर्वं इन्द्रकर्म। इन्द्रावयुः। यस्त्वरामं। एषु व्यूहः॥

यस्मिन्नश्वासऽआग्नेय्यौ जगती त्रिष्टुभौ॥

यस्मिन्नश्वासोऽग्नावग्नेऽस्तीति द्वे ऋचौ अग्निदेवते। यथा क्रमं जगतीत्रिष्टुप्छन्दस्के। पशुस्विष्टकृतोयाज्या पुरोनुवाक्याविनियु-क्ते। यस्मिन्नश्वासऽइतियाज्या। अग्नाग्नेत्रिष्टुप्पुरोनुवाक्या, अग्ना-ग्नेति इत्यत्राब्दष्टौ व्यूहः॥

अश्विना तेजसैकादशर्चैर्ठ° यस्तम्॥

अश्विना। तेजसेत्यत्रभारभ्येकादशर्चं यस्तम्॥

गोमद्वृत्समदस्तृचमाश्विनं गायत्रम्॥

गोमदूषुणासत्ययत्तृचमश्विदेवत्यं गायत्रच्छन्दस्कं। गोमदिति अयः मन्त्राः, तेन पाद निवृदित्युक्तिः। "ऋषिरिश्वपादृषि। सा पादनि-वृदिति पिङ्गलोक्तेः"। व्यूहेन वा अयार्था पूरण कार्य, त्रिष्वावरि-णो व्यूहः॥

पावकानो मधुच्छन्दाः सारस्वतम्॥

तृच गायत्रमिति चानुवर्तते। पावका नः सरस्वतीत्येतत्तृचं सारस्वतदैवतं गायत्रच्छन्दस्कं मधुच्छन्दा ऋषिरपश्यत्। चेतन्तीति मन्त्रः। तेनैकोनाः॥

इन्द्रायाह्नीन्द्रं मधुच्छन्दा एव॥

तृच गायत्रमिति चानुवर्तते। इन्द्रायाहि चित्रभानो इत्यादिकं तृचं इन्द्रदैवतं गायत्रच्छन्दस्कं मधुच्छन्दाएवापश्यत्। ता इमे व्यूहः॥

अनुक्तमानुष्टुभमग्निसरस्वतीन्द्रदैवत्यम्॥

यदायानुक्तमनुक्तदैवतमनुक्तच्छन्दस्कं च मन्त्रजातं तदानुष्टुभमनुष्टु-

पुष्छन्दस्कमश्विसरस्वतीन्द्रदेवत्यं च । तथाग्नाविग्निना तेजसाऽग्निना पिबतामित्यृग्द्वयमेव । अत्रानयोः प्रस्तुतयोर्मन्त्रयोः शंसने क्रमेण विनियोगः । ग्रहणासाद्यायाज्यापुरोनुवाक्यात्वेन च । तत्राश्विभ्यां तेजसेत्यप्रथमोऽष्टकः, द्वितीयो नवकः, तृतीयो व्यूहेन सप्तकः । चतुर्थोऽष्टकः । जुषन्तां सौम्यं । व्यूहः ॥ ३८ ॥

इमं मे गायत्रीत्रिष्टुभौ वारुण्यौ शुनःशेपः ॥

इम मे वरुण, तत्त्वायामीतीमे द्वे ऋचौ यथाक्रमं गायत्रीत्रिष्टुप्छन्दस्के वरुणदेवते शुनःशेपऋषिरपश्यत् । एककपालस्य याज्यापुरोनुवाक्यात्वेन विनियुक्ते । त्वामवस्युः । व्यूहः । तत्त्वेत्यस्य ऋच्या द्विःप्रागुक्तमेव । तत्त्वा वारुणी त्रिष्टुप्षट्‌० शुनः शेप इति । किमिति पुनरुच्यते । सौत्रामण्युक्ते, राजसूयाश्विसरस्वत्यादिभिः शुनःशेपस्य बाधो माभूदित्येवमर्थं पुनरुपदेशः, अतएव वचनाभावे प्रागुक्तस्य ऋषेर्बाध एव भवतीति गम्यते ॥

त्वन्नस्त्रिष्टुभावाग्निवारुण्यौ वामदेवः ॥

त्वं नो अग्ने, स त्वं नो अग्न इतीमे ऋचौ अग्निवरुणदेवते त्रिष्टुप्छन्दस्के वामदेवऋषिरपश्यत् । अग्निवरुणयागे याज्यापुरोनुवाक्यात्वेन विनियोगोऽनयोः । त्वं नः, विद्वा देवांसीत्यनयोर्व्यूहः । स त्वमित्याद्यपादयोर्व्यूहः ॥

महीमूषु त्रिष्टवादित्या ॥

महीमूषुमातरमित्येषा त्रिष्टुप्छन्दस्का अदितिदेवत्या । आदित्यचरुयागे याज्यात्वेन विनियुक्ता ॥

सुत्रामाणं गयः प्लातः ॥

त्रिष्टुबादित्या इत्यनुवर्तते । सुत्रामाणमितीमां त्रिष्टुभं अदितिदेवत्यां । गयः प्लातऋषिरपश्यत् । आदित्यचरुयागे पुरोनुवाक्यैषा अत्राद्योदात्तः ॥

सुनावं नौः स्वर्ग्या गायत्री ॥

सुनावमित्यस्याः स्वर्ग्या स्वर्गसम्बन्धिनी नौर्देवता । गायत्रीछन्दः । आत्रेयोऽवस्युर्ऋषिः । नावा आरोहणे विनियोगः ॥

आ नो मैत्रावरुणीं गायत्रीं विश्वामित्रः ॥

आ नो मित्रावरुणेतीमां मित्रावरुणदेवत्यां गायत्रीछन्दस्कां विश्वामित्रोऽपश्यत् । पयस्या यागे पुरोऽनुवाक्या । पादः सानुस्वारेणैकोना निचृत् ॥

प्र बाहवा वसिष्ठस्त्रिष्टुप् ॥

मैत्रावरुणीमित्यनुवर्तते प्र बाहवेत्येतां त्रिष्टुभं मित्रावरुणदेवत्यां वसिष्ठोऽपश्यत् पयस्या यागे याज्येयं । शं नो भवन्तु वाजिन इति वाजियागे याज्यानुवाक्ये । तयोरुक्तं त्वादिनायुक्तम् ॥

समिद्धोऽग्निरेकादशाप्रमानुष्टुभं स्वस्त्यात्रेयस्यार्षं वयोधा इन्द्रो देवता ॥(१)

समिद्धोऽग्निः समिधेत्येतदेकादशर्चमाप्रीसम्बन्धि अनुष्टुप्छन्दस्कं स्वस्त्यात्रेयस्यार्षं । स्वस्त्यात्रेयसञ्ज्ञोऽस्यक्षर्षिरित्यर्थः । इन्द्रो वयोधा अस्य देवता । वयोधसे पशौ प्रयाजानां याज्या एताः यथार्थमुक्तं । तथान्यत्र इध्मस्तनूनपादित्यादय एवाप्रीणां देवताः । ऐन्द्रपशौ तथैवोक्तत्वात् । वयोधा इन्द्रो देवतेत्ययं सुप्रमादपाठ इव दृश्यते । अन्यदेवतानिर्देशैरसङ्गतत्वात् । अत्र सुसमिद्धः । न्यग्दिर्गाः । इडाभिः । सोमो । स्तीर्णं बर्हिः । विश्वे देवाः । स्वाहा यज्ञं । एतेषु व्यूहः । पंक्तिछन्दाः सप्तमः । बृहत्पथ्या दशमः । एकाधिकत्वाद्भुरिक् ॥

---

(१) अत्र सूत्रे स्वस्त्यात्रेयपदादग्रे स्वस्त्यात्रेयस्यार्षं वयोधा इन्द्रो देवता एतत्पर्यन्तं कण्वसर्वानुक्रमे नास्ति छिद्रोक्तदेवतनिरूपक पदमस्तीति बोध्यम् ॥

अश्विनो छागस्य हविषः । अत्र चतुर्दशाधिकं शतमक्षराणि । सरस्वती मेषस्य, अत्र सप्तदशाधिकं शतमक्षराणि । इन्द्रमृषभस्य । अत्र चतुर्दशाधिकं शतमक्षराणि ॥

वनस्पतिमभियूपः ॥

होता यक्षद्वनस्पतिमभीत्यस्य यूपो देवता, वनस्पतियागे यो यूपोऽयं । वनस्पतिमभि । अत्र द्वाभ्यामधिकं शतद्वयमक्षराणि ॥

अग्निं स्विष्टकृतः स्विष्टकृदग्निः ॥

होता यक्षदग्निं स्विष्टकृतमित्यस्य स्विष्टकृदग्निर्देवता । अत्र शतान्यधिकं शतमक्षराणि । स्विष्टकृद्यागे योऽयं । एतेषामश्विनो छागस्येत्यादीनां स्विष्टकृत्पर्यन्तानां छन्दो नास्ति, परिमाणस्य छन्दसोऽभावात् । तदुक्तं यजुषामनियताक्षरत्वादेषां छन्दो न विद्यत इति ॥

देवं बर्हिरेकादशानुयाजप्रैषा अग्निसरस्वतीन्द्रदेवत्याः ॥

देवंबर्हिः सरस्वतीत्याद्या एकादशानुयाजप्रैषा अग्निसरस्वतीन्द्रदेवत्याः । अत्रापि पाठक्रम एव, बर्हिरादयो देवता नाशङ्कनीया इति हरिस्वामिनः । देवं बर्हिः । आर्षीत्रिष्टुप् । देवोद्वारः । द्वौ व्यूहौ । आर्षीत्रिष्टुप् । देवी उषासा आर्षीत्रिष्टुप् । देवीऊर्जाहुती । अतिजगती । देवा दैव्यानां । एकाधिका अतिजगती । देवीस्तिस्रः । आर्षीत्रिष्टुप् । देवऽइन्द्रः । द्वौ व्यूहौ अतिशक्वरी । देवो देवैः । व्यूहः । अत्यष्टिः । देवं बर्हिः । अतिशक्वरी । देवोऽग्निः अत्रैकादशाधिकं शतमक्षराणि मन्त्र तेन छन्दो नास्ति ॥

अग्निमद्य सूक्तवाकप्रैषो लिङ्गोक्तदेवतो लिङ्गोक्तदेवतः ॥

अग्निमद्यहोतारमित्ययं सूक्तवाक्य प्रैषो लिङ्गोक्ताग्निसरक्त्वादिदैवतः, अग्निमद्यपङ्क्तिः। सूपस्थाः। धृतिः। त्वामद्य। एकाधिकाकृतिः। अनियताक्षरो वाऽयं समस्तः प्रैषः। तेन छन्दसोऽभावः। अनियताक्षरत्वात्। द्विरभ्यासोऽध्यायसमाप्तिज्ञापनार्थः॥ ४०॥

इतिविदर्भविलासराट्छ्पतिविंरक्तकुलमहायाज्ञिकश्रीप्रजापतिसुतेन याज्ञिकश्रीदेवकृतं सर्वानुक्रमविकाभ्याख्याने द्वितीयोऽध्यायः समाप्तः॥

## अथाश्वमेधः

अथानन्तरमश्वमेधः अभिधीयतइति शेषः॥

## चतुरोऽध्यायान्प्रजापतिरपश्यत्॥

तेजोऽसि सौवर्णनिष्कं। तेजोऽसि शुक्रमित्यस्य सौवर्ण निष्कदेवत। वाचने विनियोगः। प्राजापत्याऽनुष्टुप्। देवस्य त्वेत्यस्य साम्नजगतीछन्दः। सूहय। रशनादाने विनियोगः॥

## इमामगृभ्णंस्त्वस्त्रो यज्ञपुरुषस्त्रिष्टुभम्॥

इमामगृभ्णन्नितीमामृच त्रिष्टुभं संवत्सरो यज्ञपुरुषऋषिरपश्यत् रशनादैवत्येयमितिकात्यभाष्ये। अग्र तृतीयो दशकः। अभिधाः सीत्यस्यपादौ त्रिष्टुप्छन्दः अभिधा, लिङ्गोक्तानि। अश्वबन्धने विनियोगः। अस्याश्वो देवता। ब्रह्मस्यवंभस्याभीत्यस्य-प्राजापत्याबृहती। ब्रह्मादेवता। ब्रह्मामन्त्रणे विनियोगः। अश्वम्याग। व्यूहेन अश्वगायत्री अध्वर्युर्देवता। अश्वबन्धने विनियोगः। प्रजापतये। यजुस्त्रिष्टुप्। पजापतिर्देवता। इन्द्राग्निभ्यां। यजुःपङ्क्तिः। इन्द्राग्नीदेवता। वायवे त्वा। यजुर्बृहती। वायुर्देवता। विश्वेभ्यस्त्वा। सर्वेभ्यस्त्वा यजुर्जगत्यौ। विश्वेदेवा देवता सर्वेदेवादेवता। क्रमेण। प्राजापतये त्वेत्यादीना प्रोक्षणे विनियोगः। प्रजापते एतां

आद्या मेध तिथि. ॥

अग्निम्प्रथमचं माद्या हिरण्यपाणिरित्येता मेधातिथिऋषिरपश्यत्॥

अग्निरस्तोमेनाग्नेयं तृचं गायत्रं० सुतभरो विश्वामित्रो विरूपो यथासङ्ख्यम् ॥

अग्निं स्तोमेनेत्यादिकं तृचमग्निदेवतं गायत्रीछन्दस्कं । अस्य तृचस्य यथासंख्य सुतभरो विश्वामित्रो विरूप इत्येते ऋषयः । तत्राग्निंस्तोमेनेतीमां सुतभरऋषिरपश्यत् । अग्निं दूतमितीमां विरूपोऽपश्यदितियथासङ्ख्यमर्थः ॥

अजीजनो हि पवमानी कृतिं पिपीलिकमध्यामनुष्टुभं त्र्यरुणत्रसदस्यू ॥

अजीजनो हि पवमानेतीमामृचं पावमानीमनुष्टुब् पिपीलिकमध्याकृत्यनुष्टुपछन्दस्कां त्र्यरुणत्रसदस्यू ऋषी अपश्यतो यस्याः प्रथमतृतीयौ पादौ द्वादशकौ द्वितीयोऽष्टक सा पिपीलिकमध्याकृतिरनुष्टुप् । "मध्ये जागतावष्टकाश्च कृतिर्मध्ये चेदष्टकः । पिपीलिकमध्येति वचनात्" । अत्र पूर्वसूत्राकृतिपदानुवर्तते । तस्यापमनुष्टुप् पिपीलिकमध्याकृतिरित्येषा सञ्ज्ञा । पावयति पवित्रीकरोतीति पावमानीं तया ॥

विभूरश्वदैवतम् ॥

विभूर्मात्रा इत्येतदश्वदैवत । यजुरस्य दक्षिणे कर्णे जपे विनियोगः । अतिजगतीछन्द ॥

देवा दैवम् ॥ '

देवा यागापालाइत्येतद्दैव । देवदैवतं दक्षिणामादेशे विनियुक्तं । ऋगुष्णिक ॥

इहरन्ति रात्रयाणि चत्वारि ॥

इहरन्तीत्यादीनि चत्वारि यजूंष्यग्निदेवत्यानि । धृतिहोमे विनियुक्तानि । प्रथमे इहरतिः स्वाहा । यजुर्गायत्री । इहरमतां स्वाहा यजुरुष्णिक् । इह धृतिः स्वाहा । यजुर्गायत्री, इह स्वधृतिः स्वाहा । यजुरुष्णिक् ॥

## कायौदृग्रभणानि लिङ्गोक्तानि ॥

कायस्वाहेत्यादीन्यौदृग्रभणमन्त्राणि लिङ्गोक्तदेवतानि औदृग्रभणहोमे विनियुक्तानि । छन्दांसि तु प्रागुक्तानि ॥

## श्रात्रेन्नं लिङ्गोक्तान्यध्यायात् ॥

श्रात्रन्नमित्यादीन्यध्यायपर्यन्तानि लिङ्गोक्तदेवतान्येव । श्रात्रन्नमित्यस्य अपि विनियोगः । सप्तषड्धिक शतमन्त्राणि तेन द्व्यधिका उत्कृतिः । प्राणाय स्वाहेत्यादीनांसर्वरात्रहोमे एवं छन्दांसि प्रागुक्तप्रकारेण कल्पनीयानि ॥ १ ॥

## प्रजापतये प्राजापत्यम् ॥

प्रजापतये त्वा जुष्टमित्येतत्प्रजापतिदेवतं । एकाधिकाऋग्गायत्री । हिरण्यगर्भइत्यस्य ऋष्यादिकं प्रागुक्तम् । महिम्नो ग्रहणे तस्य विनियोगोऽस्य च । एषतइत्यस्य । यजुस्त्रिष्टुप् । सादने विनियोगः ॥

## यस्ते दैवम् ॥

यस्ते हंसंवत्सरइत्येतद्दैवं । देवदेवत्यं । होमे विनियुक्तं द्व्यधिका शक्वरी । व्यूहाभ्यां धतिशक्वरी वा ॥

## यःप्राणतस्त्रिष्टुप्कायी हिरण्यगर्भः ॥

यः प्राणतो निमिषतइतीयं त्रिष्टुप्छन्दस्का कायी । कोदेवता यस्याः सा कायी । हिरण्यगर्भस्य ऋषेः आर्षं । हिरण्यगर्भोऽस्याऋषिरित्यर्थः । तृतीयो द्वादशकः । उत्तरस्य महिम्नो ग्रहणेऽस्या विनियो

ग'। अत्रापि प्रजापतये प्राजापत्य। सोपयामस्य एकाधिका बृहत्यायत्रीछन्द। एष तदति यजुर्जगती, यस्ते रात्री त्र्यधिकाप्रतिष्ठा वा। व्यूहाभ्यामष्टिर्वा॥

## युञ्जन्ति मधुच्छन्दा आदित्यदैवत्यां गायत्रीम्॥

युञ्जन्ति ब्रध्नमितीमामादित्यदैवतां गायत्रीं मधुच्छन्दाऋषिरपश्यत्। अश्वयोजने विनियोगोऽस्याः॥

## युञ्जन्त्यस्याश्वस्तुति.॥

युञ्जन्त्यस्य काम्येतीयमश्वस्तुति। इयमपि गायत्री आद्यः पादः षट्कः। तत्र व्यूहो। पूर्वसूत्राद्गायत्रीत्यनुवर्तते। इतराश्वयोजने विनियोगोऽस्याः॥

## यद्वातो बृहती॥

अश्वस्तुतिरिति वर्तते। यद्वातो अपस्त्यस्या बृहतीछन्दः। व्यूहेन छन्द पूरण, वाचनेऽस्या विनियोग॥

## वसवस्त्वा लिङ्गोक्तानि॥

वसवस्त्वांजन्त्वित्याद्योनि लिङ्गोक्तदेवतानि। अश्वाञ्जने विनियुक्तानि। वसवस्त्वाऽऽसुर्यनुष्टुप, रुद्रास्त्वा यजुस्त्रिष्टुप। आदित्यास्त्वा। आसुर्यनुष्टुप,। अश्वस्य केसरपुच्छेषु शिरोग्रीवापुच्छरोमसु क्रमेण पत्नीना सौवर्णमणिप्रवपणे विनियोगः॥

## लाजीश्चन्द्रदेवत्याम्॥

लाजीश्छाचीश्चित्येतदश्वदैवत,व्यूह, यजुबृहती वा अश्वाय राजिहुतशेषसमर्पणे विनियोग॥

## कः स्विद्वतस्रोऽनुष्टुभः प्रश्नप्रतिप्रश्नभूता ब्रह्मोद्ये होतुर्ब्रह्मणश्च॥

ब्रह्मोद्यसज्ञे हि कर्मणि होतुर्ब्रह्मणश्च प्रश्नप्रतिप्रश्नभूताः।

किंत्वाश्वमं, चौरासीदित्यनयोर्व्यूहः ॥'

वायुष्ट्वा लिङ्गोक्तानि ॥

वायुष्ट्वेत्यादीनि लिङ्गोक्तानि । अग्न्यादिदेवतानीत्यर्थः । वायुरादिदेवतानि वा । वायुष्ट्वा व्यूहेन द्व्यनुष्टुभौ । एष स्य राथ्य आसुरीगायत्री । वृष्णा अप प्राजापत्यागायत्री । नमोऽग्नये दैवीबृहती यजमानेन एषा विनियोगः ॥

सऽँ०शितस्त्रिस्रोऽश्वदेवत्या अनुष्टुब्विराड्त्रिष्टुभः ॥

सऽँ०शित इति रश्मिनेत्याद्यास्तिस्रोऽनुष्टुभोऽश्वदेवत्या, एषामनुष्टुब्विराड्त्रिष्टुभो भवन्ति । अश्वस्यैवानेन विनियुक्ताः । अमुं षड्भुजाऽद्रिति व्यूहः । संशितो रश्मिनेति अनुष्टुप् । स्वग वाजिनिति विराट् । दशकाक्षरावविराडित्येतल्लक्षणयुक्तत्वात् । न वाइति त्रिष्टुप् । अत्राद्यतो द्वादशकौ तेन द्व्यधिका ॥

अग्निः पशुरास्त्वानि त्रीणि ॥

अग्निः पशुरित्यादीनि त्रीणि यजूंष्यश्वदेवत्यानि । अश्वोपग्रहणे विनियुक्तानि । आर्षीपङ्क्ति, प्राणायेत्यादानामुक्त । यत्र सज्ञप्तो परिप्रश्नयोर्होमानन्तरमाज्याहुतिमयहोमे विनियोगः ॥

अम्बेऽनुष्टुबम्बस्तुतिः ॥

अम्बे ऽम्बिके इतीयमनुष्टुप्छन्दस्का अम्बस्तुतिः । अत एवास्याः स्तुविदेवता । अत्र व्यूहः । पत्नीना यावने विनियोगः ॥

गणाना त्वा चत्वारि लिङ्गोक्तानि ॥

गणाना त्वा गणपतिमित्यादीनि चत्वारि यजूंषि लिङ्गोक्तदेवतानि पञ्चाप्राजापत्यानुष्टुप् । बगाणामपि । वसो ममेति त्रयाणामपि शेषो द्विव । पत्नीनामश्वपरिगमनेषु विनियोगः क्रमेण । आहमजानि सर्वा पङ्क्तिः । महिषीयश्वसमीपे शयने विनियोगः । स्वर्गे लोके

प्राजापत्या गायत्री । अश्वीशासेनाश्वमहिष्योरधिवासेनाच्छादने वि-
नियोग । वृषा वाजीत्यस्य यजुर्जगतीच्छन्द । अश्वोदेवता । म
हिष्या अश्वशिश्नस्योपस्थे करणे विनियोगः ॥ २ ॥

उत्सक्थ्या गायत्र्यान्त्यौ ॥(१)

उत्सक्थ्या अवेतीयमश्वदेवता गायत्रीछन्दस्का अन्त्यौ नरक-
यजमानस्याश्वाभिक्रमे विनियुक्ता ॥

एकादशर्चमानुष्टुभम् ॥

द्वितीया त्वपरिष्टाद्बृहत्यध्वर्य्वादीनां कुमार्यादि-
भिरश्लीलभाषणान्ता एव देवता ॥

यकासकौ शकुन्तिकेत्यादि दशर्चमनुष्टुप्छन्दस्कं तत्र दशर्चे द्वि-
तीया सा, यकासकौ शकुन्तिकेत्येषा उपरिष्टाद्बृहती पदार्थं
शद्वत्त्वात्. अन्या अनुष्टुभ । कीदृशं दशर्चं । अध्वर्य्वादी-
नां कुमार्यादिभिः सहाश्लीलभाषणं । अश्लील ग्राम्य । स्त्रीपुरुष
सम्भोगकालीनयोनिशिश्नादिकव्यापारादि भाष्यते निर्लज्जं प्रकटी क्रि-
यते येन दशर्चेन तत्तथा । अनेन हि दशर्चेनाध्वर्युब्रह्मोद्गातृहोतृ-
क्षत्तारः, यजमानकुमारीपत्नीभि सह एव विपरीतं सञ्चारं कुर्व-
न्ति ता एव देवता, अस्य दशर्चस्य ता अध्वर्युकुमार्यादय एव ता दे-
वता । यकासकौ अस्य तृतीय साम । तिस्रैवाश्वा । दध्यञ्चा व्यू-
ह । शूद्रा यत् । सप्तक ॥

दधिक्राव्णो दधिक्रावा वामदेव्य सुरभिमतान-
नुष्टुभमाश्वीम् ॥

दधिक्राव्णो अकारिषमिमां सुरभिमतीं सुरभिशब्दयुक्तामनु-
ष्टुभं अश्वदैवत्यां वामदेवपुत्रो दधिक्रावापश्यत् । अध्वर्य्वादी-

(१) आरण्यक पुस्तकपाठ ॥

नामुच्चारणे विनियोगः । अस्याः सुरभिमतीत्येवसज्ञा ॥

## गायत्री पड्चमाम्नम् ॥(१)

गायत्रीत्रिष्टुबित्येतत्पड्चमाम्नं अश्वदेवतं । तिसृणां पत्नीनाम-श्वशरीरे सूचीभिर्यथाकल्पनं विनियुक्तं । उष्णिगाद्यायतस्रोऽनुष्टुभो-न्त्या त्रिष्टुप् । अस्मिन्दशर्चे आद्या गायत्री त्रिष्टुबित्येषा उष्णिक् । तत् परायतस्रोऽनुष्टुभ, द्विपदायाः महानाम्न्यः । नार्यस्ते, रजता हरि-णीरित्येता', अन्त्या कुविदङ्गेत्यषा त्रिष्टुप् । अत्र सूचीभि' । महानाम्न्यः । मैत्री: । नार्यस्ते, देवानां । एतेषु व्यूहः । यथादात्तीति व्यूहेन दशक. ॥

## कस्त्वापड्चमाम्नम् ॥

कस्त्वाच्छ्यतीत्येतत्पड्चमाम्नदेवतं । अश्वविशासने विनियुक्तम् ॥

## आद्या गायत्री ॥

पश्चानुष्टुभ· अस्मिन्पड्चे आद्या कस्त्वेत्येषा गायत्री, ऋतवस्ते, अ-र्धमासाः, दैव्याऽध्वर्यव., कोष्ठे । यन्ते, इत्येताः पञ्चऋचोऽनुष्टुभः । कस्त्वेति नवकः तेनैकाधिका । ऋतवस्ते अत्र प्रथमो नवकः । अ-न्त्यः सप्तकः । दैव्याः प्रथमे व्यूह. । तृतीये सप्त । यन्ते । द्वितीये द्वौ व्यूह्यौ । तृतीये चतुर्थे चैक: ॥

## कः स्विदष्टादशर्चं ब्रह्मोद्यं॰ होत्रादीनां प्रश्नप्रति-प्रश्नभूतं,आद्यास्तस्रोऽनुष्टुभ. का स्विदाद्यास्तस्त्रान्या दश त्रिष्टुभः ॥

अस्मिन्दशर्चे आद्यायतस्रोऽनुष्टुभः । क. स्विदेकाकी, सूर्य एका-की । किंस्विद्धिमस्य भेषजम् । भूमिमावपनमित्येता । तथा । का स्विद्

(१) उष्णिगाद्या चतस्रोऽनुष्टुभोऽन्त्या त्रिष्टुप् । इत्यधिक. काण्वसर्वानुक्रमे पाठः ॥

सीत्। यौरासीत्। काऽस्वित्, अजारे इत्येतायनयस्त्यानुष्टुभ। अ-न्त्याक्षरत्वगष्टकव्यतिरिक्ता दश ऋचोऽनुष्टुभ। ताग, पृच्छामि त्वा चितये। अपि तेषु। कैष्वन्त, पञ्चस्वन्त, कत्यस्य। वस्य। कोऽस्य-स्य। वेदाहं। पृच्छामि त्वा, इयं वेदिरित्येता। अत्र किम्वावपनं, येषु विष्णुः। अपि तेषु। कैष्वन्तः। कान्यन्त'। एतेषु व्यूहः। किं स्वि-त्। द्वौ व्यूहौ। मान्यन्त। नमाययर। अजारे। कत्यस्य। कोऽस्या-यां, कः सूर्यस्य दारगत। को वेद इमकः। पृच्छामि वाच। अयं यज्ञ। कृष्णाऽय। एतेषु व्यूह ॥

## सुभूरनुष्टुल्लिङ्गोक्तदेवता॥

सभूः स्वयम्भूरित्येयमनुष्टुबालङ्गोक्तदेवता। पूर्वस्य महिम्न पुरोऽनुवाक्य। उत्तरमहिम्नः याज्या च। द्वितीये व्यूह, लिङ्गाक्तोऽप प्रजापतिर्देवता ॥

## होता यक्षत्प्राजापत्यः प्रैषः ॥

होता यक्षत्प्रजापतिमित्ययं प्रजापतिदेवत',महिम्न प्रैष। द्व्यधिका आर्षीगायत्री। व्यूहेन ऋग्वृहती वा॥

## प्रजापते हिरण्यगर्भः प्राजापत्यां त्रिष्टुभम् ॥

प्रजापते न त्वदितीमामृच प्रजापतिदेवतां त्रिष्टुभं हिरण्यगर्भ ऋषिरपश्यत्। इय पूर्वस्य महिम्न याज्या। उत्तरस्य पुराऽनुवाक्या च। अयाद्याध्यायोव्यूह ॥ ३॥

## अम्भस्तूपरद्रूत्याऽयः पञ्चोऽध्यायेनोक्ता देवता वा पर्यङ्ग्या ॥

अम्भस्तूपरत्यनेनाध्यायेनाम्भस्तूपरादय पञ्चदशपर्याया पर्यङ्ग्य सज्ञा पशव प्राप्ता देवता वा। वा चार्थे,तेषामग्न्यादीना पर्यङ्गाया या देवताग्न्याजापत्यग्न्यादय उक्ता। अग्न्यादय पञ्चदशपशव प

र्यग्न्यादयस्त्वप्यन्ते ॥ "एताः पञ्चदश वा एते पञ्चदश पर्यग्न्याः पशवो भवन्तीति" श्रुतात् ॥

तथा रोहितादयो गुणयुक्ताः ॥

पशवस्तूपरा इति चानुवर्त्तते । तथा गुणयुक्ता, रोहितो धूम्ररोहि-त इत्यादीनां रक्तत्वादिगुणवन्तः पशवस्ते देवतार्थाः ॥

आरण्याश्च कपिञ्जलादय आऽध्यायात् ॥

चकारेण पशवो देवतार्थाः कल्प्यन्ते । वसन्ताय कपिञ्जला-निलेवमादिना, आरण्या अरण्ये भवाः कपिञ्जलादिपशवस्तद्देवता-र्थाः, आऽध्यायादध्यायसमाप्तिं यावत् ॥

शादन्दद्भिरित्यादित्वगित्येतदन्तं द्रव्यदैवतमुक्तम् ॥

शादं दद्भिरित्येतदारभ्य त्वगित्येतदन्तं पृथिवीं त्वचेत्येतत्पर्यन्तं द्रव्यदैवतमुक्तं । द्रव्याणि च देवताश्च द्रव्यदैवतम् ॥

अश्वस्तूपरो ब्राह्मणोऽध्यायः ॥

अश्वस्तूपर इत्ययमध्यायो ब्राह्मणरूपः । द्रव्यदेवतसंयोगविधाय-कत्वात् न तु मन्त्ररूप इत्यर्थः ॥

शादन्दद्भिस्त्वचान्तश्च ॥

पृथिवीं त्वचेत्येतत्पर्यन्तः शादन्दद्भिरित्ययमप्यध्यायो विधायको ब्रा-ह्मणमेव । न मन्त्रः ॥

जुम्बकाय वारुणीं द्विपदां मुण्डिभऔदन्यः

जुम्बकाय स्वाहेतीमां वरुणदेवत्यां द्विपदां औदन्य उदन्यपुत्रो मु-ण्डिभऋषिरपश्यत् । द्वे पदे यस्याः सा द्विपदा, अस्या गतस्य पिङ्ग-लखलतिविक्लिधशुक्लस्य मूर्द्धनि होमे विनियोगः । यजुर्गा-यत्री । अस्या एव विनियोगमारभ्याह ॥

एषा चावभृथेऽन्तर्जले ॥

जुंरकाय स्वाहेत्येषा द्विपदा त्वर्जले उदकमध्ये जप्या सती अघ-नाम्नी पापनाशनी । तथा च हारीतः । जुम्बका नाम गायत्री वेदे वाजसनेयके, अन्तर्जले निमज्जन् यो ब्रह्महत्यां व्यपोहतीति । हिरण्य-गर्भो, य आत्मद इत्यनयोरार्षादि मानुक्तं । अतः प्रभृति प्राजापत्यपशू-नामश्वादीनामेता याज्यानुवाक्या इति संहिताभाष्ये ॥

यस्येमे काव्यौ त्रिष्टुभौ हिरण्यगर्भः प्राजापत्य ऋषि-रपश्यत् ॥

यस्येमे । यस्येमा, यस्य छाया, एतेषु व्यूह ॥

आ नो दशर्चं जागतं वैश्वदेवं गोतमः ॥

आ नो भद्रा इत्यादि दशर्चं जगतीछन्दस्कं विश्वेदेवदेवतं गोतम ऋषिरपश्यत । जागतमित्यस्यापवादमाह ॥

स्वस्ति नो विराट्स्थाना ॥

स्वस्ति न इन्द्र इतीयमृक् विराट्स्थाना । न जगती गवयी वैराज त्रैष्टुभवेत्येतल्लक्षणयुक्ता । पुनरपि जागतमित्यस्यापवादमाह ॥

भद्रं कर्णेभिस्तृचं त्रैष्टुभम् ।

भद्रं कर्णेभिरित्येतत्तृच त्रिष्टुप्छन्दस्कं । न जागतं । अथ भद्र व्यासएकादशक । तन्मा ता । व्यूहेनैकादशक । तदश्विना व्यूह । रक्षिता पायु । व्यूह । स्वस्तिनो बृहस्पति । व्यूहेन त्रैष्टुभ । भद्र पश्येम । व्यूह । आ नो भद्रा इत्याद्या वैश्वदेवपशुवपापुरोडाशपशू-ना याज्यानुवाक्या इति संहिताभाष्ये ॥

मा नोऽश्वस्तोमीयं दीर्घतमास्त्रैष्टुभं (१) द्वाविंशं शत-र्चमश्वस्तुतिः ॥

---

(१) द्वाविंशतिरग्नौ पाठश्चाभति काण्वसर्वानुक्रमपाठ ॥

म ते। यजुस्त्रिष्टुप्॥

वैश्वानरस्य त्रिष्टुभं कुत्सः॥ (१)

वैश्वानरस्य सुमताविस्येतामृचं वैश्वानरदेवतां त्रिष्टुभं कुत्सऋषिरपश्यत्। अनायांत्ययोर्व्यूहः। यजुषोः पूर्वसूत्रवत्॥

अग्निर्ऋषिराग्नेयीं गायत्रीं वसिष्ठभरद्वाजौ॥

अग्निर्ऋषिरितीमामृचं अग्निदेवतां गायत्रीं वसिष्ठभरद्वाजावृषी अपश्यताम्। यजुषोः प्राग्वत्॥

महाँऽइन्द्रो माहेन्द्रीं वसिष्ठः॥

गायत्रीमित्यनुवर्त्तते। महाँ इन्द्रो वज्रहस्त इतीमामृचं महेन्द्रदेवतां। गायत्रीछन्दस्कां वसिष्ठऋषिरपश्यत्। यजुषो प्राग्वत्॥

तं वऽऐन्द्रीं पथ्याबृहतीं नोधागोतमः॥

तं वो दस्ममितीमामृचं इन्द्रदेवत्यां पथ्याबृहतीं। नोधागोतमोऽपश्यत्। जपस्वाध्यायादिषु विनियोगः॥

यद्वाहिष्ठं वसूयव आग्नेयीमनुष्टुभम्॥

यद्वाहिष्ठमितीमामृचमग्निदेवत्यामनुष्टुभं वसूयवऋषयोऽपश्यन्। अन्त्ययोर्व्यूहः॥

एहि भरद्वाजो गायत्रीम्॥

आग्नेयीमित्यनुवर्त्तते। एह्यू षु ब्रवाणि त इतीमामृचं गायत्रीछन्दस्कं भरद्वाजऋषिरपश्यत्। एह्यू षु व्यूहः॥

ऋतवस्ते बृहती॥

आग्नेयीत्यनुवर्त्तते। ऋतवस्ते यज्ञमितीमामृचमग्निदेवत्यां बृह-

---

(१) मरुत्वान्माहत्येन्द्री त्रिष्टुबिति काण्वसर्वानुक्रमेऽधिकः पाठः। एतत्सूत्रमि महाँ इन्द्रस्ततोऽग्निर्ऋषिरिति पूर्वापरीभावेन सूत्रे वोदितव्ये काण्वसर्वानुक्रमे। एतदग्रे सूत्रषट्कं काण्वसर्वानुक्रमे नास्तीति बोध्यम्॥

तीछन्दस्का नवकाष्टकैकादशाष्टिनो विषमपदेत्येषा इयं बृहती, अत्र तु प्रथमः पादो दशकः । तेनैकाधिका ॥

उपह्वरे वत्सः ॥

उपह्वरे गिरीणामितीमामृचं वत्सऋषिरपश्यत् । अस्याः सोमोदेवतेति संहिताभाष्ये । गायत्रीछन्द । अनुक्तानां गायत्रमितिवक्ष्यमाणसूत्रात् । अनयोर्विनियोगः ॥ ६ ॥

उग्रा ते गायत्रं तृचं सौम्यमाप्सहीयवः ॥

उग्रा ते जातं । स न इन्द्राय । एना विश्वानीत्येतत्तृचं सोमदैवतं गायत्रीछन्दस्कं आप्सहीयवऋषिरपश्यत् । दिवि सत् । वरुथय एनां । द्युम्नानि । एषु व्यूहः । द्युम्नानीत्यत्र नाशब्दस्याभ्यासेन पूरणं । इति छन्दोग्रन्थे ॥

अनुवीरैर्मुद्गलो यज्ञपुरुषस्त्रिष्टुभम् ॥ (१)

अनुवीरैरित्येतामृचं त्रिष्टुप्छन्दस्कां मुद्गलो यज्ञपुरुषऋषिरपश्यत् । आशीरियं देवादेवताः । द्वितीयो दशकः । तृतीयो द्वादशकः ॥

अग्ने पत्नीर्मेधातिथिराग्नेयीं गायत्रीम् ॥

अग्ने पत्नीरितीमामृचं अग्निदेवतां गायत्रीं मेधातिथिरपश्यत् । अग्ने पत्नीरित्याद्या पञ्चाग्निर्माणे नेष्टुर्याज्याः । प्रथमा प्रातःसवने नेष्टृचमसयागे याज्या ॥

अभियज्ञं द्रव्यृचमृतुदैवतं मेधातिथिः ॥

अभियज्ञं । द्रविणोदा इत्येतत् द्व्यृचमृतुदैवतं मेधातिथिऋषिरपश्यत् । अतएतदपि गायत्रीछन्दस्कं । अनुक्तानां गायत्रमितिसू-

(१) मौद्गल्यो इति काण्वसर्वानुक्रमपाठः । एतत्सूत्रार्थे मा नास्तिष्टुप्अस्तिदैन्द्री-माशिषम् । शतपाठे । एतदग्रे सूत्रद्वयं नाद्य काण्वसर्वानुक्रमे ॥

चात् । इनावद्वति मवकः । त्वठं० ह्लोति सप्तकः । तेनाध्वरपूर्तिः, म-
रुत्वतीयस्य दृष्णयस्य क्षत्रयाणी नैष्टुर्योज्यालेन विनियोगः ॥

तवायमैन्द्री त्रिष्टुभं विश्वामित्रः ॥

तवायमितीमामिन्द्रदेवतां त्रिष्टुभं विश्वामित्रोऽपश्यत् । माध्यं-
दिने सवने नैष्टृचमसयागे याज्या । तवायं । द्वौ व्यूढौ । अस्मिन्ध-
न्मे व्यूहः ॥

अमेव नो जगती गृत्समदः ॥

अमेव नइतीमामृचं जगतीं गृत्समदोऽपश्यत् । लिङ्गादियं त्वष्टृदे-
वत्या । तृतीयसवने नैष्टृचमसयागे याज्या ॥

स्वादिष्ठया मधुच्छन्दाः सौम्यौ ॥

स्वादिष्टया, रक्षोहा विश्वचर्षणिरितीमे ऋचौ सोमदेवत्ये मधुच्छ-
न्दाऋषिरपश्यत् । अनयोर्गायत्रीछन्दः ॥

अनुक्तानां गायत्रम् ॥

स्वादिष्टया, रक्षोहा । उपह्वरे । अभियज्ञं । द्रविणोदा इत्यादी-
नामनुक्तानामनुक्तछन्दस्कानां गायत्रंछन्दो ज्ञेयं । अनेनैवसर्वत्र सि-
द्धेरिन्द्राग्नीमवेन्द्रयौ गायत्र्यौ, अग्निवर्त्रं त्रिरात्रेणैषी गायत्रीमित्यादौ गा-
यत्रीग्रहणं पुनरुक्तमिव ॥ ७ ॥

समास्त्वाऽऽग्निकोऽध्यायः प्रजापतेरार्षम् ॥

समास्त्वाग्नऽऋतवइत्ययमाग्निकोऽध्यायः अग्निरिष्टकचितः प-
ञ्चचितिकः स्थलः । यतेः सम्बन्धी आग्निकः । प्रजापतिरार्षं । प्र-
जापतिरस्याध्यायस्य ऋषिरित्यर्थः । एतच्चपुनरुक्तं । आग्निक-
त्वेनैवार्षस्य सिद्धेः । अथाग्निं प्रजापतिरपश्यदिति व्यवहितत्वेन
तस्यैव स्मरणार्थमिति न दोषः ॥

सामिधेन्यो नवाग्नेय्यस्त्रिष्टुभोऽग्निना दृष्टाः ॥

अस्मिन्नध्याये समास्त्वाग्न इत्याद्या नव ऋचोऽग्निदेवत्यास्त्रिष्टुभो-
ऽग्निना ऋषिणा दृष्टाः। अग्निं प्रकाश्य सप्तना अपश्यत्, समास्त्वाऽ
ग्नऽऋतवो वर्द्धयन्त्विति। तथा ता आग्नेय्यः प्राजापत्याः "यदग्निरप-
श्यत्तेनाग्नेय्यो यत्प्रजापतीं समैधते न प्राजापत्या इति च श्रुतेः"।
इष्टकापक्षे समिध्यमानसमिद्धयोरन्तराले आसां विनियोगः॥

अग्निरर्षिः कर्माङ्गभूतमग्निं स्तौति॥

अत्राध्याये प्राक्पौषोऽग्नारयितिवद्धइत्येतस्मात्। ऋषिरग्निः कर्मा-
ङ्गभूतमग्निं स्तौति॥

ऊर्ध्वा द्वादशर्चमाग्नेयमौष्णिहं विषमपदं प्राजाप-
त्यमाग्नेयमग्निरपश्यत्॥

ऊर्ध्वाऽस्येत्येतद्द्वादशर्चं आग्नीसञ्ज्ञं उष्णिक्छन्दस्कं विषमप-
दं प्राजापतिदेवत्यमग्निदेवत्यं चाग्निर्ऋषिरपश्यत्। विषमा अनियता
अक्षराः पादा यस्य तद्विषमपदं। द्वादशापि इति स एता
अपश्यदूर्ध्वाऽस्य समिधो भवन्ति। तथा ता आग्नेय्यः प्राजापत्याः
यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजापतिमप्रीणात्तेन प्राजापत्यास्ता-
विषमा विषमपदा विषमाक्षरा, "विषमाणि हि छन्दांसीति श्रु-
ते" इष्टकापक्षे प्रयाजयाज्या एताः। मत्वाग्नेयं चैकत्र प्राजापत्यमि-
त्यतआह॥

अग्निर्हि प्रजापतित्वेन संस्तूयते तेन प्राजापत्यम्॥

हि यत कारणादग्निरत्र प्रजापतित्वेन प्रजापतिरूपेण संस्तूय-
ते। तेनैतद्द्वादशर्चं प्राजापत्यं। "प्रजापतिरग्निरित्यादिश्रुतेः"।
अत्र स्वर्गाये द्वौ व्यूह्यौ, मा त्वा, निक्रमणमनुपसत्ता द्वादशकौ। तथापीयं
त्रिष्टुबेव न जगती। कुतः। द्वौ तु जागतौ यस्याः सा जागती, "द्वौ-
जागते जगती चैष्टुभे त्रिष्टुबिति श्रुतेः"। अभिचाग्ने, सजातानां, द्वाद

शकः । अतिनिद्दोऽष्टकः । अत्यचितिं । व्यूह्', विश्वाच्याग्नी व्यूहः । अ-गाधृष्य', अत्र द्वितीयएकादशक', अन्ये द्वादशका', बृहस्पते द्वादश-कः । उदर्व्याइत्यत्र तु विषमाक्षरत्वं विषमपदत्व चाक्षमेव ॥

पीवोऽअन्ना द्वे वायव्यत्रिष्टुभौ वसिष्ठः ॥ (१)

पीवोऽअन्नारयिवृध', राये नु, इत्येते द्वे वायुदेवते त्रिष्टुभौ वसिष्ठ-ऋषिरपश्यत् । यथैतं वायवे नियुत्वते शुक्ल तूपरमालभेते इत्यस्य पशो, पीवोऽअन्नारयिवृधइत्याद्याः षड्याज्याऽनुवाक्या वपापुरोडाश-पशूनां क्रमेण भवन्तीति संहिताभाष्ये, विश्वेश्वरः, व्यूहः ॥

आपो ह द्वे प्राजापत्ये हिरण्यगर्भः प्राजापत्यः ॥ (२)

त्रिष्टुभावित्यनुवर्त्तते । आपो ह, यश्चिदापइतीमे द्वे ऋचौ प्रजापति-देवते त्रिष्टुभौ, प्रजापतेरपत्यं हिरण्यगर्भऋषिरपश्यत् । ततो देवा-नां । त्रयोदशकः. तेन इत्यधिका ॥

प्रयाभिर्द्वे वायव्ये वसिष्ठः ॥ (३)

त्रिष्टुभावित्यनुवर्तते प्रयाभिर्यासि । आनो नियुद्भिरितीमे द्वे ऋचौ वायवी वायुदेवत्ये त्रिष्टुभौ गृत्समदऋषिरपश्यत् । प्रयाभि', निवीरं । व्यूहः । आनो द्वादशकः । यूयं पात । व्यूहः ॥

नियुत्वान्वायव्याः षट् ॥

नियुत्वान्वायवागहीत्याद्याः षडृचो वायुदेवताः ॥

वायो शुक्रोऽनुष्टुप् ॥

---

(१) काण्वसर्वानुक्रमे वायव्यपदमत्र सूत्रे नास्ति । एतदग्रे वायुरङ्गिरा गायत्री ति काण्वसर्वानुक्रमे पाठो बोध्यः ॥

(२) प्रयाभर्वसिष्ठस्त्रिष्टुभमिति काण्वसर्वानुक्रमपाठः । एतदग्रे वायो ये गायत्री-तीद सूत्र, एतदग्रे सूत्रतुल्य नास्ति तदग्रे एकया चेद सूत्रमस्तीति बोध्यम् ॥

(३) वायो शुक्रोऽनुष्टुप् पुरुमाढआजर्माढावानाविष्टुभमाजगादित्यतपाठः काण्वस-र्वानुक्रमीयो बोध्यः ॥

आभा यर्ण मध्ये वायो शुक्रइत्यनुष्टुप् ॥

एकया च त्रिष्टुप् ॥

एकया च दशभिश्चेत्येषा त्रिष्टुप्। द्वाभ्यामिष्टये हे व्यूहौ दृष्यू नता वा। अन्या गायत्र्य । अन्त्यायतस्रो नियुत्वायो, वायुरयेगा । वायो येहि । तव वायो॥

नियुत्वान्वायो गायत्रीं गृत्समदः ॥

नियुत्वान्वायो। वायोशुक्रइतीमे ऋचौ गृत्समदऋषिरपश्यत्॥

वायो शुक्र पुरुमीढाजमीढौ ॥ (१)

वायो शुक्रइतीमामृचं पुरुमीढाजमीढावृषी अपश्यताम् ॥

तव वायो व्यश्व आङ्गिरसः ॥ (१)

तव वायो इतीमामृचं अङ्गिरसोपत्यं व्यश्वऋषिरपश्यत। अस्य च दृचस्य वायव्येऽष्टकापश्वपचे वपादीनां याज्यानुवाक्यात्वेन विनियोग ॥

अभित्वा वसिष्ठऐन्द्रं प्रगाथम् ॥ (२)

अभित्वा शूर नोनुमइतीमं प्रगाथं इन्द्रदैवतं वसिष्ठऋषिरपश्यत् ॥

प्रथमा बृहती द्वितीया सतोबृहती ॥

तत्र प्रगाथे प्रथमा, अभित्वेत्येषा बृहती। द्वितीया, न त्वावानित्येषा सतोबृहती । एनयोर्लक्षणमिताभ्या बृहतीत्रयसम्पादनप्रकारः प्रागुक्त, तत्र पूर्वा बृहती सतोबृहत्युत्तरा ताभ्यां तिस्रो बृहत्य सम्पा-

(१) गायत्रीए सवा वायव्या हिरण्यगर्भोऽनुवाक प्रतीकोक्तो,येनद्यौ पञ्चानष्टुभऽ,आद्ये द्वे हिरण्यगर्भ,आपो ह ।तस्य प्राजापत्या कदेवाया प्रजापते न प्राजापत्या त्रिष्टुप् । इत्यधिक पाठ काण्वसर्वानुक्रमे बोध्य ॥

(२) आभत्वा दृश्यूप वसिष्ठ काण्वपाठ ॥

दिता इत्यृच । ईशानमस्य । व्यूहः । नत्वावाम् व्यूहः ॥

त्वामिद्वेवर्ह० शंयुर्बार्हस्पत्यः ॥

त्वामिदि इत्यामहद्दतीमसृग्द्वयात्मकं प्रागाथमिन्द्रो देवतं बृहस्पतेरपत्यं शंयुऋर्षिरपश्यत् । तत्र ऋग्द्वये प्रथमा त्वामिद्,द्वितीयं बृहती द्वितीया,स त्वं नश्चित्रे,त्येषा सतोबृहती । बृहतीसतोबृहतीभ्यां बृहतीत्रयसंपादनं च पूर्वं विस्तरेणोक्तमिति नेह पुनरुच्यते । अथ त्वामिदि,त्वांवृचेषु व्यूहः । त्वां काष्ठासु द्वौ व्यूहौ, सामसु द्वौ व्यूहौ, "आग्नी अर्येनर्ठ० सामभिः परिगायतीत्यध्वर्योः सामगानं विहितं नाद्ध्वर्योर्गायेदिति च" । तेनात्र तेषां साम्नां योनिभूताऋचो यजुर्वेदे पठ्यन्ते । अभित्वा द्वे रथन्तरस्य योनी । "रथन्तरं दक्षिणे पक्ष इति- श्रुतेः" । त्वामिद्धीति द्वे बृहतः । "बृहदुत्तरेप चे इति श्रुतेः"। कया न इति तिस्रो वामदेव्यस्य योनयः "वामदेव्यमात्मन्निति श्रुतेः" । यज्ञायज्ञा वः, ऊर्जो नपातं, इति द्वे यज्ञायज्ञियस्य । यज्ञायज्ञियं पुच्छ इति हि श्रूयते । एते यानि सँव्वत्सरदीक्षे सँव्वत्सरसत्येव। अन्यस्मिन्पक्षे "ऋतुष्टा यज्ञायज्ञायं गेयमिति लाट्यायन." । "अथ प्रजा पतेर्हृदयं गायतीत्येनं तु अनृचं गीयते प्रजापतेर्हृदयमनृचं गायतीति शाखान्तरात् ॥

कया नऽऐन्द्रं तृचं गायत्रं वामदेवोऽन्त्या तु पादनिचृत् ॥

कया नश्चित्रऽआभुवदित्येतत्तृचं इन्द्रदेवतं गायत्रीछन्दस्कं वामदेवऋर्षिरपश्यत् । तु पुनः । अस्मिन्तृचे अन्त्या अभीषुणइत्येषापादनिचृद्गायत्री अस्यां हि त्रयः पादाः सप्ताक्षराः । पादनिचृदुच्यते । त्रयः सप्तकाः पादा निचृदित्युक्तेः, कस्त्वा व्यूहः ॥

यज्ञायज्ञा वऽऊर्ज्जो नपातर्ठ० शंयुः ॥

यज्ञायज्ञाव,ऊर्जोनपातमित्येतद्द्वयं शंयुर्ऋषिरपश्यत् ॥

मा हि मो गर्भः प्रगाथः ॥

स्तौषीत्। द्वितीयेनाह्नेन प्रभीमूनामित्यनेन रश्मीनस्तौषीत् ॥

हरीन् ॥

तीव्रान्घोषानित्यया हरीनश्वानस्तौषीत् ॥

रथम् ॥

रथवाहनमित्यनया रथमस्तौषीत् ॥

रथगोपायितॄन् ॥

स्वादुषंसद इत्यनया रथगोपायितॄनस्तौषीत् ॥

जगत्या लिङ्गोक्तदेवताः ॥

ब्राह्मणासः पितर इत्यस्या जगतीछन्दस्काया लिङ्गोक्ता ब्राह्मणादयो देवताः, ब्राह्मणासः पितर इति व्यूहेनैकादशकः। तेनैकोना ॥

द्वाभ्यां त्रिष्टुबनुष्टुब्भ्यामिषुम् ॥

सुपर्णं वस्ते, ऋजीते परीत्याभ्यां द्वाभ्यां यथाक्रमं त्रिष्टुबनुष्टुब्भ्यामिषुमस्तौषीत् ॥

अनुष्टुभा कशाम् ॥

आजङ्घन्तीत्यनयानुष्टुप्छन्दस्कया कशामश्वाजनीमस्तौषीत्। अश्वानां भयप्रकाशनार्था करोत्युच्यते। आजङ्घन्ती व्यूहः ॥

ततो हस्तघ्नम् ॥

ततोऽनन्तरं अहिरिवेत्यनया हस्तघ्नमस्तौषीत्। ज्याया हेतिं। व्यूहः। पुमान्पुमांसं द्वादशकः ॥

ततस्तृचौ रथदुन्दुभिदेवत्यौ ॥

ततोऽनन्तरं यथाक्रमं रथदुन्दुभिदेवत्यौ तृचौ, वनस्पते वीड्वङ्गः। दिवः पृथिव्याः, इन्द्रस्य वज्र इत्ययं तृचो रथदेवत्यः। उपश्वासय, आक्रन्दय, आमूरज इत्ययं तृचो दुन्दुभिदेवत्यः ॥

ऐन्द्रोऽर्धर्चोऽन्त्यः ॥

सङ्ग्रामाङ्गं स्तुतवानित्यर्थः। ऋक्शः सङ्ख्यैकवचनाच्च, वीप्सायामिति शस्। यतश्चासौ संनाहादीनि सङ्ग्रामाङ्गान्येव देवता "स्तुतिभाजो देवताभवन्तीति वेदवचनात्"। तान्येव सङ्ग्रामाङ्गानि क्रमेणाह॥

**सन्नाहम्॥**

जीमूतस्येत्यनया त्रिष्टुभा सन्नाहमस्तौषीत्। अनादिष्टया व्यूह॥

**कार्मुकम्॥(१)**

धन्वनेत्यनया कार्मुकं। धनुरस्तौषीत्॥

**गुणम्॥**

वक्ष्यन्तीवेत्यनया धनुषो गुणं ज्यां प्रत्यञ्चामस्तौषीत्। ज्याऽदृशं व्यूह॥

**आर्त्नी॥(२)**

तेऽआचरन्तीत्यनया आर्त्नी धनुःकोटी अस्तौषीत्॥

**तूणम्॥(३)**

बह्वीनामित्यनया तूणं इषुधिं अस्तौषीत्॥

**जगत्यर्द्धेन सारथिमर्द्धेन रश्मीन्॥(४)**

रथे तिष्ठन्नित्यस्या जगत्या जगतीछन्दस्कायाः अर्द्धेन सारथिं अ

---

(१) अत्र धनु पद काण्वसर्वानुक्रमेऽस्तीति॥

(२) हस्तघ्नएतत्सूत्रान्ते काण्वपाठः॥

(३) एतत्सूत्रान्ते इषवस्थामिति काण्वपाठः॥

(४) ततो जगत्यर्द्धेन सारथिमनुगर्द्धेन रश्मीन् ततोऽनुष्टुभा कशामन्त्यया दुन्दुभिं पधामन्त्वाङ्लिङ्गमनुक्तछन्दस्का सत्रात्रिष्टुभा, यदुक्तछन्दस्कं यद्दशाक्षरस्तु नीत्रिष्टुभो भार्गवजमदग्निर्ददर्श दीर्घतमाश्च, समिद्धोऽअग्द्वादशाप्रीत्रिष्टुभो नमदग्निरभे गायत्र्यायानिदशाहर्विषोऽन्ते द्वैव्यदेवता, आग्नेय कवष्यविश्वस्यात्माऽएकादशिन्योर्द्वियो पशुदेवताब्राह्मणेनाभिधीयन्ते। अध्यायद्वयमरश्मासोऽध्यायदशमे वक्ष्यति काण्वसर्वानुक्रमकार॥

## ग्निर्ददर्श दीर्घतमाश्च ॥(१)

यदक्रन्दः प्रथममित्यादयस्त्रयोदश ऋचः। अश्वस्तुतिरूपास्त्रिष्टुभो भृगोरपत्यं जमदग्निर्ऋषिर्दीर्घतमाश्च ददर्श दृष्टवान्। यमेन दत्त। द्वादशकः। असि यमः। असि त्रितः। व्यूहः। शीर्ष्णा, द्वौ व्यूहौ। उतैवने। अनुगाव। अनुदेवाः। हिरण्यशृंगो। यदाक्षिपुः। तव शरीरं। उपप्रागाच्छसनं। देवद्रीचा, पथायान्ति। एतेषु व्यूहः। होतुरश्वाभिषवे एतासां विनियोगः॥

## समिद्धोऽअद्य द्वादशाप्रीस्त्रिष्टुभो जमदग्निः॥

समिद्धोऽअद्येत्याद्या द्वादशर्चमाप्रीसंज्ञास्त्रिष्टुभो जमदग्निर्ऋषिरपश्यत्। ददर्श "जमदग्निभिरेवाप्रीणीयादिति श्रुतेः"। समित्तनूनपान्नाराशंसादयो देवता। त्वष्टृतः कविः। देवता च, आजुह्वानः। आयाह्यग्ने। त्वं देवानां। सऽएनान्। एतेषु व्यूहः। देवेभ्योऽअदितये। द्वौ व्यूहौ। देवेभ्यो भवत। तिस्रो देवीः, सरस्वती। उपावसृज। स-द्योजातः॥ १२॥

## केतुं कृण्वन्नाग्नेयीमनिरुक्तां गायत्रीं मधुच्छन्दाः।

केतुं कृण्वन्नितीमामृचमग्निदेवतां गायत्रीं, मधुच्छन्दा ऋषिरपश्यत्॥

## जीमूतस्येव पायुर्भारद्वाजः संग्रामाङ्गान्यस्तौषीत्॥(२)

भारद्वाजो भरद्वाजस्य पुत्रः पायुर्ऋषिः, जीमूतस्येव भवतीत्यादिभिः ऋक्शः एकैकया ऋचा वक्ष्यमाणानि सन्नाहादीनि संग्रामाङ्गानि अस्तौषीत्स्तुतवान्। एकैया ऋचा यथाक्रमं एकैकं क

(१) अत्रारभ्य सूत्रद्वयं काण्वसर्वानुक्रमे नास्तीति बोध्यः॥

(२) अत्र काण्वसर्वानुक्रमे जीमूतस्येवेत्यादिऋग्भिः क्रमात्इत्यधिकः पाठो बोध्यः॥

ह' । नाहम्यो बृहत्यौ । जगौत्युती, व्यूहः । गक्करी । देवा देव्या । अतिजगती । देवीस्त्रिसः । एकाधिकाब्राह्मी अनुष्टुप । देवो नराशंसः । व्यूह, अतिजगती । देवो वनस्पति, व्यूह अतीजगती । देवं बर्हिः, ब्राह्मी बृहती । देवोऽग्निः, ब्राह्मी बृहती । अग्निमद्य । एकाधिकाब्राह्मीगायत्री । सूपस्था द्वौ व्यूहौ । ब्राह्मीअनुष्टुप् त्वामद्य । एकाधिकाविकृति ॥ १० ॥

## समिद्धोऽअञ्जन्नाश्वमेधिकोऽध्यायः ॥

समिद्धोअंजन्कृदरमित्ययमध्यायआश्वमेधिकः अश्वमेधसंबन्धी- भ्रः । तत्रच प्रजापतिरेवास्यऋषि, ननु तत्रिचतुरोऽध्यायाःप्रजापतिर- पश्यदिति, चतुर्णामेवाध्यायानां, प्रजापतिऋषिरुक्त । तत्कथमस्य प्रजापतिऋषि । उच्यते । "प्रजापतिरकामयत सर्वांन्कामानाप्नुयां सर्वांव्यष्टीव्यश्नुवीयेति स एतमश्वमेधं त्रिरात्रं यज्ञं क्रतुमपश्यदितिश्रुते.' । प्रतिपादित. साधारण. प्रजापतिऋषिरत्रापि भवत्येवेति ॥

## आद्या आप्रीस्त्रिष्टुभएकादशाश्वस्तुतीर्बृहदुक्थो वामदेव्यो ददर्शाश्वो वा सामुद्रिः ॥

आद्या. प्रथमा एकादशऋचत्रिष्टुभआप्रीसञ्ज्ञा अश्वस्तुतिरूपा वामदेवपुत्रो बृहदुक्थो ददर्श । अथवा सामुद्रि समुद्रपुत्रोऽश्वऋषिः एताएकादशर्चो ददर्श, तात्कथमाप्रीसञ्ज्ञकान्कथिता "समिद्धोअंजनकृदरमृमतीनामितिबार्हदुकथी भैराप्रीणीयाद्बृहदुक्थो ह वै वामदेव्योऽश्वो वा सामुद्रिरश्वस्याप्री ददर्शेतिश्रुते" । समित्तनूनपादि ड़ादश आसां देवताः प्रजानन्वाजी द्वौ व्यूहौ । ईड्यश, आशु च । द्वौ व्यूहौ । अश्वो वृतेन । व्यूह' ॥

## यद्क्रन्दस्त्रयोदशाश्वस्तुतिस्त्रिष्टुभो भार्गवो जमद-

त्वामद्य प्रतीकः । त्वामद्येति प्रतीकं यस्मिन्स तथा । न केवलम-
त्र । किंतु उभयत्र । उभयोरैन्द्रवायोधसानुवाक्ययोरयं,त्वामद्य प्रतीक
एव । अग्निमद्य एकाधिका प्राजापत्याजगती, सूपस्था । ब्राह्मीउ-
ष्णिक् । त्वामद्यएकाधिका विकृतिः । अथशाऽग्निमद्येत्यतआरभ्य सू-
क्ता सूक्तीत्यन्त. एवं एकं यजुः, तदाऽनियताक्षरत्वाच्छन्दोनास्ति ॥

समिधानं महद्वायोधसऽआप्रियएकादशप्रयाज-
प्रैषा ॥

होता यक्षत्समिधानं महदित्याद्याएकादशसंख्या वायोधसपशौ
प्रयाजानां प्रैषाः, आप्रियइत्याप्रीदेवता समित्तनूनपादादिदेवता-
इत्यर्थः ॥

तथैव देवं बर्हिरनुयाजप्रैषाः ॥

तथैव वायोधसपशावेव देवं बर्हिर्वयोधसमित्याद्या एकादशा-
नुयाजाना प्रैषा', बर्हिरादिदेवताः ॥

अग्निमद्य वायोधसः सूक्तवाकप्रैषः ॥

वयोधसः अयं वायोधसः । अग्निमद्येत्ययं वायोधसस्य पशोः
सूक्तवाकप्रैषइत्यर्थ. । वयोधसा देवतया तत्सम्बन्धिकर्म लक्ष्यते, वा-
योधसइति षष्ठ्येकवचनं पूर्वसूत्रे तु सप्तम्येकवचनं । अथानयोरनुवा-
कयोश्छन्दांस्युच्यन्ते । होता यक्षत्समिधानं । द्वे । व्यूहे । अतिजग-
ती । तनूनपातं । एकाधिकातिजगती, ईडेन्यम् । व्यूहः । शक्वरी ।
सुबर्हिषां द्वौ व्यूहौ । शक्वरी, व्यचस्वतीः । द्वौ व्यूहौ अतिशक्वरी ।
सुपेशसा व्यूहः । अतिशक्वरी । प्रचेतसा । एकाधिका शक्वरी । पे-
शस्वती । एकाधिकाशक्वरी । सुरेतस त्वष्टारं । एकाधिकाशक्वरी ।
वनस्पतिं, व्यूहः । अष्टिः, स्वाहाकृतीः । अतिशक्वरीः । देवं बर्हिः,
देवीर्द्वारः । एकाधिके आर्च्यौ त्रिष्टुभौ । उषासानक्ता । जोष्ट्री । ऊर्-

न आप्रीदेवता, समित्तनूनपादिल्यादिदेवताका, प्रयाजानां प्रैषा', होता यक्षत्समिधेन्द्रमिडस्पदइत्यतआरभ्य होतायक्षदिन्द्रमित्यन्ता, तत्र समिधेन्द्र । व्यूह । आर्षीत्रिष्टुप । तनूनपात व्यूह । अति जगती । इडाभिरिन्द्र । ब्राह्मीउष्णिक । बर्हिषीन्द्र । आर्षीत्रिष्टुप । ओजो न । व्यूह । अतीजगती । उपेऽइन्द्रस्य । आर्षीत्रिष्टुप । दैव्या होतारा, अतिजगती । तिस्रादेवी, व्यूह । ब्राह्मी अनुष्टुप् । त्वष्टारमिन्द्र । व्यूहो,अतिजगती । वनस्पतिम् । द्वे व्यूहो । । शक्करी । होता यक्षदिन्द्र व्यूह, शक्करी ॥

## देवं बर्हिरनुयाजप्रैषा ऐन्द्राएकादशैव ॥

देव बर्हिरित्यादयएकादशैन्द्र,ऐन्द्रपशौ सम्बन्धिनएवानुयाजप्रैषा । एवकारो भिन्नक्रम । ऐन्द्र एवेति । देवताश्च बर्हिरादयएव । तत्र देव बर्हि । व्यूह । अतिजगती । देवीर्द्वार, एकाधिका शक्करी, अथवा नवो व्यूहा, अतिशक्करीति । देवी उषासा । ब्राह्मी उष्णिक् । देवी जोष्ट्री । एकाधिकाऽतिजगती । ऊर्जाहुती नवो व्यूह । । विकृति, देवा दैव्या । नवो व्यूहा । अतिजगती । एकाधिकाजगती वा । देवीस्तिस्र । अतिजगती । देवऽइन्द्र । कृति, देवो देवै, व्यूह । अतिशक्करी । देव बर्हि । आर्षीत्रिष्टुप् । देवोऽग्नि व्यूह । आर्षीत्रिष्टुप ॥

## अग्निमद्येन्द्रः सूक्तवाकप्रैष ॥

अग्निमद्येत्ययमैन्द्रऐन्द्रपशुसम्बन्धसूक्तवाकप्रैष ॥

## त्वामद्य प्रतीकउभयत्रापि ॥

त्वामद्य ऽऋषइत्यय मन्त्र । उभयत्रापि ऐन्द्रानुयाजे वायोधसानुयाजे च प्रतीक प्रतीकोक्त, आदिमात्रेणापात्त सकलो प्रैष । अथवा सूक्तवाकप्रैषइत्यस्य विशेषणम्, कीदृश सूक्तवाकप्रैष ।

सहस्रशीर्षा पुरुषइत्यादि षोडशर्चमानुष्टुभं अनुष्टुप्छन्दस्कं। त्रिष्टुबन्त्यं । त्रिष्टुबन्त्या षोडशी यस्य तत्त्रिष्टुबन्तं । जगदीजं जगतः कारणभूतः पुरुषोऽत्र षोडशर्चदेवता ब्राह्मणी नियुक्तानां पशूना-मभिषवे विनियोगोऽस्य । अत्र पुरुषएव, यद्भूतं। व्यूहः । त्रिपादूर्ध्व स्तवकः । ततोविष्वङ् व्यूहः। सम्भृतम् । आरण्याः। येकेच। साध्याः सन्ति । यत्पुरुषम् । कतिधा । एतेषु व्यूहः। मुखं नवक., बाहू। व-सन्तोऽस्य। तानि धर्माणि । यत्र पूर्वे । एतेषु व्यूहः ॥

## अद्भ्यः षडृचउत्तरनारायणो मन्त्रः ॥

अद्भ्यः सम्भृतइत्यादिः षडृचः । ऋक्षडकात्मकउत्तरनारा यणसञ्ज्ञो मन्त्र । अस्य षडृचस्यादित्योपस्थाने विनियोगः, अत-एवात्रादित्यो देवता । सञ्ज्ञाकरणमुत्तरनारायणेनादित्यमुपस्था-येत्यादी व्यवहारार्थम् ॥

## आद्यास्तिस्त्रस्त्रिष्टुभः ॥

अस्मिन्षडृचे आद्यास्तिस्रस्त्रिष्टुभ, अद्भ्यः सम्भृत, वेदाहमेतं प्र-जापतिश्चरति। एतास्तिस्रऋचस्त्रिष्टुप्छन्दस्काः। तस्मत्यैस्य। द्वादश-क । नान्यः पन्थाः । व्यूह । अजायमानो द्वादशकः ॥

## द्वे अनुष्टुभौ ॥

अस्मिन्षडृचे चतुर्थीपञ्चम्यौ ये। देवेभ्यो, रुचं ब्राह्ममितीमे अनुष्टु-भौ ॥

## अन्त्या त्रिष्टुप् ॥

अन्त्या श्रीश्च तइत्येषात्रिष्टुप् । द्वौ तु जागतौयस्या इतीयंत्रिष्टु-प् । व्यूहः ॥ १४ ॥

## तदेव सर्वमेधोऽध्यायस्तात्मदैवतः सप्तमेऽहनि सर्वहो-मे विनियुक्तः ॥

तदेव निमित्तिययमध्याय. सर्वमेधसम्बन्धी भागदैवत सप्तगेऽङ्ग-न्यासोयागसम्पन्ने सर्व जुहोमीत्यन्त्रि सर्वहोमे विनियुक्त ॥

सर्वमेधं ब्रह्मस्वयम्भवैक्षत तदीयं मन्त्रगणं प्रवागु-यमर्च्छ्येतस्मात् ॥

स्वयं तु ब्रह्मसर्वमेधं नवायुमच्छेत्येतस्मात्प्राक् तदीय मन्त्रगणं च ऐक्षत ददर्श ॥

आद्ये द्वे अनुष्टुभौ ॥

तदेव, सर्व निमेषाइत्येते द्वे आद्ये ऋचावनुष्टुभौ ॥

न तस्य द्विपदागायत्री ॥

न तस्य प्रतिमेतीय द्विपदागायत्री ॥

हिरण्यगर्भयत्सो मा मा हिंसी० सीदान्त्यात्र द्वे एताः प्रतीकचोदिताः ॥

हिरण्यगर्भ समवर्तत, य प्राणत । यस्येमे, यस्माजाता इत्येता यतस्त्र । मा मा हिंसी० सीज्जनितेत्येका । यस्मान्न जात, इन्द्रश्च सम्राडित्येते द्वे एताश्चतस्रोऽत्र प्रतीकचोदिता पूर्वं पठितत्वाद्धि मार्गे णोवाका । यदि प्रतीकचोदितास्तत किमतआह ॥

ब्रह्मयज्ञेऽध्येया ॥

ब्रह्मयज्ञे स्वाध्यायाध्ययने एता सकला अध्येया पठनीया । न वैतत्समत्र कि तु ॥

सर्वमैवम् ॥

यत्र यत्र लोके, ता, इन्द्र । स्वामत्तऽवरदे । आपो ह यद्बृहती र्यश्चिदाप । तं प्रत्नथाऽयं वेन । इमर्हीन्द्रो यद्योजमा, कदा चन स्त रीरसि, कदा चन प्रयुच्छसि । तमृप्रत्नथाऽयं वर्जायर्च देवानां । तं प्रत्नथाऽय वेनो, ये देवासः, मानऽस्तोको, विश्वेभि सोम्य मद्धां, मा

सुपर्णोधृतः । ततो वारद्वयं तं प्रब्रूयात्,यं वेनः । इमास्त्वा, प्र-
व्याय,प्रयठं० सहस्र,मूर्द्धजयुपः, यऽद्दमा विश्वा, विश्वकर्मा, यो नः
पिता,अपतीऽगन्म मो देहीत्येवं, या या. प्रतीकचोदिता ऋचः तत्र
सर्वत्र ता वृष्णयज्ञे सकला ध्येया. । वृष्णयज्ञप्रहण जपादेरप्युपलक्ष-
णम् ॥

एषो ह चतस्त्रस्त्रिष्टुभ ॥(१)

एषो ह देवः । यस्माज्जातं । येन द्यौ ,यश्छन्दसोत्येतायतस्त्रिष्टुभः । प्रत्यङ्गना जागतः । चीणि ज्योती न जागतः ॥

आपो ह यच्चिरप्रतीकचोदिते ॥

आपो ह यद्बृहतीर्यश्चिदापइत्येते द्वे ऋचावत्र प्रतीकचोदिते । वृष्णयज्ञादावध्येये ॥ १५ ॥

वेनस्तत्पश्च त्रिष्टुभः ॥

वेनस्तत्पश्यन्नित्याद्या पञ्चऋचस्त्रिष्टुभः, यत्र विश्वं, प्रतत् । तृतीये धामन् । एतेषु व्यूह ॥

सदसस्पतिं तृचेन मेधाकामो मेधां याचते ॥

सदसस्पतिमद्भुतमित्यादिकेन तृचेन कश्चिन्मेधाकामो मेधां धारणावतीं बुद्धिं याचते प्रार्थयते ॥

प्रथमा गायत्री लिङ्गोक्तदेवता ॥

अत्र तृचे प्रथमा सदसस्पतिमित्येषा गायत्रीलिङ्गोक्तसदसस्पतिदेवता । प्रियमिन्द्रस्य । व्यूह ॥

द्वितीयाग्नेय्यनुष्टुप् ॥

द्वितीया यां मेधामित्येषा आग्नेयी अग्निदेवत्या अनुष्टुप् । यां

(१) अत्र, परमा न,प्रतीकोक्ता परीत्य भूतानि, द्वे परमात्मप्रादन्यौ त्रिष्टुभावेव, ग्रानकाण्वसर्वानुक्रमेऽधिक. पाठ ॥

मेधां सप्तकः, द्वितीये त्र्यूचः ॥

**तृतीया लिङ्गोक्तदेवताऽनुष्टुप् ॥**

मेधां मे वरुण इत्येषा तृतीया ऋक्लिङ्गोक्तवरुणाग्न्यादिदेवता । अनुष्टुप्छन्दस्का । पञ्चमो नवकः ॥

**इदं मे मान्त्रवर्णिक्यनुष्टुप् ॥**

इदं मे ब्रह्म चेतीयं मान्त्रवर्णिकी मन्त्रवर्णोक्तदेवता अनुष्टुप् । अत्र प्रथमचतुर्थौ नवद्वितीयः सप्तकः, तृतीयोऽपि व्यूहेन सप्तकः ॥

**एतया देवेभ्यः श्रीकामो याचते श्रियम् ॥**

इदं मा इत्येतया ऋचा कश्चित् श्रीकामः देवेभ्यः श्रियं याचते लक्ष्मीं प्रार्थयते ॥ १६ ॥

सर्वमेधे श्रूयते । तस्याग्निष्टुदग्निष्टोम प्रथममहर्भवतीति प्रकृत्य तस्याग्नेया पशवः सर्वाण्याग्नेय्यः पुरोरुचः सर्वमाग्नेयमहरिति । तत्र कल्पसूत्रे अनुक्तत्वादत्राग्नेयीः पुरोरुचो दर्शयति ॥

**अस्याजरासः सप्तदशाग्निष्टुत्याग्निष्टोमिके प्रथमेऽहनि पुरोरुचश्चाग्नेय्यः ॥**

सर्वमेधे अग्निष्टुत्संज्ञके प्रथमेऽहनि अस्याजरासो दमामित्याद्या अह्नोऽग्नेरित्यन्तपर्यन्ताः सप्तदशसंख्या ऋचोऽग्निदेवत्याः पुरोरुचो भवन्ति । अत्र पुरोरुक्शब्देन ऋग्रूपा यज्ञपरिभाषान्तार्थाभिधीयन्ते न यजूरूपा । कुतः "ऋचि पुरोरुगिति श्रुतेः" । ऋक्पञ्चाशैत्रदेवतावीतहोत्रादियोजनेषु यजूरूपे पठ्यमानेऽप्यत्र "तं वा अपुरोरुक्कं गृह्णामीति श्रुतेश्च" । तेन येषां पशूनां प्रकृतौ पुरोरुचः सन्ति तेषामेवेदं वैकृतविधानं सौत्रामण्यामश्वमेधादिदेवतानाम् । अतएवाग्नेयीभिः प्राकृत्य ऋचएव निवर्त्यन्ते सोमयागादीनि यजूंषि ॥

सप्तर्षयोधृतः । ततो वारदयं तं प्रथयाऽयं वेनः । इमाऽउत्वा, य-ज्ञाय,मयठं॰ सहस्र,मूर्द्धजपुपः, यऽइमा विश्वा, विश्वकर्मा, यो नः पिताऽ,चपतेऽन्नस्य मो देहीत्येवं, या या: प्रतीकचोदिता ऋचः तत्र सर्वत्र ता बृहयते सकला ध्येयाः । बृहयत्प्रपहप अपादेरप्युपलक्षणम् ॥

एषो ह चतस्त्रस्त्रिष्टुभ ॥(१)

एषो ह देवः । यस्माज्जातं । येन द्यौ ,यत्क्रन्दसोत्येतायतस्त्रिष्टुभः । प्रत्यङ्जना जागतः । चौरि ज्योती च जागतः ॥

आपो ह यत्त्विरप्रतीकचोदिते ॥

आपो ह यद्बृहतीर्यश्चिदापइत्येते द्वे ऋचावत्र प्रतीकचोदिते । बृहयत्सादावध्येये ॥ १५ ॥

वेनस्तत्पञ्च त्रिष्टुभः ॥

वेनस्तत्पश्यन्नित्याद्या. पञ्चऋचस्त्रिष्टुभ', यत्र विश्वं, प्रतत् । स्तीर्ये धामन् । एतेषु व्यूहः ॥

सदसस्पतिं तृचेन मेधाकामो मेधां याचते ॥

सदसस्पतिमद्भुतमित्यादिकेन तृचेन कश्चिन्मेधाकामो मेधां धारणवतीं बुद्धिं याचते प्रार्थयते ॥

प्रथमा गायत्री लिङ्गोक्तदेवता ॥

अत्र तृचे प्रथमा सदसस्पतिमित्येषा गायत्रीलिङ्गोक्तसदसस्पति-देवता । प्रियमिन्द्रस्य । व्यूह ॥

द्वितीयाग्नेय्यनुष्टुप् ॥

द्वितीया यां मेधामित्येषा आग्नेयी अग्निदेवत्या अनुष्टुप् । यां

---

(१) अत्र, यस्मा न,प्रतीकोक्ता परीत्य भूतानि, द्वे परमात्मवादि गौ त्रिष्टुभावेव, ज्ञानकाण्डसर्वानुक्रमेऽधिक. पाठ ॥

मेधां सप्तक:, द्वितीये शूद्र: ॥

तृतीया लिङ्गोक्तदेवताऽनुष्टुप् ॥

मेधां मे वरुण इत्येषा तृतीया ऋक् लिङ्गोक्तवरुणाग्न्यादिदेवता । अनुष्टुप्छन्दस्का । पञ्चमो नवक: ॥

इदं मे मान्त्रवर्णिक्यनुष्टुप् ॥

इदं मे ब्रह्म चेतीयं मान्त्रवर्णिकी मन्त्रवर्णोक्तदेवता अनुष्टुप् । अत्र प्रथमतृतीयौ नवद्वितीय: सप्तक:, तृतीयोऽपि व्यूहेन सप्तक: ॥

एतया देवेभ्य: श्रीकामो याचते श्रियम् ॥

इदं मा इत्येतया ऋचा कश्चित् श्रीकाम: देवेभ्य: श्रियं याचते लक्ष्मीं प्रार्थयति ॥ १६ ॥

सर्वमेधे श्रूयते । तस्याग्निष्टुदग्निष्टोम प्रथममहर्भवतीति प्रकृत्य तस्याग्नेया ग्रहा भवन्त्याग्नेय्य: पुरोरुच: सर्वमाग्नेयमभवदिति । तत्र कल्पसूत्रे अनुक्तत्वादाग्नेयी: पुरोरुचो दर्शयति ॥

अस्याजरास: सप्तदशाग्निष्टुत्याग्निष्टोमिके प्रथमेऽहनि पुरोरुचश्चाग्नेय्य: ॥

सर्वमेधे अग्निष्टुत्संज्ञके प्रथमेऽहनि अस्याजरासो इमामित्याद्या महोऽग्नेरित्येतत्पर्यन्ता: सप्तदशसङ्ख्या ऋचोऽग्निदेवत्या: पुरोरुचो भवन्ति । अत्र पुरोरुक्शब्देन ऋग्रूपा ग्रहग्रहणमन्त्रा अभिधीयन्ते न यजूरूपा: । कुत: "ऋचि पुरोरुगिति श्रुते:" । उक्थग्रहावैश्वदेवप्रातीकतहारियोजनेषु यजूरूपे ग्रहणमन्त्रे सत्यपि "तं वा अपुरोरुक्कं गृह्णातीति श्रुतेश्च" । तेन येषां ग्रहाणां प्रकृतौ पुरोरुच: सन्ति तेष्वेवेदं वैकृत विधानं सोमोऽसृग्नीमोक्थग्रहावैश्वदेवानाम् । अत एवाग्नेयीभि: प्राकृत्य ऋच एव निवर्त्यन्ते नोपयामादीनि यजूंषि ॥

आद्ये द्वे ऐन्द्रवायवस्य ॥

आद्ये अस्याजरासो हरयो धूमकेतव इतीमे द्वे ऋचौ ऐन्द्रवायव ग्रहस्य पुरोरुचौ यक्ष्यमन्त्रौ ॥

अस्याजरासो वत्सप्रीः ॥

अस्याजरास इतीमामृचं त्रिष्टुभं वत्सप्रीऋषिरपश्यत् । प्रथमद्वितीययोर्व्यूहः । चतुर्थो दशकः तेनैकोना । आद्यायमित्यस्यापवादः ॥

हरयो धूमकेतवो विरूप ॥

हरयो धूमकेतव इतीमामृच गायत्रीं विरूप ऋषिरपश्यत् । इन्द्रवायूइत्यस्या अपवादः ॥

यज्ञानो मैत्रावरुणस्य गोतम ॥(१)

यज्ञानो मित्रावरुणेतीमामृचं मैत्रावरुणस्य पुरोरुचं गोतम ऋषिरपश्यत् । अयं वामित्यस्या अपवादः । अग्ने यनि व्यूहः । गायत्री । युञ्जहीत्यस्या आश्विनग्रहग्रहणे विनियोगः । कुतः मैत्रावरुणशुक्रपुरोरुचांमध्ये पाठात् । प्रकृतावप्याश्विनेव क्रमे अयं वां, तं प्रत्नथेत्यनयोर्मैत्रावरुणशुक्रपुरोरुचांमध्ये, या वां कशेत्याश्विनपुरोरुचः पाठाच्च । अश्वीनाग्ने इति लिङ्गाच्च । वक्ष्यमाणेषु षट्स्वपि पुरोरुग्गणेष्वाश्विनेव क्रमे, आसुते सिञ्चत, दैव्यावध्वर्यू, अधि नद्रेद्रैर्यां, दस्रा युवाकवो, दैव्याध्वर्यू, आयातमुपभूषतमित्येतासां सर्वासां व्यक्ताश्विलिङ्गानामाश्विनपुरोरुचां पाठाच्च । या वां कशेत्यस्य बाधः ॥

द्वे विरूपे शुक्रस्य कुत्स ॥

द्वे विरूपे इतीमामृच त्रिष्टुभ शुक्रग्रहस्य पुरोरुचं कुत्स ऋषिरपश्यत् । तं प्रत्नथेत्यस्यापवादः । द्वे विरूपे व्यूहेन दशकः । कुत्रापि व्यूहं

(१) एतत्सूत्रामे, युक्ष्वाहि इत्योतसूत्रमधिकं काण्वसर्वानुक्रमेऽस्तीति ॥

कृत्वा छन्दःपूर्तिः ॥

अयमिह मन्थिनः ॥

अयमिहेति मन्थिग्रहस्य पुरोरुग्ग्रहणार्थानुष्टुप् । त्रिष्टुप् । द्वितीयो दशकः, तृतीयो दशकः, तृतीयो द्वादशकः, तेन पूर्तिः, अयं वेन इत्यस्यापवादः ॥

वैश्वदेवग्रहग्रहणे त्रीणि शता विश्वामित्रः ॥

त्रीणि शतेति त्रिष्टुब् वैश्वदेवस्य त्रिंशद्देवत्य तथाग्रयणग्रहस्य ग्रहणे पुरोरुग्ग्रहणार्था भवति । अस्या विश्वामित्रऋषिः । ये देवास इत्यस्यापवादः, अत्र वैश्वदेवशब्देन तद्देवताग्रयणग्रहणं च गृह्यते। आग्रयणस्य तद्देवत्वं "आत्मा ह वा अस्याग्रयण इति प्रकृत्य विश्वेभ्यो देवेभ्यो गृह्णातीति श्रुतेः"। मूर्धानमित्यस्याः प्रकृतिवदेव ध्रुवग्रहणे पुरोरुक्त्वात् गतिनात्र पुनरुक्ता । त्रीणि शता इत्यादिका तारमित्यनयोर्व्यूहः । मूर्ध्नि व्यूहः ॥

ऐन्द्राग्नस्याग्निर्वृत्राणि भरद्वाजः ॥

अग्निर्वृत्राणीतीमामैन्द्राग्नग्रहस्य पुरोरुचं गायत्रीं भरद्वाजऋषिरपश्यत् । इन्द्राग्नी आगतमित्यस्यापवादः ॥

वैश्वदेवस्य विश्वेभिः सोम्यं मेधातिथिः ॥

विश्वेभिः सोम्यमितीमामृचं गायत्रीं वैश्वदेवस्य पुरोरुचं मेधातिथिरपश्यत् । ओमासश्चर्षणीधृत इत्यस्यापवादः, मध्ये व्यूहः ॥

आयन्मरुत्वतीययोर्द्वे ॥

आयद्दिपे, मर्गे गर्देतीमे द्वे ऋचौ इर्याम्मरुत्वतीययोर्यथाक्रम पुरोरुचौ गृहणमस्यो त्रिष्टुभौ । आद्यं मनयत् । व्यूहेन दशकः । पुनः कृत्वापि व्यूहं कृत्वा छन्दःपूर्तिः । तत्र युक्तानि व्यूहः । इन्द्रमरुत्वइत्यस्याः पायद्दिपेऽपवादः । मरुत्वन्त वृषभमित्यस्याः मर्गेगर्दे-

ति ॥

आयत्पराशरः शाक्तयः ॥

आयद्वितीमामृचं शक्तेरपत्यं पराशरऋषिरपश्यत् ॥

अग्ने गर्हाविदुहिता विश्ववारा ॥

अग्ने शर्द्धेतीमामृचमत्रिदुहिता अत्रेः पुत्री विश्ववारा इतिना म्नी अपश्यत् ॥

त्वाठ० हि (१)भरद्वाजः ॥

त्वाए् हि मन्द्रतममितीमां त्रिष्टुभं माहेन्द्रं पुरोरुचं भरद्वाजोऽपश्यत् । अस्या अन्नम्रोऽपि माहेन्द्रग्रहणे विनियोगः कल्प्यते । कुतः इन्द्र नक्षेतिलिङ्गात्कर्तृत्वतीयपुरोरुचोऽनन्तरं पाठाच्च । मरुत्वत्यमिन्नेव क्रमे माहेन्द्रपुरोरुगुच्यते, महाँऽइन्द्रो नृवदिति । इन्द्रस्तुतिरप्यनेनैव क्रमेण माहेन्द्रपुरोरुगुच्यते । महाँऽइन्द्रो वज्रो जसेति । महाँइन्द्रो नृवदित्यस्यापवादः । यमृषे । इन्द्रं नत्वा । व्यूह ॥

त्वेऽअग्ने द्वे वृहत्यावादित्यस्य ॥

त्वे अग्ने । शुधियुत्कर्णेतीमे द्वे वृहत्यौ आदित्यग्रहगृहणे पुरोरुचौ गृहणमन्त्रौ ॥

त्विअग्ने वसिष्ठः ॥

त्वेअग्ने स्वाहुतेतीमां वृहतीमादित्यग्रहस्य प्रथमां पुरोरुचवसिष्ठर्षिरपश्यत् । प्रथमे व्यूहाभ्यामष्टकः, तृतीयपदाद्दशकः । चतुर्थः सप्तक, द्व्यूना । कदा चन स्तरीरसीत्यस्या अपवादः ॥

श्रुधिप्रस्कण्वः ॥

श्रुधिश्रुत्कर्णेतीमां वृहतीमादित्यग्रहस्य द्वितीयं । पुरोरुचं प्रस्क-

(१) अत्र द्विर्वर्णतोऽमे माहेन्द्रस्तोत्रदर्शक काण्वसर्वानुक्रमेऽस्तीति ॥

पञ्चऋषिरपश्यत् । कदा चन प्रयुच्छसीत्यस्या अपवादः ॥

आदित्यग्रहग्रहणे विश्वेषामदितिर्वामदेवो गोतमः ॥(१)

विश्वेषामदितिरितीमामादित्यग्रहस्य ग्रहणे विनियुक्तां त्रिष्टुभं वामदेवो गोतमऋषिरपश्यत् । यज्ञो देवानामित्यस्या अपवादः । अनयोर्व्यूहः । आदित्यग्रहग्रहणइति केचित्पठन्ति, "शृतो वाऽथ दधिगृह्णाति सगृह्णाति यज्ञो देवानामिति पठ्यते" । तत्र श्रुत्यनुकरणमेतत् ॥

महो अग्नेः सावित्रस्य लुशोधानाकः ॥

महो अग्नेरितीमां त्रिष्टुभं सावित्रग्रहस्य पुरोरुच लुशोधानाकऋषिरपश्यत् । वाममद्येत्यस्या अपवादः, अनायास्यो आगतो ॥

अनुक्तं गायत्रं त्रैष्टुभम् ॥

अनुक्तं अनुक्तछन्दस्कं मन्त्रजातं गायत्रच्छन्दस्कं त्रिष्टुप्छन्दस्कं च । तथैव प्रागुक्तं । इन्द्रमुदाद्विर्वपि समादृशाभां पुरोरुचामसेमेव अतिपेतंस्वेव गृहेषु विनियोगः कल्प्यः । समाप्ता त्रिष्टुप् ॥ १० ॥

सर्वमेधे यूपस्तं इन्द्रस्तुत्युक्थ्यो द्वितीयमहर्भवतीति प्रकाश्य तत्रैन्द्रा ग्रहा भवन्त्यैन्द्र्यः पुरोरुच सर्वमैन्द्रमहरिति । तत्रैन्द्रीः पुरोरुच प्रदर्शयति ॥

इन्द्रस्तुत्युक्थ्ये द्वितीयेऽहन्यैन्द्र्यः पुरोरुचो द्वादशप्रतीकचोदिते च द्वे तिस्रस्य ॥

इन्द्रस्तुतस्तु उक्थ्यउक्थमन्थ्ये सर्वमेधस्य द्वितीयेऽहनि चापयितिस्त्युरित्यादि इमास्तु अस्मा द्वादशऋच । तथा । तं प्रत्नथा, अ-

(१) आदित्यगृह आदित्यग्रहणे काण्वसर्वानुक्रमपाठो भेदः ॥

यं वेनश्चोदयत्पृश्निगर्भा इति प्रतीकचोदिते च, तथा महाँ इन्द्रो य ओजसा, कदा चन स्तरीरसि, कदा चन प्रयुच्छसीत्येतास्तिस्रः प्रतीकचोदिताधेत्येवमन्ताः सप्तदशर्च ऐन्द्रय इन्द्रदेवत्या, पुरोरुचो भवन्ति, ऐन्द्रवायवादिमाविचाल्याना ग्रहाणां अविनष्टक्रमेण ग्रहणमन्त्रा भवन्तीत्यर्थः । एवं सप्तदशैन्द्र्य पुरोरुचः सम्पन्नाः ॥

आपश्चिद्वसिष्ठः ॥

आपश्चिदितीमां त्रिष्टुभं ऐन्द्रवायवस्य प्रथमां पुरोरुचं वसिष्ठ ऋषिरपश्यत् । आवायवित्यस्या बाधः, आपश्चित् । चतुर्थोद्गमकः ॥

गावऽउप पुरुमीढाजमीढौ ॥

गावउपेतीमां गायत्रीं ऐन्द्रवायवस्य द्वितीयां पुरोरुचं पुरुमीढा ह्वौ अपश्यतां । इन्द्रवायूइत्यस्या अपवादः ॥

यद्द्य वसिष्ठः ॥

यदद्य सूरइतीमां गायत्रीं मैत्रावरुणपुरोरुचं वसिष्ठोऽपश्यत् । अयं वामित्यस्या अपवादः ॥

आसुतेऽसुनीतिः ॥

आसुतइतीमां गायत्रीं आश्विनपुरोरुचं असुनीतिर्ऋषिरपश्यत् । आवामित्यस्या अपवादः । द्वितीये व्यूहः । तं प्रत्नथा, अयं वेनइत्यनयोः शुक्रामन्थिग्रहणे विनियोगः ॥

आतिष्ठन्तं विश्वामित्रः ॥

आतिष्ठन्तमितीमामृचं त्रिष्टुभं आग्रयणग्रहपुरोरुचं विश्वामित्रोऽपश्यत् । ये देवासइत्यस्या बाधः ॥

प्रथः सुचीकः ॥ (१)

प्रवो महइतीमां त्रिष्टुभं ध्रुवग्रहणपुरोरुचं सुचीकऋषिरपश्यत् ।

---

(१) सुचीकस्तत पाठः ॥

भवान्तो जगती । मूर्द्धानमित्यस्या बाधः ॥

बृहन्निदिन्द्र गोकः ॥

बृहन्निदितीमां गायत्रीमैन्द्राग्नपुरोरुचं त्रिशोकऋषिरपश्यत् । इन्द्राग्नीइत्यस्या बाधः । आद्य. सप्तकः ॥

इन्द्रेहि मधुच्छन्दाः ॥

इन्द्रेहि मत्स्यन्धसइतीमां गायत्रीं वैश्वदेवपुरोरुचं मधुच्छन्दा अपश्यत् । ओमासइत्यस्या बाधः ॥

इन्द्रो वृत्रं विश्वामित्रः ॥

इन्द्रो वृत्रमिति त्रिष्टुभं मरुत्वतीयपुरोरुचं विश्वामित्रोऽपश्यत् । इन्द्र मरुत्वइत्यस्या बाधः ॥

कुत्स्त्वमगस्त्यः ॥

कुतस्त्वमित्येतां त्रिष्टुभं मरुत्वतीयपुरोरुचमगस्त्यऋषिरपश्यत् । आद्यो व्यूहेन दशकः । तैर्नैकेन । मरुत्वन्तमित्यस्या अपवादः । प्रतीकचोदितासु त्रिसृषु महाँइन्द्रइत्यस्या माहेन्द्रग्रहणे विनियोगो लिङ्गात् । मृषदित्यस्यापवादः । कदा चनेत्यनया प्रकृतिवदादित्यग्रहणं ॥

आतन्निरीविति: शाक्त्यः ॥ (१)

आतस इति त्रिष्टुभं शाक्त्यौरीवितिरपश्यत् । आदित्यग्रहस्य द्रष्टा अयमेव विनियोगः । अथ द्वितीयतृतीययोर्व्यूहः । यज्ञो देवानामित्यस्या अपवादः ॥

इमां ते कुत्सो जगती ॥

इमां ते धियमिति जगतीं सावित्रपुरोरुचं कुत्सोऽपश्यत् । वाममद्यापवादः ॥

(१) शाक्त्यगौरीविति॰पाठः ॥

अनुक्तं गायत्रं त्रैष्टुभम् ॥

यस्यां कण्डिकायामनुक्तछन्दस्कं मन्त्रगणं यथासम्भवं गायत्रं त्रैष्टुभं वा तयैवोदाहृतं । इतीन्द्रस्तुत्समासः ॥ १८ ॥

अथ सूर्यस्तुत् । सर्वमेधएव श्रूयते । सूर्यस्तुदुक्थ्यस्तृतीयमहर्भवति इति प्रकृत्य तस्य सौर्या गृहा भवन्ति, सौर्यः पुरोरुचः सर्वं सौर्यमसदिति । तत्र सौरीः पुरोरुचोऽत्र दर्शयति ॥

सूर्यस्तुत्युक्थ्ये तृतीयेऽहनि सौर्यश्चतुर्दश पुरोरुचस्तिस्रश्च प्रतीकोक्ताः ॥

विभ्राड्बृहदित्यारभ्याकृष्णेनेत्येतत्पर्यन्ता यश्चतुर्दश ऋचः, तं प्रत्नथाऽयं वेनश्चित्रं देवानामित्येतास्तिस्रः प्रतीकचोदिताश्चेत्येवं सप्तदश ऋचः सूर्यस्तुत्सञ्ज्ञकउक्थ्यसर्वमेधस्य तृतीयेऽहनि पुरोरुचो भवन्ति । ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां पूर्वोक्तक्रमेण षड्यमन्त्रा भवन्तीत्यर्थः ॥

विभ्राड्बृहज्जगतीं विभ्राट्सौर्यः ॥

विभ्राड्बृहदित्येतां जगतीमैन्द्रवायवपुरोरुचं सूर्यपुत्रो विभ्राडपश्यत् । विभ्राड्बृहत् व्यूहः ॥

उदुत्यं तिस्रः प्रस्कण्वः ॥

उदुत्यं, येनापावक, दैव्यावध्वर्यू इत्येतास्तिस्रः प्रस्कण्वोऽपश्यत् । उदुत्यमित्यैन्द्रवायवस्य द्वितीयापुरोरुक् । येनापावकेति मैत्रावरुणस्य दैव्यावध्वर्यू इत्याश्विनस्य । इन्द्रो विश्वाय व्यूहः । त्वचकणेति च । रथेनेति च प्रतीकचोदितासु तिसृषु तं प्रत्नथाऽयं वेनइत्येतयोः प्रशास्तृब्राह्मणाग्नीध्रगृहणे विनियोगः । चित्रं देवानामित्यच्छावाकग्रहणे ॥

मानोऽगस्त्यः ॥

मानदर्शाभिरितीमां त्रिष्टुभं भुवस्य पुरोरुचमगस्त्योऽपश्यत् ।

यदद्य युतकक्षसुतंकक्षौ ॥

यदद्य कच्चेति गायत्रीं ऐन्द्राग्नपुरोरुचं युतकक्षसुतंकक्षौ ।
द्वावृषी अपश्यतं । द्वितीयः सप्तकः ॥

तरणिः प्रस्कण्वः ॥

तरणिर्विश्वदर्शतइतिगायत्रीं वैश्वदेवपुरोरुचं प्रस्कण्वोऽपश्यत् ।
द्वितीयः सप्तकः ॥

तत्सूर्यस्य द्वे कुत्सः ॥

तत्सूर्यस्य, तन्मित्रस्येतीमे द्वे ऋचौ त्रिष्टुभौ क्रमेण मरुत्वतीययोः
पुरोरुचौ कुत्सऋषिरपश्यत् ॥

बण्महाँ द्वे जमदग्निर्बृहतीसतोबृहत्यौ ॥

बण्महा,न्बटसूर्येति द्वे बृहत्यौ जमदग्निऋषिरपश्यत् । बण्मः
हानित्यस्य माहेन्द्रग्रहणे विनियोग । बटसूर्येत्यस्यां आदित्यस्य प्रथ-
मे गृहणे । बण्महान् । सप्तक । बटसूर्य । द्वसकः ॥

आयन्तऽइव नृमेधो बृहती ॥

आयन्तइतिबृहतीमादित्यस्य पुनर्ग्रहणे पुरोरुका अस्या नृमेधऋ
षि, आद्य सप्तकः ॥

अद्या देवाः कुत्सः ॥

अद्या देवा इतित्रिष्टुप् । कुत्सऋषिः । ऽस्या आदित्यग्रहे विनि-
योगः । आद्ये व्यूह ।

आकृष्णेन हिरण्यस्तूपआङ्गिरसः ॥

आकृष्णेनेति त्रिष्टुभं साविञपुरोरुचमाङ्गिरसः पुत्रो हिरण्य
स्तूपोऽपश्यत् । द्वितीये व्यूह , ॥

अनाख्यातं सौर्यं गायत्रं त्रैष्टुभम् ॥

अत्र कण्डिकायामनाम्नातं छन्दस्कं सम्प्रगणं यथायोगं गायत्रं त्रै-ष्टुभं च ज्ञेयम् । इति सूर्यस्तुत्समाप्ता । अथ वैश्वदेवस्तुत् । सर्वमे-धएव श्रूयते । वैश्वदेवश्चतुर्थमहर्भवतीति प्रकृत्य तस्य वैश्वदेवा ग्र-हा भवन्ति वैश्वदेव्यः पुरोरुच इति । तत्र वैश्वदेवीः पुरोरुचोऽत्र द-र्शयति ॥ १८ ॥

वैश्वदेवस्तुतिचतुर्थेऽहनि वैश्वदेव्यः पुरोरुचएका-दशषट्प्रतीकोक्ताः ॥

प्रवावृजे सुप्रयेत्याद्या देवेभ्यो हीत्यन्ता एकादशर्चः, तत्प्रतथा। प्रायं वेन । ये देवास, पान ऽइडाभि । विश्वेभि सौम्य मधु । ओमा-सश्चर्षणीधृतइत्येताः षट्प्रतीकर्चोदिताश्चत्तिसैवं सप्तदशर्चो विश्वदेवदेवत्या वैश्वदेवस्तुत्सञ्ज्ञे सर्वमेधस्य चतुर्थेऽहनि ऐन्द्रवाय वादित्या साविभाज्जाना पुरोरुचो भवन्ति ग्रहणमन्त्रा भवन्तीत्य-र्थः ॥

प्रवावृजे वसिष्ठस्त्रिष्टुभम् ॥

प्रवावृजइति त्रिष्टुभं ऐन्द्रवायवपुरोरुचं वसिष्ठोऽपश्यत् । चतुर्थे व्यूढः ॥

इन्द्रवायू बृहस्पतिं द्वे मेधातिथि ॥

इन्द्रवायू । वरुण प्राविता सि द्वे गायत्र्यौ मेधातिथिरपश्यत् । इन्द्रवायूइत्यस्या ऐन्द्रवायुरस्य पुनर्ग्रहणे विनियोग । वरुणइत्यस्य मैत्रावरुणग्रहणे ॥

अधि नः कुमीदी काण्वः ॥

अधिनइत्येता गायत्रीताग्निमपुरोरुच काण्वपुत्रः कुमीदो प-श्यत् । पादपङ्क्ति । द्वितीयो व्यूहेन सप्त ,वसोर्थोऽष्टक ,तेनैव व-र्द्धमानागायत्री । यस्यास्तु पट्पदाष्टक सा वर्द्धमानेत्युक्तं । प्रतीका-

चोदितास्त्र, । तां प्रत्यवेतिमृक्पश्य गृहपती पुरोरुक् । अयं वेन इतिम-
न्थिनः, ये देवास इत्याग्रयणस्य । आगन्हर्हामिरितिधृवस्य । विश्वेभि-
सोम्यमित्यैन्द्राग्नस्य । सोमा असृग्रमिति वैश्वदेवस्य ॥

अग्नऽइन्द्र प्रतिक्षत्रः ॥

अग्न इन्द्र इति त्रिष्टुभं प्रथममरुत्वतीयपुरोरुचं प्रतिक्षत्रो ऽप-
श्यत् । तृतीये व्यूह ॥

इन्द्राग्नी मित्रावरुणा जगतीं काश्यपो वत्सारः ॥

इन्द्राग्नी इति जगतीमग्नन्त्रमरुत्वतीयपुरोरुचं काश्यपपुत्रो व-
त्सारऋषिरपश्यत् । चाद्ये व्यूह । चतुर्थरुकादशकः ॥

अस्मे रुद्राः प्रगाथः ॥

अस्मे रुद्रा मेहनेतीमां त्रिष्टुभं माहेन्द्रपुरोरुचं प्रगाथऋषि
रपश्यत् ॥

अर्वाञ्चोऽअद्य कूर्मो गार्त्समदः ॥

अर्वाञ्चो अद्येति त्रिष्टुभ आदित्यस्य प्रथमपुरोरुचं गृत्समदपुत्रः
कूर्मऋषिरपश्यत् ॥

विश्वेऽअद्य लुशोधानाकः ॥

विश्वेऽअद्येतीमां त्रिष्टुभं आदित्यस्य पुनर्ग्रहे पुरोरुचं धाना-
कपुत्रो लुशऋषिरपश्यत् । द्वितीये व्यूह ॥

विश्वेदेवाः सुहोत्रः ॥

विश्वेदेवा. शृणुतेमां त्रिष्टुभं सुहोत्रऋषिरपश्यत् । आदित्यग्र-
हस्य दधा श्रपणे चास्य विनियोग ॥

देवेभ्यो हि वामदेवो जगतीम् ॥

देवेभ्यो हि प्रथममिति जगतीं सावित्रपुरोरुचं वामदेवोऽपश्यत् ।

प्रथमतृतीयचतुर्थेषु व्यूहः ॥

अनुक्तं गायत्रं त्रैष्टुभम् ॥

अस्मिन्प्रवायुजहल्लेकादशर्चे अनुक्तं छन्दस्कं मन्त्रगणं गायत्रं त्रैष्टुभं च ज्ञेयं । तथैव प्रागुदाहृत इतिपैप्पलदेवस्तुक्तः ॥ ३० ॥

अथानारभ्याधीतं मन्त्रगणमवाकपितृमेधादादित्ययाज्ञवल्क्यौ ददृशतुः ॥

अथानन्तरमवाकपितृमेधात् । अपितोयंत्वित्ययमध्यायः पितृमेधः तेनायमर्थः । प्रवायुमित्यत आरभ्यापितो यन्त्वपयन्त्वित्यतस्मात्प्राग्वर्तमानं मन्त्रगणं मन्त्रसमूहं आदित्ययाज्ञवल्क्यावृषी ददृशतुः । कीदृशं मन्त्रगणं अनारभ्याधीतं । कञ्चन कर्मविशेषमारभ्योपक्रम्याधीतमारभ्याधीतं, न आरभ्याधीतमनारभ्याधीतं । श्रौतकर्मविशेषे क्वाप्यविनियुक्तमित्यर्थः ॥

प्रवायुं पञ्चदशर्चः पुरोरुग्गणो द्वे च प्रतीकोक्ते ॥

प्रवायुमच्छेत्यतआरभ्य पञ्चदश संख्या ऋचस्तं प्रतया, अयं वेनइतीमे द्वे प्रतीकोक्ते चेत्येवं सप्तदशर्गात्मकः पुरोरुग्गणः पुरोरुक्समूहः ॥

प्रवायुस्त्रृजिश्वः ॥

प्रवायुमितीमां त्रिष्टुभं ऋजिश्वऋषिरपश्यत् । लिङ्गाद्वायुर्देवता । इन्द्रवायूइत्यस्याः सर्वं प्रागुक्तम् ॥

मित्रं०ँहुवे द्वे मधुच्छन्दाः ॥

मित्रंँ० हुवे, दस्रायुवाकवइतीमे द्वे गायत्र्यौ मधुच्छन्दाऽपश्यत् ॥

मित्रं लिङ्गोक्ता ॥ (१)

(१) लिङ्गोक्तदेवत्या । इति पाठान्तरः ॥

मित्र्ठ० हुवे तृतीयमृक्लिङ्गोक्ता मित्रावरुणदेवता ॥

दस्रा युवाकवऽआश्विनी ॥

दस्रेत्येषा अश्विदेवत्या । सं प्रश्नयाऽथ वेनदत्यनयोरुक्तम् ॥

विदद्यदैन्द्रीं कुशिकः ॥

विदद्येतीमां त्रिष्टुभं इन्द्रदेवत्यां कुशिकोऽपश्यत् । द्वितीयतृतीयचौर्थ्यूहः ॥

नहि स्पशं विश्वामित्रो वैश्वानरीम् ॥

नहि स्पशमितीमा त्रिष्टुभं वैश्वानरदेवता विश्वामित्रोऽपश्यत् । द्वितीयो दशकः । तृतीयो द्वादशक, तेन पूर्तिः ॥

उग्रा विघनिनैन्द्राग्नीं भरद्वाजः ॥

उग्रा विघनिनेतीमां गायत्रीमिन्द्राग्निदेवतां भरद्वाजोऽपश्यत् । द्वितीयसप्तकः ॥

उपास्मै सौमीं देवलोऽसितो वा ॥

उपास्मै गायतेतीमां गायत्रीं सोमदेवत्यां देवलो वा असितो वा ऋषिरपश्यत् । द्वितीये व्यूह ॥

ये त्वा विश्वामित्रः ॥

ये त्वा हि हत्यइतीमां त्रिष्टुभं विश्वामित्रऋषिरपश्यत् । इन्द्रो देवता । चतुर्थे व्यूह ॥

जनिष्ठाऽउग्रो गौरीवितिः ॥

जनिष्ठाऽउग्रइतीमां इन्द्रदेवत्यां त्रिष्टुभं गौरीवितिरपश्यत् ॥

आ तु वामदेवः ॥

आ तून इन्द्रेतीमामृचमिन्द्रदेवत्यां गायत्रीं वामदेवोऽपश्यत् ॥

तृचऐन्द्राः ॥

ये त्वा हि हत्ये । जनिष्ठाउग्र, आ तून इत्यय तृच ऐन्द्रदेवतः ॥

त्वमिन्द्र द्वौ नृमेधः पथ्याबृहतीसतोबृहत्यौ ॥

त्वमिन्द्र, प्रभुत, इतीमे च द्वे ऐन्द्री इन्द्रदेवत्ये ऋचौ क्रमेण पथ्याबृहतीसतोबृहत्यौ नृमेधऋषिरपश्यत्। त्वमिन्द्रेति पथ्याबृहती। प्रभुनइति सतोबृहती। त्वमिन्द्र, त्व तूर्ण, व्यूह ॥

यज्ञो देवानां कुत्सः ॥

यज्ञो देवानामितित्रिष्टुभमादित्यदेवत्यां कुत्सऋषिरपश्यत। आदित्ययाज्ञवल्क्याभ्यां कुत्सस्य बाधो मा भूदितिपुनरुक्तं। अतएव विना वचनं पूर्वोक्तऋषिर्न भवतीति ज्ञास्यते ॥

अदब्धेभिः सावित्रीं जगतीं भरद्वाजः ॥

अदब्धेभिरितीमां सवितृदेवत्यां जगतीं भरद्वाजोऽपश्यत् ॥ २१ ॥

प्रवीरया पञ्चदशर्चः पुरोरुग्गणो द्वे च प्रतीकोक्ते ॥

प्रवीरयेत्याद्या, अदब्धेभिरित्यन्ताः पञ्चदशसङ्ख्या ऋचः, तं प्रत्नथाऽयं वेनइति द्वे प्रतीकचोदिते चेत्येवमेव सप्तदश पुरोरुग्गणः पुरोरुचां व्यूहः ॥

प्रवीरया वसिष्ठो वायव्याम् ॥

प्रवीरयेति त्रिष्टुभं वायुदेवतां वसिष्ठोऽपश्यत्। अन्त्ययोर्व्यूह.। गावउपेत्यस्य प्रागुक्तम् ॥

काव्ययो राजानेषु दक्षः ॥

काव्ययोरितीमां गायत्रीं मित्रावरुणदेवतां दक्षोऽपश्यत्। दैव्याध्वर्यू, तं प्रत्नथाऽयं वेन इत्येतेषां प्रागुक्तम् ॥

तिरश्चीनः परमेष्ठीप्रजापतिर्भाववृत्तम् ॥ (१)

तिरश्चीनो विततः इत्येतामृचं भाववृत्तसंज्ञं परमेष्ठीप्रजापतिरपश्यत्। प्रजापतिर्वै परमेष्ठीत्यर्थ। भाववृत्तं भावानां पदार्थ-

(१) तृचामेरणाधकः कात्यसर्वानुक्रमपाठो बोध्यः ॥

ना वृत्ति सूर्ध्यादिवृत्तिर्यस्य देवता । तद्भाववृत्त । यस्य भाववृत्त देवता विश्वे देवा देवता वा ॥

आ रोदसी जगतीं विश्वामित्र ॥

आ रोदसी इतोमास्य जगती वैश्वानरदेवता विश्वामित्रोऽपश्यत् । आद्ये व्यूह ॥

उक्थेभिर्द्वे वृत्रहन्मावसिष्ठ ॥

उक्थेभि रतीमा गायत्री वसिष्ठोऽपश्यत् । इन्द्राग्नी देवता ॥

उपनः सुहोत्रो वैश्वदेवीम् ॥

उपन सूनवइतोमा गायत्रीं विश्वेदेवदेवता सुहोत्रऋषिरपश्यत् । द्वितीये व्यूह ॥

ब्रह्माणि मेऽगस्त्य. द्वे इन्द्रमरुत्वांदे ॥

ब्रह्माणि मे । अनुत्तमानऽइतीम द्वे ऋचौ त्रिष्टुभौ इन्द्रमरुत्वांदे अगस्त्य ऋषिरपश्यत् । इन्द्रोमरुत्वान्मय देवता । आद्याक्षते व्यूह ॥

तदिदासथर्वणा बृहद्दिव ॥

तदिदासेतीमामृच त्रिष्टुभमथर्वण पुत्रो बृहद्दिवऋषिरपश्यत् । अस्या महेन्द्रदेवता ॥

इमाऽउ त्वा द्वे बृहत्यौ मेधातिथिः ॥

इमाउ त्वा, यस्यायमितिद्वे ऋचौ बृहत्यौ मेधातिथिर्ऋषिरपश्यत् । अनयोरादित्यो देवता । अष्टाये । व्यूह ॥

अयठं सहस्रं मेधातिथि. सतोबृहतीम् ॥

अय सहस्रमितीमामृच सतोबृहती मेधातिथिरपश्यत् । अस्यामादित्यो देवता । चतुर्थी व्यूह । अदृश्रमित्यस्योक्षम् ॥ ३३ ॥

आनस्त्वयोदशर्च पुरोरुग्गायामहर्कर्च्चं प्रतीकयो-

दितं च ॥

आनो यज्ञमित्यारभ्याध्यायसमाप्तिपर्यंतायतुर्दशसंख्याऋच इमा ऽउ त्वा, अध्यायमयठं० सहस्त्रमद्वैकगुणइतीदं प्रतीकचोदितं चतुर्ऋचं चेत्येवमृचां सप्तदशकः पुरोरुगणः । ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां ग्रहग्रहणमन्त्राणां समूहः ॥

आनो वायव्यां जमदग्निः ॥

आनो यज्ञमितीमामृचं बृहतीं वायुदेवतां जमदग्निर्ऋषिरपश्यत् । तृतीयएकादशकस्तिस्रैकोना ॥

इन्द्रवायू सुसंदृशेन्द्रवायव्यां तापसः ॥

इन्द्रवायू सुसंदृशेतीमां बृहतीमिन्द्रवायुदेवतां । तापसऋषिरपश्यत् ॥

ऋधगित्था मैत्रावरुणीं जमदग्निः ॥

ऋधगित्थ तीमा बृहतीं मित्रावरुणदेवतां जमदग्निऋषिरपश्यत् । आद्ये व्यूहः ॥

आयातमाश्विनीं वसिष्ठः ॥

आयातमितीमां बृहतीमश्विदैवत्यां वसिष्ठोऽपश्यत् । तृतीये व्यूहः ॥

प्रैतु वैश्वदेवीं कण्वः ॥

प्रैतु ब्रह्मणस्पतिरिति बृहतीं विश्वेदेवदेवतां कण्वऋषिरपश्यत् । पादयोर्व्यूहः । तृतीय एकादशः ॥

चन्द्रमा अप्स्वैन्द्रीमाकृतिमपश्यामवादिनीं त्रितऽआप्त्यः ॥

चन्द्रमा अप्स्विति बृहतीमिन्द्रदेवतामाकृतिं परिवादवतीं त्रितऽआप्त्यऋषिरपश्यत् । आद्ये व्यूहः ॥

देव देवं वो मनुर्वैवस्वतो वैश्वदेवीम् ॥

देव देवं वहतीमा बृहतीं विश्वदेवदेवत । विवस्वतोऽपत्य मनुर्ऋ विरपश्यत् । आद्यान्त्ययोर्व्यूह ॥

दिवि पृष्टो मेधऐन्द्र ॥

दिवि पृष्टवतीम बृहतीम । इन्द्रपुत्रो मेधा ऋषिरपश्यत् । वैश्वानरो देवता ॥

इन्द्राग्नोऽअपात्सुहोत्र ॥

इन्द्राग्नीऽअपादितोमा बृहतीं सुहोत्रऋषिरपश्यत् । इन्द्राग्नीदेवता । प्रथमद्वितीयचतुर्थपु व्यूह ॥

देवासो हि मनु ॥

देवा सो हीतीमा सतोबृहतीं मनुरपश्यत् । विश्वे देवादेवता ॥

अपाधमद्द्वे नृमेधः ॥

अपाधमत् । मवऽऽतीमे द्वे । नृमेधऋषिरपश्यत । तत्रापाधमदिति सतोबृहती । यवदति बृहती इन्द्री मरुत्वान्उभयोर्देवता ॥ यथेन्द्रा । व्यूह । मरुतो ब्रह्म । व्यूह ॥

अस्मेत्मे धातिथि ॥

अस्मे दिन्द्रवतीमां सतोबृहती मेधातिथिरपश्यत । महेन्द्रोदेवता ॥ आद्ये व्यूह । प्रतीकोक्तानां सर्व प्रागुक्तम् ॥

दशाद्ये कादश्यन्त्या च सतोबृहत्य ॥

आ.ना. यद्यमितवयोदशचें दशकी,देवासा हिमे त । एकादशी अपाधमदित अन्त्या वाऽस्येद्रिन्द्रइति एता‌श्चास्त सतोबृहत्य । "अयुजो जागती सतोबृहती स तम्लक्षणम्" ॥

शेषा बृहत्य. शेषा बृहत्य. ॥

दशम्य का दश्यन्त्याभ्योऽन्या शेषा दश ऋचो बृहत्य बृहतीछन्द

स्त्राः । द्विरस्यासोऽध्यायपरिसमाप्तिज्ञापनार्थः । इतिश्रीविरचितस्मात्स्वपतिविरचितकतुस्नमहायाम्निकार्यीदेवकृते सर्वानुक्रमणिकाव्याख्याने तृतीयोऽध्यायः ॥ •

यज्जाग्रतः षड्चं मानसं त्रैष्टुभं० शिवमङ्कलपः ॥

यज्जाग्रतः । येन कर्माणि । यत्प्रज्ञानं, येनेदं, यस्मिन्नृचः । सुषारथिरित्येतत्षडृचं मानसं मनोदेवतं त्रिष्टुप्छन्दस्कं शिवसङ्कल्पऋषिरपश्यत । अथवा शिवसङ्कल्पइतिमन्त्राः । ऋषी त्वादित्यगाभ्रवस्त्वैव । तद्दु सुगाथ द्वौ ब्यूहौ । यज्ञाभावतीत चयोदशकाः । तेन दृष्यधिका, नेनीयतै द्वादशकः ॥

पितुं नु स्तोषमष्टावौष्णिहमगस्त्योऽन्त्यस्तुतिम् ॥

पितुं नु स्तोषमित्यष्टासु प्याहमगस्त्यऋषिरपश्यत् । इयमन्य स्तुति । अन्नदेवतेत्यर्थ, अत्राद्य पञ्चकः । ततस्त्रयोऽष्टकाः । तृतीये व्यूह । अन्त्यामनुष्टुब्गर्भोष्णिगुच्यते । अयाद्य पञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भेतिवचनात् ॥

अन्विदनुमते चत्वार्यानुष्टुभम् ॥(१)

अन्विदनुमतद्र्येतच्चतुर्ऋचमनुष्टुप्छन्दस्काम् ॥

द्वयोरनुमतिः ॥

अस्मिन्चतुर्ऋचाद्याद्ययोर्द्वयोर्ऋचोरन्वित्, अनुनद्येतयोरनुमति देवता । अन्विद्व्यूह । अनुनः व्यूह ॥

द्वयोः सिनीवालि सरस्वत्यौ ॥

अस्मिन् चतुर्ऋचेऽन्त्ययोर्द्वयोर्ऋचोः सिनीवाल्लि पृथुष्टुकद्द्यनयोः सिनीवालिसरस्वत्यौ यथाक्रमं देवते । मो देवी व्यूह ॥

सिनीवालि पृथुष्टुके द्वे गृत्समदः ॥

(१) आन्वदनुमते चत्वार्यानुष्टुभमष्टारा । शौनकान्वसयानुक्रमपाठो दृश्य. ॥

सिनीवालि पृथुष्टुके पञ्चनवद्यनौमि द्वे ऋचौ गृत्समदऋषिरपश्यत् ॥

त्वमग्ने द्वे आग्नेय्यौ जगत्यौ हिरण्यस्तूपाङ्गिरस ॥

त्वमग्ने प्रथमः, त्वं नो अग्ने तव देवेतीमे द्वे ऋचावग्निदैवत्ये । जगत्यौ अङ्गिरसः पुत्रो हिरण्यस्तूपोऽपश्यत् । त्वमग्ने । त्वं नो । व्यूह । सर्वोना द्वयो र्दौ व्यूहो ॥

उत्तानायां द्वे दैवश्रवा दैववातश्च भारतौ ॥

उत्तानायामव । इडायास्त्वेतीमे द्वे ऋचावग्निदैवत्यौ भरतपुत्रौ देवश्रवा दैववातश्चेतौ द्वौ ऋषी अपश्यतां, आग्नेय्याविव्यनुवर्तते ॥

आद्या त्रिष्टुप् ॥

पूर्वोक्तयोर्द्वयोराद्या उत्तानायामित्येषा त्रिष्टुप् ॥

द्वितीयाऽनुष्टुप् ॥

इडायास्त्वेति द्वितीयाऽनुष्टुप् । नाभा । व्यूह. ॥

प्रमन्महे नोधा इत्यृषमैन्द्रं त्रैष्टुभम् ॥

प्रमन्महे शवोमहे, इत्येतदृचमिन्द्रदैवत्यं त्रिष्टुपछन्दस्कं नोधाऋषिरपश्यत । शवोमार्के । आङ्गूष । व्यूह ॥

इच्छन्ति त्वा त्र्यृषमैन्द्रं त्रैष्टुभमेव दैवश्रवा दैववातश्च भारतौ ॥

इच्छन्ति त्वा, न ते दूरे, इत्येतदृचं इन्द्रदैवत्यं त्रिष्टुपछन्दस्कमेव भारतौ भरतपुत्रौ दैववातश्च्रौ अपश्यतां, इच्छन्ति व्यूह. ॥ ६ ॥

अषाढंयुस्त्र, गोतमश्चतुर्ऋचं त्रैष्टुभं॰सौम्यम् ॥

अषाढं युत्सु, सोमो धेनुं, त्वमिमा,देवेन,नवृत्येतश्चतुर्ऋचं त्रिष्टुप् छन्दस्कं सोमदेवत्यं गोतमऋषिरपश्यत् । स्वर्षामप्सा, सोमो वीर । व्यूह । सादन्यं । द्वौ व्यूहौ । त्वमिमा । व्यूह । त्वमपः । द्वौ व्यूहौ, त्वमाततन्थ । द्वौ व्यूहौ । त्वं ज्योतिषा । व्यूहः । रायो भागं । द्वादशकः । मा त्वा तनत् । व्यूह ॥

अष्टौ व्यख्यश्चतुर्ऋचं त्रैष्टुभं॰ सावित्रमाङ्गिरसो हिरण्यस्तूपः ॥

अष्टौ व्यख्यत् हिरण्यस्तूपइत्येतश्चतुर्ऋचं सवितृदेवतं त्रिष्टुप्छन्दस्कं अङ्गिरसोऽपत्यं हिरण्यस्तूपऋषिरपश्यत् ॥

द्वितीया जगती ॥

अत्र चतुर्ऋचे हिरण्यपाणिः सवितेत्येषा द्वितीया जगती । अष्टौ वि, भीषन्त । दधत् । व्यूहः । ब्राह्मणेन द्वादशकः । सुमृडीकः, द्वौ व्यूहौ । ये ते व्यूह. ॥

उभा पिबतमाश्विनं तृचम् ॥

उभापिबतं । अप्नस्वतीमश्विना, द्युभिरक्तुभिरित्येतत्तृचं आश्विनं । अश्विदेवतम् ॥

उभापिबतं प्रस्कण्वो गायत्रीम् ॥

उभा पिबतं इतीमामृचं गायत्रीं प्रस्कण्वोऽपश्यत् ॥

अप्नस्वतीमश्विना त्रिष्टुभौ कुत्सः ॥

अप्नस्वतीमश्विना, द्युभिरक्तुभिरितीमे ऋचौ त्रिष्टुभौ कुत्सऋषिरपश्यत् । अद्यत्ये । द्वौ व्यूहौ । ब्राह्मणेनेत्यत्र प्रागुक्तम् ॥

आ रात्रि पार्थिवं बृहतीं॰ रात्रिदेवत्यां कश्यपो भरद्वाजदुहिता ॥

आरात्रि पार्थिवमितीमामृचं रात्रिदेवत्यां पथ्याबृहतीं भरद्वाजदुहिता कशिपानाम्नी अपश्यत् ॥

उपस्तदुपर्यां परोष्णिहं गोतम ॥

उपस्तादितीमामृचमुपर्या उर्वीदेवता परोष्णिहं परोष्णिक्छन्दस्कां गोतमऋषिरपश्यत् ॥

प्रातरग्निं वसिष्ठः सप्तर्चम् । (१)

प्रातरग्निं, प्रातर्जितं, भगप्रणेत, उतेदानीं । भग एव । समध्वराय । अश्वावतीरित्येतत्सप्तर्चं वसिष्ठऋषिरपश्यत् ॥

आद्या जगती बहुदेवत्या ॥

अस्मिन्सप्तर्चे आद्या प्रातरग्निमित्येषा जगतीछन्दस्का बहुदेवत्या अग्नीन्द्रमित्रावरुणाश्विभगपूषब्रह्मणस्पतिसोमरुद्रदेवतेत्यर्थः । चतुर्थ एकादशकं ॥

पञ्च भगदेवत्यास्त्रिष्टुभ ॥ (२)

प्रातर्जितमित्याद्याः पञ्च ऋचो भगदेवत्यास्त्रिष्टुभः । राजा चिद्यं । भग प्रणेतः । उतेदानीं । उतोदिता । वयं देवानां । तेन वयं । समध्वराय । एषु व्यूहः ॥ रथमिव । द्वादशकं ॥

अन्त्योषस्या ॥ (३)

त्रिष्टुबित्यनुवर्तते । अश्वावतीरित्येषा त्रिष्टुप् सप्तर्चस्यान्त्या उषस्या उषादेवतेत्यर्थः ॥ पञ्चमो व्यूहः ॥

पूषन्तव सुहोत्रः ॥

पूषन्तवेतीमामृचं सुहोत्रऋषिरपश्यत् ॥

---

(१) प्रातर्जितं भग वासिष्ठो भगदेवत्यां त्रिष्टुभम् ॥

(२) प्रातर्जितं भग वासिष्ठो भगदेवत्यां त्रिष्टुभमिति काण्वसर्वानुक्रमपाठः ॥

(३) इदं काण्वसर्वानुक्रमे नास्ति ॥

पथस्पथः परिपतिस्त्रिष्टुभ् ॥

पथस्पथइतीमामृजिश्वऋषिरपश्यत् ॥

एते पौष्ण्यौ गायत्रीत्रिष्टुभौ ॥

एते ऋचौ पूर्वं तव पथस्पथ, इत्येते पौष्ण्यौ पूषदेवत्ये यथाक्रमं गायत्रीत्रिष्टुभौ । पूषमिति गायत्री । पथस्पथइति त्रिष्टुप् । कामेन । सखो दासत् ॥

त्रीणि पदा वैष्णव्यौ गायत्र्यौ मेधातिथिः ॥

त्रीणि पदा, तद्विप्रास इतीमे विष्णुदेवते गायत्रीछन्दस्के मेधातिथिऋषिरपश्यत् । विष्णुर्गोपाः । व्यूहः ॥

घृतवती भुवनानां भरद्वाजो द्यावापृथिव्या जगतीम् ॥(१)

घृतवती भुवनानामितीमामृचं द्यावापृथिवीदेवतां जगतीछन्दस्कां भरद्वाजऋषिरपश्यत् ॥

ये नो लिङ्गोक्तदेवतां त्रिष्टुभं विहव्यः ॥

ये नः सपत्ना इतीमामृचं लिङ्गोक्तदेवतां त्रिष्टुभं विहव्यऋषिरपश्यत् । इन्द्राग्नी वसवो रुद्रा आदित्याश्च लिङ्गोक्ताः । वसवो रुद्रायतुर्दशकः ॥

आ नासत्या हिरण्यस्तूप आश्विनीं जगतीम् ॥

आ नासत्या इतीमामृचमश्विदेवत्यां जगतीछन्दस्कां हिरण्यस्तूपऋषिरपश्यत् ॥

एष वो मारुतीं त्रिष्टुभमगस्त्यः ॥

एष व इतित्रिष्टुभं मरुद्देवत्यां अगस्त्योऽपश्यत् । मांतार्यथा द्वौ

---

(१) अत्र सूत्रेऽनुस्वाराभावात् काण्वसर्वानुक्रमपाठो बोध्यः ॥

व्यूढो। एषा यासीद्। व्यूढे क्वतिऽपि दशक. ॥

सहस्तोमाऋषिसृष्टिप्रतिपादिकान् त्रिष्टुभं यज्ञः प्राजापत्य ॥

सहस्तोमा इतित्रिष्टुभमृषिसृष्टि' प्रतिपादयित्री प्रजापतेः पुत्रो यज्ञऋषिरपश्यत्। ऋषयो देवता.। सहस्तोमा द्वादशक, भक्त्यो द, शक. ॥

आयुष्यं वर्च्चसं तच्च दृच उष्णिक्शक्करीत्रिष्टुभो हिरण्यस्तुतिः ॥

आयुष्यं। न तत्। यदाबध्नन्नित्येतदृच दक्षऋषिरपश्यत्। चा-घ्रिस्त्वचे तिस्र ऋचो यथाक्रममुष्णिक्शक्करीत्रिष्टुप्छन्दस्का । षट् पञ्चाशदक्षरा शक्करी। तत्र आयुष्यमुष्णिक। आद्य षडक', राय: साक । द्वौ अष्टकौ। तेनाधिका पुरउष्णिगिय । न तत। शक्करी एकाधिका। यदाबध्नन्। त्रिष्टुप्। तृतीयो द्वादशक, चतुर्थो दश मा। एतत्तृचं हिरण्यस्तुति । हिरण्यदैवतमित्यर्थ ॥

उत नऽऋजिश्वो बहुदेवत्यान्त्रिष्टुभम् ॥

उत नइतित्रिष्टुभ बहुदेवत्यां ऋजिश्वोऽपश्यत। उत न' द्वौ व्यू ढौ। भ'इर्यु धन्य, अजऽएकपात्। पृथिवी समुद्र, विश्वेदेवाश्च देवता ॥

इमा गिरः कूर्मो गात्संमदऽआदित्यदेवत्या त्रि-ष्टुभम् ॥

इमा गिरऽइत्येतामृचमादित्यदेवत्या त्रिष्टुभं' गृत्समदपुत्र कूर्म-ऋषिरपश्यत् ॥

सप्त ऋषय इतीयमध्यात्मवादिनो जगती ॥

सप्त ऋषय, इतीयमध्यात्मवादिनो जगती सप्त ऋषयो देवता। एकाधिका। पादाक्षरनियमो नास्ति ॥

उत्तिष्ठ तृचो ब्राह्मणस्पत्यः ॥

उत्तिष्ठ, प्रनूनं । ब्रह्मणस्पते इत्ययं तृचो ब्रह्मणस्पतिदैवतः ॥

आद्ये बृहत्यौ काण्वो घौरः ॥

अस्मिंस्तृचे उत्तिष्ठ, प्रनूनमितीमे आद्ये ऋचौ बृहत्यौ घौरो घोरपुत्रः कण्व ऋषिरपश्यत् । देवयन्तः व्यूहः । मन्त्र. । हो व्यूहो ॥

अन्त्या त्रिष्टुभं गृत्समदः ॥

अन्त्यां ब्रह्मणस्पतिरितीमां त्रिष्टुभं गृत्समदोऽपश्यत् । ब्रह्मणस्पते । व्यूहः ॥

यऽइमां चतुर्ऋचं प्रतीकोक्ताम् ॥

यऽइमा चतुर्ऋचं प्रतीकोक्तम् । यऽइमा विश्वा भुवनानि । विश्वकर्मा ह्यजनिष्ट, यो नः पिता जनिता । अन्नपतेऽन्नस्य नो देहीत्येतच्चतुर्ऋचमन्नाध्याये प्रतीकोक्तम् । पूर्वमेव पठितत्वात्साधवायादिमात्रेणोपात्तम् ॥

अपेतोऽध्यायः पितृभ्यऽआदित्यस्य देवानां वा ॥(१)

अपेतो यन्त्वित्ययमध्याय पितरः पितृदेवत्यः । आदित्यस्यार्षम् । आदित्योऽस्य ऋषिरित्यर्थः । देवानां वा, देवा वास्याध्यायस्य ऋषय इत्यर्थः ॥

आद्या गायत्री परं यजु ॥

अस्मिन्नध्याये आद्या अपेत, इति गायत्री । ततः परं । द्युभिरक्तुभिरित्येतद्यजुः सामपङ्क्ति । पलाशशाखया व्यूहने विनियोगोऽस्याः ॥

सविता ते गायत्री ॥

---

(१) अपेतोऽनुवाकः पितृभ्यआदित्यस्यार्षं देवानां वेति काण्वसर्वानुक्रमपाठः ॥

सविता ते शरीरेभ्य इति गायत्री । जपे विनियुक्ता ॥

वायुः पुनात्विति चत्वारि लिङ्गोक्तानि ॥

वायुः पुनात्वित्यादीनि चत्वारि यजूंषि लिङ्गोक्तवाय्वादिदेवतानि । चतसृणां सीतानां कर्षणे विनियुक्तानि । वायुः । दैवी पङ्क्तिः । सविता । दैवी त्रिष्टुप् । अग्ने । दैवी पङ्क्तिः । सूर्यस्य । दैवी त्रिष्टुप् । विमुच्यन्तां । दैवी जगती । अनडुद्विमोके विनियोगः । अनडुहो देवताः । अश्वत्थे व इत्यस्य सर्वौषधवपने विनियोगः ॥

सविता ते गायत्री ॥

सविता ते शरीराणीति गायत्री । अस्थिनिवापे विनियोगः । प्रजापतौ त्वा । आर्षी उष्णिक् । प्राजापत्या त्रिष्टुब् वा । अस्थिनिवाप एव विनियोगः ॥

परं मृत्यो सङ्कुसुकस्त्रिष्टुभं मृत्युदेवत्याम् ॥

परं मृत्यो इति त्रिष्टुभं मृत्युदेवत्यां सङ्कुसुकोऽपश्यत् । जपे विनियोगः ॥

शं वातोऽनुष्टुब्बृहत्यौ वैश्वदेव्यौ ॥

शं वात, इत्येते द्वे ऋचौ यथाक्रममनुष्टुब्बृहत्यौ विश्वे देवा देवताः । अस्थ्नां यथाङ्गं कल्पने विनियोगोऽनयोः । चापि शिवतमामृचतुर्दशकं, तिस्र इत्यधिकं ॥

अश्मन्वती सुचीकस्त्रिष्टुभं वैश्वदेवीम् ॥

अश्मन्वतीरियत इतीमां त्रिष्टुभं विश्वेदेवदेवतां सुचीकोऽपश्यत् । अश्मातिगमने विनियोगोऽस्याः । अत्र जहीमः श्रेयः ॥

अपाघं लिङ्गोक्तदेवतामनुष्टुभं शुनःशेपो हस्त-
सेनापानीम् ॥

अपाघमितीमामृचं लिङ्गोक्तदेवतामनुष्टुभं द्रष्टा शुनःशेपः प्रममार्ज-

र्नी पुनःमैपरूपिरपश्यत् । अपामार्गैरपमार्जने विनियोगः । अन्त्योर्द्वयूहः । सुमित्रिया न इत्यस्य प्रागुक्तम् । स्नाने विनियोगः ॥

अनड्वाहमानडुह्यनुष्टुप् ॥ (१)

अनड्वाहमन्वारभामह, इतीयमृक् आनडुही अनडुद्देवता अनुष्टुप् छन्दः अनडुत्पुच्छान्वारम्भे विनियुक्ता । उद्वयमित्यस्य तु प्रागुक्तम् । आगमने विनियोग ॥

इमं जीवेभ्यः सङ्कसुको मृत्युदेवत्यां त्रिष्टुभम् ॥

इमं जीवेभ्य, इति त्रिष्टुभं मृत्युदेवत्यां सङ्कसुकोऽपश्यत् । श्मशानान्तरे मर्यादालोष्ठनिधाने विनियोगः ॥

आयुष्मानग्नऽआग्नेयीं त्रिष्टुभं वैखानसः ॥ (२)

आयुष्मानग्न, इतीमामग्निदेवतां त्रिष्टुभं वैखानसऋषिरपश्यत् । औपासने आहुतिहोमे विनियोगोऽस्याः । आद्यतीयो द्वयृचः । चतुर्थो द्वादशकः ॥

परीमेऽनुष्टुभमैन्द्रीं भारद्वाजः शिरिंबिठः ॥

परीमे गामित्यनुष्टुभमिन्द्रदेवतां भरद्वाजस्यापत्यं शिरिंबिठऋषिरपश्यत् । परिदायदने विनियोगोऽस्याः । द्वितीययोर्द्वयृच ॥

क्रव्यादमग्निं त्रिष्टुभमाग्नेयीं दमनः ॥

क्रव्यादमग्निमिति त्रिष्टुभं अग्निदैवतं दमनऋषिरपश्यत् । क्रव्यादेर्णौपासनस्य निरसने विनियोगोऽर्द्धस्य । इहैवायमित्युत्तरार्द्धस्य जपे विनियोगः ॥

वहवपाञ्जातवेदसी त्रिष्टुप् ॥

---

(१) आनुष्टुभमिति काण्वसर्वानुक्रमपाठः ॥

(२) इद सूत्रं पूर्वापरीभावेन काण्वसर्वानुक्रमे पाठो बोध्य. ॥

बह्यस्वपामितीयमृक् जातवेदसो जातवेदोदेवत्या त्रिष्टुप्। मध्यमाष्टकायां वपाहोमे विनियोगोऽस्याः ॥

स्योना पृथिवि मेधातिथिः पार्थिवीं गायत्रीम् ॥

स्योना पृथिवीतिगायत्रीं पार्थिवीं पृथिवीदेवतां यजुरन्तां मेधातिथिऋषिरपश्यत्। यस्या अन्ते यच्छ नः शर्मसप्रथमिति यजुः। प्राजापत्या गायत्री। अस्य सम्बधिमरणनिमित्ते स्नाने विनियोगः ॥

अस्मात्त्वमाग्नेयी गायत्र्यनिरुक्ता ॥

अस्मात्त्वमधिजातोऽसीति गायत्री अग्निर्देवता। अनिरुक्ता मध्येऽग्निपदप्रयोगशून्या। साग्निकस्य पात्रप्रतिपत्त्यन्ते दाहात्पूर्वं आज्याहुतिहोमे विनियुक्तम् ॥ ४ ॥

ऋचंवाचम्पञ्चाध्यायी दध्यङ्ङाथर्वणो दर्शाग्निकाश्वमेधिकवर्जम् ॥

ऋचं वाचं। देवस्य त्वा हि, स्वाहा प्राणेभ्यः, ईशावास्यमितीमां पञ्चाध्यायीं अग्निकाश्वमेधिकमन्त्रवर्जितामथर्वणः पुत्रो दध्यङ्ऋषिर्ददर्श। दृष्टवान्। "दध्यङ् ह वा आथर्वण एतं० शुक्रमेतं यज्ञविदां चकारेति श्रुतेः"। पञ्चानामध्यायानां समाहारः पञ्चाध्यायी। अपवादद् आग्निकाश्वमेधिकवर्जमिति, उपयामगृहीतेत्याग्निकम्। अग्निष्ठं० हृदयेनेत्याद्यध्यायसमाप्तिं यावदाश्वमेधिकं तद्वर्जयित्वा। आग्निकस्याश्वमेधिकस्य च नान्यऋषिरित्यर्थः। वैश्वदेव इति बहुदेवत इत्यर्थः। तथा च यास्कः। "यत्तु किञ्चिद्बहुदैवतं वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिरिति" ॥

आद्योऽध्यायः शान्त्यर्थो वैश्वदेवः ॥

अस्यां पञ्चाध्याय्यामाद्यः प्रथम ऋचं वाचमित्ययमध्यायो विश्वदेवदेवतः शान्त्यर्थः। प्रयुग्य साधकयोः शान्तिकरणार्थः ॥

श्रायांसि यजूंषि ॥

श्रायांसि श्रच वायमित्यादीनि यजूंषि । श्रथो चतुर्थो देवीजिंगतीच्छन्दः । आग्नेयं यजुर्जगती । लिङ्गोक्ता श्रग्न्यादया देवता ॥

यन्मे बार्हस्पत्या पङ्क्तिः ॥

यन्मे च्छिद्रमितीयं बृहस्पतिदेवत्या पङ्क्तिः । व्यूहेन चत्वारि अष्टाक्षरत्वात् । अथ भूर्भुव स्वस्त्वमित्. । कयानश्चित्र, इति त्र्य स्य छन्दादेवतादि सर्वं प्रागुक्तम् । श्रयमिदं दध्यङ्गाथर्वणं एवेति विशेष ॥

कया त्वमैन्द्र्यनिरुक्ता गायत्री ॥

कया त्वं न, इतीयं गायत्री अनिरुक्ता ऐन्द्री इन्द्रपदप्रयोग विनापीन्द्रदेवत्या । आद्ये द्वौ व्यूहौ ॥

इन्द्रो विश्वस्य विराड्द्विपदा ॥

इन्द्रो विश्वस्येतीयमृक् विराड्द्विपदा । इन्द्रो देवता । विंशत्यक्षरा द्विपदा विराडित्युच्यते । तथा चोक्तमृग्वेदसर्वानुक्रमण्याम् । विंशतिका द्विपदा विराज इति । तथा तदर्धमेकपदा । एतद्धि विंशत्यर्थं या एकपदा दृश्यते । सोऽपि विराडुच्यते ॥

शं नो द्वे अनुष्टुभौ ॥

शन्नोमित्र, शन्नोवात इत्ये द्वे ऋचौ अनुष्टुभौ । शन्नो भवतु व्यूह । शन्नोवात, इत्यत्र द्वौ व्यूहौ । तेन व्यूहा । लिङ्गवक्तव्याद्या लिङ्गोक्ता देवता ॥

अहानि द्विपदा गायत्री ॥

अहानि शमितीयं द्विपदा गायत्री । अहानि रात्रयश्च देवता ॥

## शं न इन्द्राग्नी त्रिष्टुब्गायत्र्यौ ॥ (१)

शं न इन्द्राग्नी, शन्नोदेवीरितीमे द्वे ऋचौ यथाक्रमं त्रिष्टुब्गायत्र्यौ । शं न इन्द्राग्नी त्रिष्टुप् । इन्द्राग्नी इन्द्रावरुणौ इन्द्रापूषणौ इन्द्रासोमौ देवता । शन्नो देवीर्गायत्री । आपो देवताः ॥

## अन्त्या आशीः ॥

प्रागुक्तयोर्द्वयोरन्त्या शन्नो देवीरित्येषा आशीः । स्योना पृथिवी आपो हि ष्ठा इत्यस्य प्रागुक्तम् । अत्र दध्यङ्ङाथर्वण ऋषिरिति विशेषः ॥

## द्यौः शान्तिर्यजूंषि ॥ (२)

द्यौः शान्तिरित्यादीनि ज्योक्ते संदृशि जीव्यासमित्यन्तानि यजूंषि लिङ्गोक्तदेवतानि । द्यौः शान्तिः, एकाधिका शक्वरी । दृते दृंह मा मित्रस्य मा, एकाधिका ब्राह्मी अनुष्टुप् । दृते । आर्च्युष्णिक् । नमस्ते हरसे इत्यस्य प्रागुक्तम् । अत्र दध्यङ्ङाथर्वण ऋषिरिति विशेषः ॥

## नमस्तेऽस्त्वनुष्टुभौ ॥

नमस्ते अस्तु विद्युते, यतो यतः, इतीमे ऋचावनुष्टुभौ । यतः स्व । शं नः कुरु । अभयं नः । एषु व्यूह । विद्युदस्तनयित्नुरूपो भगवान्देवता द्वयोरपि । सुमित्रिया न इत्यस्य तु प्रागुक्तम् । अत्र तु दध्यङ्ङाथर्वण ऋषिरिति विशेषः ॥

## तच्चक्षुः पुरउष्णिक् सौरी ॥ (३)

इति जीर्णः पाठः । स तु नोपपद्यते । अस्यां हि सप्तविंशत्यक्षराणि सन्ति । पुरउष्णिक् चाष्टाविंशत्यक्षरा "आद्यश्चेत्पुरउष्णिगिति" । अतस्तल्लक्षणाभावान्नेयं पुरउष्णिक् । तेन तच्चक्षुर्ब्राह्मी त्रिष्टुप् सौरीति-

(१) गायत्र्यौ इति काण्वसर्वानुक्रमेऽधिकः पाठोऽस्ति ॥

(२) दृते दृंह इ मित्रदेवत्ये । आद्या ब्रह्मसाम्ना जगती द्वितीया द्विपदा गायत्री इति काण्वसर्वानुक्रमेऽधिकः पाठो बोध्यः ॥

(३) तच्चक्षुः पङ्क्तिः सौरी इति काण्वसर्वानुक्रमपाठो बोध्यः ॥

पाठ । तचक्षुरिलेषा चौरी सूर्यदेवता एकाधिका ब्राह्मी त्रिष्टुप्।
व्यूहैतात्र्यर्षा । पुरुरुष्णिक् न क्रयणीय न घटत एव ॥

'आददे नारिरस्यग्निदैवतम् ॥

देवस्य त्वेति प्रोक्तम् । आददे नारिरसीत्येतदभुरग्निदैवतम् ।
दैवीजगती । अभ्र्यादाने विनियोगोऽस्य । युंजतीत्रम्, इत्यस्य छन्दादे
वतं प्रागुक्तम् । प्रतिपदेष्वप्याथर्वणः । अद्य विनियोगोऽस्य ॥

देवी द्यावापृथिव्यम् ॥

देवी द्यावापृथिवी, इत्येतद् द्यावापृथिवीदैवतम् । मृत्पिण्डादाने
'विनियुक्तम्'। ब्राह्मी गायत्री ॥

देव्यो वम्र्यो वल्मीकवपा ॥

देव्यो वम्र्य, इत्यस्य वल्मीकवपादाने विनियोगः । व्यूहैनार्षी
पङ्क्तिः ॥

इयत्यग्रे वराहविहतम् ॥

इयत्यग्रे, इत्यस्य वराहविहत देवता। वराहविहतस्यादाने विनि-
योग । द्वौ व्यूहौ । ब्राह्मी गायत्री ॥

इन्द्रस्यौजऽस्यादाराः ॥

इन्द्रस्यौजसेत्यस्यादारा देवता । आदाराद्याने विनियोग । आर्षी
त्रिष्टुप्। मखाय त्वेति यजु पङ्क्तिः । अजापयस आदाने विनियोगो
द्वितीयस्य । तृतीयस्य सम्भृतानामभिमर्शने ॥

मैत.(१)मखस्यास्यूर्जवे समाय देवस्त्वाङ्गिरसि अ-
मंदेयत्यानि॥

मैतु वृक्षास्यस्तीति ।मखस्य शिरोऽसि। अश्वस्य त्वा, ऊर्जवे त्वा ।
यमाय त्वा । यार्चिरसि शोचिरसि तपोऽसीत्येतानि यजूंषि घर्मदेव-

(१) कण्वो वैषदेवो बृहतीमित काण्वसर्वानुक्रमपाठोऽस्त ॥

नि । यजमानस्याशी, अनाधृष्टा । व्यूढः । ध्रुववती । स्रुग्गायत्री । ततस्तिस्रो व्यूढेन साकमङ्कयः । पचनानामपि वाचने विनियोग । विश्वाभ्यो मा । यजुर्बृहती । दक्षिणत उत्तानपाणिनिधाने विनियोगः । मनोरश्वासि । दैवी पङ्क्ति । उत्तरत. प्रादेशनिधाने विनियोग । स्वाहा मरुद्भिः । यजुः पङ्क्ति । घर्मो देवता । विकङ्कतशकलाभ्यां परिश्रयणे विनियोग । दिवङ्ति दैवी जगती । सुवर्णशतमानेन महावीरापिधाने विनियोग. । सुवर्णं देवता ॥

मथ प्राणदैवत्यानि ॥

अश्विति त्रीणि यजूंषि प्राणदैवत्यानि । धवित्रैरुपवाजने विनियुज्यन्ते । दैव्युष्णिक् ॥

गर्भो देवानामवकाशा, मा मा हिंसीरित्येतदन्ता घर्मदैवत्याः ॥ (१)

गर्भो देवानामित्याद्यो नमस्ते अस्तु मा मा हिंसीरित्येतदन्ता अवकाशा । अवकाशसंज्ञका मन्त्रा । तद्व्याकरणमवकाशैरुपतिष्ठत इत्यत्र सत्यव्रताराय । महावीरोपस्थाने विनियोग एषाम् । गर्भो देवानां त्वया पङ्क्ति. । समग्नि ब्राह्मी अनुष्टुप् ॥

धर्त्ता दिव ऊर्ध्ववृहती ॥

धर्त्ता दिव, इतीयमृक् ऊर्ध्वबृहती । त्रिजागतोर्ध्वबृहती लक्षणम् । अत्र तु आद्यो भवोदशको । तृतीय एकादशक. । एकाधिका बृहती ॥

अपश्यं गोपां त्रिष्टुभं दीर्घतमा ॥ (२)

अपश्यं गोपामितीमामृचं त्रिष्टुभं दीर्घतमा अपश्यत् । चतु

---

(१) गर्भो देवानां पञ्क्ति समग्निर्ब्राह्मीगत्ता । इति काण्वसर्वानुक्रमपाठो बोध्य
(२) एतत्सूत्रादौ विश्वासां भुवामन्त्राष्ट । इति काण्वसर्वानुक्रमपाठश्च बोध्य ।

व्यूहः । विश्वासां भुवां । व्यूहः । अत्यष्टिश्छन्दः ॥

हृदये त्वा परोष्णिक् ॥

हृदये त्वेत्येषा परोष्णिक् । आद्ययोर्व्यूहः । परोष्णिक्पदत्वम्,
इति तल्लक्षणम् । पितानोऽसि, ऋग्गायत्री ॥

त्वष्टृमन्तः पत्न्याशीः ॥

त्वष्टृमत, इत्येतद्यजुः पत्न्या आशीः । ऋचां त्रिष्टुप् । घर्मो
देवता । पत्न्या वाचने विनियोगः ॥

अह्नः केतुना यजुषी घर्मदेवत्ये ॥

अह्नः केतुना, रात्रिः केतुनेतीमे यजुषी घर्मदेवत्ये । साम्न्यानुष्टुभौ ।
रौहिणहोमे विनियुक्ते ॥

आददेऽदित्यै रज्जुः ॥

आददेऽदित्यैरास्नासीत्यस्य यजुषो रज्जुर्देवता । रज्जुसन्दा-
नादाने विनियोगः । प्राजापत्या गायत्री छन्दः ॥

इड एहि गौः ॥

इड एहीत्यादीनां गौर्देवता गोराह्वाने विनियोगः । इडे । दैवी
बृहती । अदिते । सरस्व । दैव्यौ पङ्क्ती । असावेहि । दैवीबृहती ।
असावित्यत्र गोर्नामाक्षराणि गणयित्वा छन्दो ज्ञेयम् । छन्दोमन्त्रत्वेन
विधानात् । अदित्यै । यजुस्त्रिष्टुप् । गोः पादप्रमार्जने विनि-
योगः । पूषासि । वत्सो देवता । दैव्यनुष्टुप् । वत्सोत्सर्गे विनियोगः ।
घर्माय । वत्सो देवता । दैवी पंक्तिः । वत्सोन्नयने विनियोगः ।
अश्विभ्याम् । इन्द्राय । यजुर्गायत्र्यौ । सरस्वत्यै । यजुरनुष्टुप् । लिङ्गोक्ता
देवता । दोहने विनियोगः । स्वाहेन्द्रवत् । दैव्यो बृहत्यः । विप्रु-
षामभिमन्त्रणे विनियोगः । अथवा समस्तस्य यजुर्जगती । विप्रुषो
देवताः ॥

यस्ते त्रिष्टुभं दीर्घतमा ॥

यस्ते स्तनइति त्रिष्टुभन्दीर्घतमा अपश्यत् । यतीये व्यूह । वाग्देवत्या । "यास्मै सरस्वतीति श्रुतः" । स्तनालम्भे विनियोगः । दर्वेत-रित्यनिरस्य गोः समीपां मात्रां प्रति गमने विनियोगः । प्राजाप त्या गायत्री । गायत्री छन्दोऽसि । यजुर्गायत्री । त्रैष्टुभम् । यजुर्गायत्री । परिशासादने विनियोगः । परीशासौ देवते । द्यावापृथिवीभ्यां । यजुर्जगती । परीशासाभ्यां महावीरग्रहणे विनियोगः । मन्तरिक्षेति यजुर्बृहती । उपयमन्योपग्रहणे विनियोगः । मनयोर्घर्मो देवता ॥

इन्द्राश्विना वैश्वदेवम् ॥ (१) ·

इन्द्राश्विनेत्यस्य विश्वेदेवा देवताः । व्यूहः । ब्राह्मी गायत्री । महावीरे गोः पयसोऽवनयने विनियोगः ॥

समुद्राय त्वा वातनामानि ॥

समुद्राय त्वा वाताय स्वाहेत्यादीनां समुद्रादीनि वातनामानि देवताः । समुद्राय । सरिराय । यजु पङ्क्तिः । अनाधृष्याय । यजुस्त्रिष्टुप् । अप्रतिधृष्याय । यजुर्जगती । अवस्यवे । यजुः पङ्क्तिः । अशिमिदा । यजुस्त्रिष्टुप् । इन्द्राय त्वा । सामोष्णिक् । आदित्यवते है । यजुः पङ्क्ती । सवित्रे । आर्च्यगायत्री । यमाय त्वा । सामोष्णिक् ॥

स्वाहा घर्माय घर्मदैवत्ये ॥

स्वाहा घर्माय, स्वाहा घर्मः पित्र, इत्येते यजुषी घर्मदैवत्ये । प्रथमस्य दैवी पङ्क्तिः । उपयमनीस्थाज्यस्य घर्मभासेके विनियोगः । द्वितीयस्य यजुर्गायत्री । जपे विनियोगः ॥

विश्वाऽआशाऽआश्विन्यनुष्टुप् ॥

विश्वाआशा, इत्यनुष्टुबाश्विनी । अश्विनौ अस्या देवतेत्यर्थः । अप-

(१) इन्द्राग्नी देवम इति काण्वसर्वानुक्रमपाठ ॥

हृतं होमे विनियोग ॥

द्विविधा घर्मदैवत्यम् ॥

द्विविधा, इत्येतद् घर्मदैवत्य सामोष्णिक । छत्रपत्ने विनियोग ॥

अश्विना घर्मस्त्रिष्टुक् ॥

अश्विनाघर्ममित्यस्यास्त्रिष्टुक्छन्द । अश्विनावादित्यौ द्यावापृथिव्यौ च देवता । दध्यधिकत्वात्स्वराडुष्णिगियम् । मुख्यापोऽनुमन्त्रणे विनियोग ॥

अपाताम् ककुप् ॥

अपातामश्विनेत्यस्या ककुबुष्णिक् छन्द । "मध्यमश्चेत्ककुबिति वचनात् । मध्यमे व्यूह । यजमानमश्नं सेऽनुमन्त्रणे विनियोग । इषे पिन्वस्व । ऋचा पङ्क्ति । अध्वर्युकर्तृके पिन्वमानानुमन्त्रणे विनियुक्ता । घर्मासि । यजुर्गायत्री । उत्तरपूर्वादक्ष्वक्रमणे विनियोग ॥

अभीन्धास्मे खर ॥

अभीन्धस्मे इत्यस्य खरो देवता । खरे महावीरनिधाने विनियोग । द्वे अूहा । ऋग्बृहती । घर्मो देवता ॥

स्वाहा पूष्णे सप्त लिङ्गोक्तानि ॥

स्वाहा पूष्णे शरस, इत्यादीनि सप्त लिङ्गोक्तपूषादिदैवतानि । स्वाहा पूष्णे । दैवीजगती । प्रावभ्य । दैवीपङ्क्ति । प्रतिरवेभ्य । दैवी जगती । पितृभ्य । आसुरीगायत्री । सकलस्य दक्षिणतो बर्हिष्युपगूहने विनियोग । द्यावापृथिवीभ्या । यजुरनुष्टुप । विश्वेभ्यो । यजुरनुष्टुप । रुद्राय । यजु पङ्क्ति । सकलस्य प्रतिप्रस्थाने समर्पणे विनियोग । इत्यतानि सप्त यजूंषि विकङ्कतशकलैर्घर्माभ्यहोमे विनियुक्तानि ॥

स्वाहा सम्पयोर्दैवत्यम् ॥

स्वाहा मरुद्भिरिषियेत्येतत्पयोर्दैवत्यम् । यजुरनुष्टुप । घर्माभ्यसो पयसि आसेके विनियुक्तम ॥

मधुक्तं घर्मः ॥

मधुहुतघर्मस्य घर्मो देवता । अग्निहृतीछन्दः । भचये विनियोगः । अग्नेकेतुना, राधि. केतुनेत्यनयोः प्रागुक्तम् ॥

अभीमङ्गायत्रीबृहत्यावमवसाने ॥

अभीमं महिमा । सहं० सीदस्व, इतीमि द्वे ऋचौ गायत्रीबृहत्यौ । अभीममिति गायत्री । सहं० सीदस्वेति बृहती । कीदृश्यौ' अनवमाने । इयोर्ऋचोः संधाववसानं नास्तीत्यर्थः । उत्तस्थवसा पृथिवीहं० सहं०सीदस्यमहानित्येवं संलग्न एव पाठोऽस्तीत्यर्थः । महावीरस्यासंधानिधाने विनियोगः । अनयोरेवर्चोरचरगणमैकग गणनेन छन्दोन्तरं वैकल्पिकमाह ॥

अतिशक्करी वाग्नेयी समस्ता व्यवसाना ॥

अथवा नेमे गायत्रीबृहत्यौ द्वे ऋचौ । किंतु समस्तेयं पञ्चषरा ऽतिशक्करीछन्दस्का एकैव ऋक् अग्निदेवत्या व्यवसाना अवसानद्वययुक्ता । पञ्चषरा अतिशक्करी ॥

याते घर्मः ॥

यातेघर्मदिव्याशुगित्यादीनां घर्मो देवता । चतुर्गृहीतहोमे एषां विनियोगः । पयासामपि ऋचां पङ्क्तिः । द्वितीये व्यूहः ॥

चनस्य बृहती ॥

चनस्य त्वा परस्यायेत्यस्या बृहती छन्दः । निष्क्रमणे विनियोगः । उपरिष्टाद्बृहतीयम् । अन्त्यपादस्य द्वादशाक्षरत्वात् । तथा चोक्तम् । अन्त्येदुपरिष्टाद्बृहतीति । घर्मो देवता । अत्र द्वितीये व्यूहः ॥

चतुः स्रक्तिर्महाबृहती ॥

चतुः स्रक्तिरिति महाबृहती । चत्वारोष्टकाजागतस महाबृहती·

ति तस्यपथम् । उत्तरवेदौ महावीरनिधाने विनियोगः । घर्मो देवता ॥

**घर्मैतदनुष्टुप् ॥**

घर्मैतत्त इत्यस्या, अनुष्टुप् छन्दः । आसेचनवतीं पयसा पूरये विनियोगः । घर्मो देवता । अत्र प्रथमचतुर्थौ सप्तकौ । द्वितीयो दशकः । तेनाक्षरसंख्यापूर्तिः ॥

**अचिक्रदत्परोष्णिक् ॥**

अचिक्रददित्यस्याः परोष्णिक्छन्दः । तृतीयपादस्य द्वादशाक्षरत्वात् । तथा च पिङ्गलः । परोष्णिक्परतश्चेति । परिधिके विनियोगः । सुमित्रिया न, इत्यस्य मार्जने विनियोगः । उदयमित्यस्योत्तरपूर्वार्धेवरक्रमणे । एधोऽसीत्यस्य समिदादाने । समिदसीत्यस्याहवनीयेऽभ्याधाने ॥

**यावती द्यावापृथिवी दधिघर्मः ॥**

यावतीत्यस्य दधिघर्मो देवता । ब्राह्मी उष्णिक् । इन्द्रो देवता । दधिघर्मग्रहणे विनियोगः ॥

**मयि त्यदपंक्तिर्यजमानाशीः ॥**

मयित्यदिति पङ्क्तिर्यजमानस्याशीः । पञ्चपदा चत्वारिंशदक्षरा पङ्क्तिरियम् । दधिघर्मशेषभक्षणे विनियोगः । घर्मो देवता ॥

**पयसो रेतो गायत्र्यनवसाना ॥**

पयसो रेत, इत्यवसानवर्जिता गायत्री । भक्षणे विनियोगः । अत्र पूर्वसूक्ते च यजमानाशीर्देवतेति काण्वसंहिताभाष्ये ॥

**त्विषः संवृग् दधिघर्मः ॥**

त्विषः संवृगित्यस्य दधिघर्मो देवता । व्यूहः । अतिजगती । महाव्रतसज्ञोऽहनि दधिघर्मशेषभक्षणे विनियुक्ता ॥

अनुक्तं घर्मदैवतम् ॥

अथ घर्मप्रकरणे यदनुक्तमनुक्तदैवतं मन्त्रजातं तद् घर्मदैवतम् । एतस्मिन्सूत्रे सति पूर्वत्र स्वाहा घर्माय घर्मदेवत्ये, अङ्कः केतुना यजुषी घर्मदेवत्ये इत्येवमादौ घर्मदेवत्यत्वकथनं पुनरुक्तम् ॥

स्वाहा प्राणेभ्यो मांचवर्णिक्यो देवताः ॥

स्वाहा प्राणेभ्य, इत्यादीनां यजुषां मांचवर्णिक्यो देवताः। घर्मभेदे प्रायश्चित्तहोमे विनियोगः, स्वाहा प्राणेभ्यः । यजुस्त्रिष्टुप् । पृथिव्यै स्वाहेत्यादिषु चतुरक्षराणां दैवीबृहती । पञ्चाक्षराणां दैवीपङ्क्तिः। षडक्षराणां दैवीत्रिष्टुप् । सप्ताक्षराणां दैवीजगती ॥

मनसः काममनुष्टुब्यजमानाशीः श्रीर्देवता ॥

मनसः काममाकूतिमित्येषा अनुष्टुप् । अस्याः श्रीर्देवतेति काण्वभाष्ये । घर्मभेदे पूर्णाहुतिहोमे,विनियोगः ॥

प्रजापतिः संभ्रियमाणो यथाकालं प्रायश्चित्तदेवताः ॥

प्रजापतिः सम्भ्रियमाण, इत्याद्या घर्मभेदे यथाकालं प्रायश्चित्तदेवताः। यो यो यस्याः कालो यथाकालम्। तद्यथा। प्रजापतिः सम्भ्रियमाणो महावीरसम्भरणे क्रियमाणे महावीरभेदे प्रजापतिः प्रायश्चित्तहोमे देवता। तत्र प्रजापतये स्वाहेति प्रायश्चित्ताहुतिः। एवं सर्ववाक्येषु ज्ञेयम् ॥

सविता प्रथमेऽहन् प्रत्यहं क्रमेण ॥

सविता प्रथमेऽहन्नित्याद्याः घर्मभेद एव प्रत्यहं प्रतिदिनं क्रमेण प्रायश्चित्तदेवताः । सविता प्रथमेऽहन् । प्रथमेऽहनि घर्मभेदे सविता प्रायश्चित्ताहुतिदेवता। द्वितीयेऽहनि घर्मभेदे द्वितीया अग्निर्दैव-

ता। एवं सर्वत्र व्याख्यानमर्थो ज्ञेयः। प्रजापतिः सम्भ्रियमाणः सविता प्रथमेऽहनीतीमे द्वे कण्डिके ब्राह्मणरूपे। महावीरभेदे कालभेदेन देवताभेदविधायिके॥

उग्रश्च मारुती गायत्री विमुखाख्यो मन्त्रोऽग्नौ विनियुक्तः॥

उग्रश्च भीमश्चेति गायत्री मारुती। उग्रभीमादयो मरुतोऽस्या देवता इत्यर्थः। विमुखाख्य विमुखसंज्ञकोऽयं मन्त्रः। अग्नौ चयने सप्तममारुतपुरोडाशहोमे विनियोगः। अरण्याध्ययनसामान्यादिहास्य पाठः॥

तस्मादाग्निक एवास्य ऋषिः(१)॥

तस्मादस्य मन्त्रस्याग्निक एवाग्निसम्बन्ध्येव ऋषिः। प्रजापतिर्ऋषिः। साध्या वा ऋषय इत्यर्थः॥

परमेष्ठी प्राजापत्यो वा॥

अथवास्योपयेतिमन्त्रस्य प्रजापतेरपत्यं परमेष्ठी वा ऋषिः॥

अग्निꣳ हृदयेनाश्वमेधिकानि तत्रत्य एव ऋषिः(२)॥

अग्निꣳ हृदयेनेत्यादीनि अध्यायसमाप्तिपर्यन्तानि यजूंषि आश्वमेधिकानि। अश्वमेधसम्बन्धानि। एषां च तत्रत्य एवाश्वमेधिकः प्रजापतिरेव ऋषिः॥ अग्निꣳ हृदयेन, उग्रंलोहितेनेति द्वे कण्डिके ब्राह्मणरूपे। देवतावयवावयवसम्बन्धविधानात्। अरण्येऽध्येयत्वादिह पाठः॥

लोमभ्यः स्वाहेतिप्रायश्चित्ताहुतयो द्विचत्वारिं-

(१) एवास्यर्षिरिति काण्वपाठः॥

(२) तत्रोक्त एवार्षिरिति च काण्वपाठो बोध्यः॥

मतृ ॥ (१)

लोमभ्यः स्वाहेत्याद्याः द्विचत्वारिंशत्सङ्ख्याः प्रायश्चित्ताहुतयः । अश्वमेधेऽनूयाजं हुत्वा स्वाहाप्रथिव्यामुत्तमामाहुतिं जुहोतीत्यग्नौ ते एषां सर्वेषां विनियोगः ॥ ८ ॥

ईशा वास्यमात्मदेवत्य मानुष्टुभोऽध्यायः ॥

ईशा वास्यमिदमित्ययमध्याय आत्मदेवत्यः आनुष्टुभश्च । अनुष्टुप्छन्दस्का एव ऋचोऽस्मिन्सन्तीत्यर्थः । अथापवादमाह ॥

अनेजदेकं त्रिष्टुप् ॥

अनेजदेकमितीयं त्रिष्टुप् ॥

सपर्य्यगाज्जगती ॥ (२)

सपर्यगाद्दितीयं जगती । अन्ते नयेति त्रिष्टुप् प्रागुक्ता । अन्याः सर्वा अनुष्टुभः । अथ । एवं त्वयि । नवकाः । तेनैकाधिका । तद्यावतः । व्यूह. । तद्दूरे । न व्यूहः । तदुसर्वस्य नवकाः । स परि पञ्चाग्रदक्षरा । तेन द्व्यधिका जगती । ततो भूयो नवकाः । यत्र सप्तकाः । ये विद्यां । ततो भूयः । नवकाः । यत्र विद्यायां । सप्तकाः । विद्यां च । व्यूहः ॥

वायुरनिलं यजुषी ॥

वायुरनिलमितीमे द्वे यजुषी । वायुरनिलममृतमित्येकम् । अथेदमिति द्वितीयम् । प्रथमस्य प्राजापत्या गायत्री । द्वितीयस्य यजुर्बृहती । अथवैकमेवेदं यजुः । न हि इतिकाण्वभाष्ये । तदा व्यूहेन ऋग्गायत्री ॥

ओ३मिति परमाक्षरस्ययोगिनामालम्बभूतस्यपरस्य ब्रह्मणः (३) प्रणवाख्यस्यास्थूलादिगुणयुक्तस्य ब्रह्मा ऋ-

(१) अग्निर्ज्यो०मतृ इति काण्वसर्वानुक्रमपाठः ॥

(२) पूर्व०अधिकः पाठः काण्वसर्वानुक्रमे बोध्यः ॥

(३) परस्य ब्रह्मण इति काण्वसर्वानुक्रमपाठो बोध्यः ॥

पिच्छन्दो गायत्रं परमात्मा देवता ॥

ओ३मित्यस्य परमाक्षरस्य ब्रह्मा ऋषिः । परमात्मा देवता गायत्रं छन्दः । दैवी गायत्री छन्द इत्यर्थः । कीदृशस्य ओमित्यस्य परस्य ब्रह्मणः प्रणवसञ्ज्ञस्य परब्रह्मणः । कीदृशस्य ब्रह्मणः अस्थूलमनण्वह्रस्वमित्यादिगुणोपेतस्य । पुनः कीदृशस्य । योगिनामालम्बभूतस्य ॥

विनियोगः कल्पकारोक्त इत्युक्तम् । ओ३मित्यस्य च विनियोगः कल्पकारेण नोक्त इति स्वयमेवास्य विनियोगमाह ॥

ब्रह्मारम्भे विरामे (१) च यागहोमादिषु शान्तिपुष्टिकर्मसु चान्येष्वपि काम्यनैमित्तिकादिषु(२) विनियोगोऽस्य ॥

अस्य ओङ्कारस्य ब्रह्मारम्भे ब्रह्मणो वेदस्यारम्भे विरामे च विरामे वेदसमाप्तौ च विनियोगः । तथा यागहोमादिषु । यागो दर्शपूर्णमासादयः । होमा जुहोतयः श्रौताः स्मार्ताश्च । देवतोद्देशेन द्रव्यत्यागो यागः । स एव प्रक्षेपाधिको होम इति तयोर्लक्षणम् । तयोरादिषु ओं३इदमग्नये न ममेत्येवं ओङ्कारस्य विनियोगः । तथा शान्तिपुष्टिकर्मसु शान्तिकर्मसु रोगादिशान्त्यर्थं क्रियमाणेषु कर्मसु पुष्ट्यर्थं अभिलषितसम्पत्त्यर्थं क्रियमाणेषु कर्मसु चास्य विनियोगः । तथा अन्येष्वपि काम्यनैमित्तिकादिषु सर्वेषु कर्मस्वस्य विनियोगः । तथा च याज्ञवल्क्यः । दानयज्ञतपस्स्वाध्यायजपध्यानसन्ध्योपासनप्राणायामहोमदेवपित्र्यमन्त्रोच्चारणब्रह्मारम्भादीनि प्रणवमुच्चार्य प्रवर्तयेदिति । दाल्भ्यपरिशिष्टे च । ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म च । अनोङ्कृत्य कृतं सर्वं न भवेत्सिद्धिकारकमिति ॥ अतश्च मन्त्रमात्रोच्चारणे आदौ ओङ्कारः प्रयोज्यः ॥

(१) प्रयोगहोमादिषु इति काण्वसर्वानुक्रमपाठो बोध्यः ॥

(२) सर्वेषु इत्यधिकः पाठः काण्वसर्वानुक्रमस्येति ॥

**क्रतो स्मरेतिभिर्यजुर्भिरन्ते यज्ञान्योगी स्मारयति ॥**

क्रतो स्मरेत्यादिभिर्यजुर्भिरन्ते अन्तकाले प्राणप्रयाणसमये योगी यज्ञान् स्मारयति । देव्यो दृष्टव्य. । हे क्रतो त्वं मां स्मर । योऽग्निर्ब्रह्मचर्यादारभ्य परिचरितः स मनसि वासनारूपेणावस्थितः सम्बोध्यते । हे क्रतो हे भगवन्नग्ने त्वं मां स्मरेति । अथ वा क्रतुर्यज्ञः सम्बोध्यते । हे क्रतो श्रीभगवन्विष्णो कृतं स्मर । इदानीं तव उपस्थितः प्रत्युपकारस्य काल इत्येवं क्रतुर्यज्ञः. सम्बोध्यते । क्लिबे लक्षाय लोकाय स्मर, मया यत्कृतं तत् स्मर ॥

**अग्ने नयान्ते नमस्कारोक्तिः ॥**

अग्ने नयेत्यनेनान्ते अन्तकाले जीवितावसानेऽग्नेर्नमस्कारोक्तिः । नमस्कारवचनम् ॥

**हिरण्मयेनादित्योपासनम् ॥ (१)**

हिरण्मयेन पात्रेणेत्यस्य सूर्यस्योपासनं कार्यम् । उष्णिगियम् । अष्टाविंशत्यक्षरत्वात् ॥

**ओ३मिति नामनिर्देशो ब्रह्मणः ॥**

ओ३मित्ययं ब्रह्मणो नामनिर्देशः ॥

**खं ब्रह्मेत्याकाशरूपमन्ते ब्रह्म ध्यायेत् ॥**

खं आकाशरूपं ब्रह्म इत्यनेन प्रकारेणान्ते अवसानकाले आकाशरूपं ब्रह्म ध्यायेत् ॥ ८ ॥

**अथातश्छन्दोदैवताः ॥**

अभिधीयन्त इति शेषः । अथानन्तरं छन्दसां गायत्र्यादीनां देव-

---

(१) इति सूत्र काण्वसर्वानुक्रमेऽप्यत्रैव मन्त्रशरीरसमाप्तिसूचक पारदय कथित वण्व-म्हर्षिणेति ॥

ता अभिधीयन्ते ॥

गायत्र्या अग्निः ॥

गायत्र्या अग्निर्देवता ॥

उष्णिहः सविता ॥

देवता ॥

अनुष्टुभः सोमः ॥

देवता ॥

बृहत्या बृहस्पतिः ॥

देवता ॥

पङ्क्तेर्वरुणः ॥

देवता ॥

त्रिष्टुभ इन्द्रः ॥

देवता ॥

जगत्या विश्वेदेवाः ॥

देवताः ॥

विराजो मित्रः ॥

देवता ॥

स्वराजो वरुणः ॥

देवता ॥

अतिच्छन्दसः प्रजापतिः ॥

देवता ॥

द्विच्छन्दसो वायुः ॥

देवता ॥

**द्विपदायाः पुरुषः ॥**

देवता ॥

**एकपदाया ब्रह्मा ॥**

देवता ॥

**सर्वा ऋच आग्नेय्यः ॥**

सर्वा ऋच आग्नेय्योऽग्निदेवता ज्ञेयाः ॥

**सर्वाणि यजूꣳषि वायव्यानि ॥**

सर्वाणि यजूंषि वायुदेवत्यानि ज्ञेयानि ॥

**सर्वाणि सामानि सौराणि ॥**

सूर्यदेवतानि ॥

**सर्वाणि ब्राह्मणानि च ॥**

चकारात्सूर्यदेवतानि ॥

**स्वाहाकारस्याग्निः ॥**

देवता ॥

**वषट्कारस्य विश्वेदेवाः ॥**

देवताः ॥

**कर्मारम्भे मन्त्राणां देवता वेदितव्याः ॥**

कर्मारम्भे कर्मणः प्रारम्भे तत्कर्मोपयोगिनां मन्त्राणां देवता वेदितव्या ज्ञातव्याः ॥

**सन्यस्य मनसि देवतां ततो हविर्हूयते ॥**

होमात्पूर्वं मनसि देवतां सन्यस्य संचिन्त्य सस्मृत्य ततस्तदनन्तरं हविर्हूयते । तथा च यास्कः । 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट् करिष्यन्निति हविर्दीयत इति । देवतामज्ञात्वा हो-

मकरणे यद्भवति तदाह ॥

दैवतमविज्ञाय यो जुहोति देवास्तस्य हविर्न जुषन्ते ॥

दैवतमविज्ञाय अज्ञात्वा यो होमं करोति तस्य हविराज्यादिकं देवा न जुषन्ते न सेवन्ते न स्वीकुर्वन्तीत्यर्थः ॥

स्वाध्यायाध्ययनकाले ऽपि मन्त्राणां देवताज्ञाने फलमाह ॥

स्वाध्यायमपि योऽधीते मन्त्रदैवतज्ञः सोऽस्मिँल्लोके देवैरपीड्यते ॥

य पुमान्मन्त्रदैवतज्ञः सन् मन्त्राणां देवता जानन् स्वाध्यायमपि वेदमपि अधीते पठति स स्वाध्यायपाठकोऽमुष्मिँल्लोके स्वर्गलोके देवैरपीन्द्रादिभिरपीड्यते स्तूयते। इन्द्रादयोऽपि तस्य स्तुतिं कुर्वन्ति किं पुनरन्य इति ॥

तस्माच्च दैवता वेद्या मन्त्रे मन्त्रे प्रयत्नतः ॥

यतो दैवतमज्ञात्वा होमं कुर्वन्तो देवा हविर्न जुषन्ते। यस्माच्च दैवतं ज्ञात्वा स्वाध्यायाध्यायको देवैरपि स्तूयते। तस्मात्कारणात्प्रयत्नतो मन्त्रे मन्त्रे दैवता वेद्या ज्ञेयाः ॥

दैवतज्ञानस्य प्रयोजनान्तरमप्याह ॥

मन्त्राणां दैवतज्ञानान्मन्त्रार्थमधिगच्छति ॥

मन्त्राणां दैवतज्ञानात् मन्त्रार्थं जानाति ॥

मन्त्रार्थज्ञानेन किं भवतीत्यत आह ॥

मन्त्रार्थज्ञानात्तु विधूतपाप्मा नाकमभ्येति ॥

मन्त्रार्थज्ञानात् विधूतपाप्मा निरस्तपापः क्षीणपापः सन् नाकमभ्येति स्वर्गं प्राप्नोति ॥

दैवतमज्ञात्वा कर्म कुर्वाणः कर्मणां फलमपि न प्राप्नोतीत्याह ॥

न हि कश्चिदविज्ञाय याथातथ्येन देवताः श्रौतानां कर्मणां विप्रः स्मार्त्तानां चाश्नुते फलम् ॥

कश्चिदपि मेधावी याथातथ्येन परमार्थत्वेन अस्य मन्त्रस्येयमेव निश्चिता देवता अस्येयं अस्येयं इत्येवं देवता अविज्ञाय अज्ञात्वा श्रौतानां कर्मणां स्मार्त्तानां च कर्मणां फलं न हि अश्नुते। नैव प्राप्नोतीत्यर्थः। हि हेतावधारणे इत्यमरः। अत्रापि हेतौ अवधारणे वा हीति व्याख्येयम्। हि यतः देवतामज्ञात्वा कर्मणां फलं नाश्नुते तस्माद्देवता ज्ञात्वैव कर्माणि कार्याणीति। अवधारणार्थे तु प्रागेव व्याख्यातम्॥

अनादिष्टमध्वरादौ सवान्तकर्मणि परिभाषितं मन्त्रगणं वक्ष्यामः ॥

अध्वरादौ सवान्तकर्मणि अनादिष्टं परिभाषितं मन्त्रगणं वक्ष्यामः॥

सर्वमाग्नेयं गायत्रं गौतमीयम् ॥

सर्वमग्निदैवतं गायत्रछन्दस्कञ्च मन्त्रगणं गौतमीयं जानीयात्। अग्निदैवतस्य गायत्रछन्दस्कस्य मन्त्रगणस्य गौतमऋषित्वमेव इत्यर्थः। अध्वरादिसवान्ते काण्डत्रयविहिते कर्मण्येतद्दैवतैतच्छन्दस्कस्य ऋष्यनादेशे अयमृषिरेव इति भावः। एवमेवाग्रिमाण्यपि सूत्राणि व्याख्येयानि। अथ ऋषिदैवतछन्दसामेकैकस्यानादेशे अन्यतराभ्यामादिष्टाभ्यामन्यतरस्यानादिष्टस्य निर्णयः क्रियते। तद्यथा यद्गायत्रं गौतमीयञ्चानादिष्टदैवताकं तदाग्नेयमग्निदैवत्वं भवति। यदाग्नेयं गौतमीयं चानादिष्टछन्दस्कं तद्गायत्रं यदाग्नेयं गायत्रं चानादिष्टर्षिकं तद्गौतमीयं भवतीति। एवं वक्ष्यमाणेषु सूत्रेषु द्रष्टव्यम्॥

सर्वं सावित्रमौष्णिहं भारद्वाजम् ॥

अध्वरादौ सर्वास्मिन् कर्मणि सवितृदैवत्यमुष्णिक्छन्दस्कं सर्वमन्त्रगणमनादिष्टर्षिकं भारद्वाजं जानीयात् ॥

सर्वं सौम्यमानुष्टुभमाथर्वणिकम् ॥

सोमदैवत्यमनुष्टुप्छन्दस्कं सर्वमन्त्रगणमनादिष्टर्षिकमाथर्वणिकं जानीयात् । अथर्वा तस्य ऋषिरित्यर्थः ॥

सर्वं बार्हस्पत्यं बार्हतमाङ्गिरसम् ॥

बृहस्पतिदैवतं बृहतीछन्दस्कं सर्वमन्त्रगणमाङ्गिरसञ्जानीयात् । तस्याङ्गिरा ऋषिर्ज्ञेय इत्यर्थः ॥

सर्वं वारुणं पाङ्क्तमालम्बायनीयम् ॥

वरुणदैवत्यं पङ्क्तिछन्दस्कं सर्वमन्त्रगणमालम्बायनीयं जानीयात् । तस्यालम्बायन ऋषिर्ज्ञेय इत्यर्थः ॥

सर्वमैन्द्रं त्रैष्टुभं याज्ञवल्कीयम् ॥

इन्द्रदैवत्यं त्रिष्टुप्छन्दस्कं सर्वं मन्त्रगणं याज्ञवल्कीयं विद्यात् । याज्ञवल्क्यस्तस्य ऋषिरित्यर्थः ॥

सर्वमादित्यदैवतं जागतं कौत्सम् ॥

आदित्यदैवतं जगतीछन्दस्कं सर्वमन्त्रगणं कौत्सं विद्यात् । कुत्सस्येदं कौत्सम् । कुत्सोऽस्य ऋषिरित्यर्थः । अध्वरादौ सर्वास्तकर्मणि अनादिष्टं मन्त्रगणमित्येतत्समस्वपि सूत्रेष्वनुवर्त्तत एव । उदाहरणान्यत्राभियुक्तैः प्रयत्नतो गवेषणीयानि ॥

ज्योतिष्टोमे दीक्षाप्रभृति वक्ष्यामः ॥

ज्योतिष्टोमे दीक्षाप्रभृति दीक्षात आरभ्य सर्वाङ्गानां प्रधानानां च ऋषिदैवतछन्दांसि वक्ष्यामः । आमन्त्ररूपाणामपि

दीक्षादिकर्मणामुदयनीयातिरात्रान्तानामृष्यादिज्ञानात्फलविशेषो भवति । तथा च श्रूयते । यद्दे दीक्षन्तेऽग्नाविष्णू एव देवते यजन्तेऽग्नाविष्णू देवते भवन्ति अग्नाविष्णोः सायुज्यं सलोकतां जयतीत्यादि स पापीयान् भवति श्रेयांसं स आत्मनेत्यन्तम् । अत्राहुर्हरिस्वामिनः । एतदपि कर्मसु देवताविद्याब्राह्मणं प्रसन्नमेव । अग्नाविष्णू देवते भवन्त्यभेददर्शिनः । अग्नाविष्णोः सायुज्यं सलोकतां जयन्ति देवदर्शिनः । तत्रापि प्रकृष्टविद्याः सायुज्यं जयन्ति । मन्दविद्याः सलोकतामिति विशेषः । एव मुत्तरत्रापि वाच्यम् ॥

दीक्षायां भृगुरग्नाविष्णू गायत्री ॥

दीक्षायां भृगुरृषिः अग्नाविष्णू देवते गायत्री छन्दः ॥

प्रायणीय आङ्गिरसोऽदितिरुष्णिक् ॥

प्रायणीये आङ्गिरस ऋषिः अदितिर्देवता उष्णिक् छन्दः ॥

क्रये विश्वामित्र सोमोऽनुष्टुप् ॥

सोमक्रये विश्वामित्र ऋषिः सोमो देवता अनुष्टुप्छन्दः ॥

आतिथ्ये वसिष्ठो विष्णुर्बृहती ॥

आतिथ्ये कर्मणि वसिष्ठ ऋषिः विष्णुर्देवता बृहती छन्दः ॥

प्रवर्ग्ये कश्यप आदित्यः पङ्क्तिः ॥

प्रवर्ग्ये कश्यप ऋषिः आदित्यो देवता पङ्क्तिश्छन्दः ॥

उपसत्स्वात्रेय उपसद्देवता त्रिष्टुप् ॥

उपसत्स्वात्रेय ऋषिः । उपसद्देवता त्रिष्टुप्छन्दः ॥

अग्नीषोमीयेऽगस्त्यो ऽग्नीषोमौ जगती ॥

अग्नीषोमीयेऽगस्त्यऋषिः अग्नीषोमौ देवते जगती छन्दः ॥

प्रायणीयेतिरात्र आग्निवेश्योऽहोरात्रे अति-
जगती ॥

प्रायणीयेतिरात्रे आग्निवेश्य ऋषिः । अहोरात्रे देवते । अति-
जगती छन्दः ॥

चतुर्विंशत्यहे शौकरायणः संवत्सरः शक्वरी ॥

चतुर्विंशत्यहे सौकरायण ऋषिः । संवत्सरो देवता । शक्वरी
छन्दः ॥

अभिप्लवे षडहे सावर्णो ऽर्धमासा मासाश्चाति-
शक्वरी ॥

अभिप्लवे षडहे सावर्ण ऋषिः । अर्धमासा मासाश्च देवताः ।
अतिशक्वरी छन्दः ॥

पृष्ठ्ये षडहे सायकायन ऋतवो ऽष्टिः ॥

पृष्ठ्ये षडहे सायकायन ऋषिः । ऋतवो देवता । अष्टिश्छन्दः ॥

अभिजिति प्रियव्रतो ऽग्निरत्यष्टिः ॥

अभिजिति प्रियव्रत ऋषि । अग्निर्देवता । अत्यष्टिश्छन्दः ॥

स्वरसामसु सरस्वत्यापो धृतिः ॥

स्वरसामसु सरस्वती ऋषि । आपो देवता । धृतिश्छन्दः ॥

विषुवति रौहिणायन आदित्योऽतिधृतिः ॥

विषुवति रौहिणायन ऋषिः । आदित्यो देवता । अतिधृति-
श्छन्दः ॥

विश्वजिति सौभर इन्द्रः कृतिः ॥

विश्वजिति सौभर ऋषिः । इन्द्रो देवता । कृतिश्छन्दः ॥

गोपायुषोर्वार्कलिर्मित्रावरुणौ प्रकृतिः ॥

गोपायुषोर्वार्कलिर्ऋषिः । मित्रावरुणौ देवते । प्रकृतिश्छन्दः ॥

दशरात्र आचार्यो विश्वेदेवा आकृतिः ॥

दशरात्रे आचार्य ऋषिः । विश्वेदेवा देवताः । आकृतिश्छन्दः ॥

दशरात्रिके पृष्ठ्ये षडहे भाल्लवेयो दिशो विकृतिः ॥

दशरात्रिके दशरात्रसम्बन्धिनि पृष्ठ्ये षडहे भाल्लवेय ऋषिः । दिशो देवताः । विकृतिश्छन्दः ॥

छन्दोमेषु शौल्वायन इमे लोका संकृतिः ॥

छन्दोमेषु शौल्वायन ऋषिः । इमे लोका देवताः । संकृतिश्छन्दः ॥

दशमेऽहनि पराशरः संवत्सरोऽभिकृतिः ॥

दशमेऽहनि अविवाक्ये पराशर ऋषिः । संवत्सरो देवता । अभिकृतिश्छन्दः ॥

महाव्रते शैलिनः प्रजापतिरुत्कृतिः ॥

महाव्रते शैलिन ऋषिः । प्रजापतिर्देवता । उत्कृतिश्छन्दः ॥

उदयनीयेतिरात्रे औवायनो वायुश्छन्दांसि सर्वाणि ॥

उदयनीये अतिरात्रे औवायन ऋषिः । वायुर्देवता । सर्वाणि गायत्र्यादीन्युत्कृतिपर्यन्तानि छन्दांसि ॥ १२ ॥

ऋषिभिरुपलक्षितं वाक्यम् ॥

ऋषिभिः परमेष्ठ्यादिभिर्मन्त्रवाक्यमुपलक्षितं ज्ञापितं नियमानमेव प्रकटीकृतम् ॥

ऋषयश्छन्दोभिरुपलक्षिताः ॥

परमेष्ठ्यादय ऋषयः तत एतं परमेष्ठी प्रजापत्यो यज्ञमपश्यद्दर्शपूर्णमासौ, इत्यादिभिश्छन्दोभिर्वेदवाक्यैरुपलक्षिताः ख्यापिताः ॥

देवता मन्त्रवर्णादृग्यजुषयोर्विनियोगतश्च विज्ञेयाः ॥

ऋग्यजुषयोर्मन्त्रवर्णादृग्यजुषयोर्विनियोगाच्च मन्त्राणां देवता ज्ञेयाः । मन्त्रवर्णात्तावत् । इन्द्रो वीर्यमक्षणोदित्येवमादौ । विनियोगाच्च । यथा निवेशनः सङ्गमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठत इति । अत्र गार्हपत्योपस्थाने विनियोगादस्या गार्हपत्योऽग्निर्देवतेति ज्ञेयम् ॥

सर्वमेतच्छन्दो दैवतमार्षं च विज्ञाय यत्किञ्चित्तपहोमादि करोति तस्य फलमश्नुते ॥

एतच्छन्दो दैवतमार्षञ्च विज्ञाय विशेषतो ज्ञात्वैवास्य मन्त्रस्यायं ऋषिः इयं देवता इदं छन्दः इत्येवं ज्ञात्वैव यत्किञ्चिज्जपहोमयागाध्ययनाध्यापनयाजनादिकं कर्म करोति तस्य कर्मणः फलमश्नुते प्राप्नोति नान्यथा ॥

ब्रह्मयज्ञारम्भे यथाविधि स्नात्वा छन्दःपुरुषमेनोनिर्णोदनं शरीरे न्यसेत् ॥

ब्रह्मयज्ञारम्भे स्वाध्यायारम्भे यथाविधि यथोक्तो नित्यस्नानं नद्यादावित्यनेनैवप्रकारेण स्नात्वा स्नानं कृत्वा छन्दःपुरुषं वेदपुरुषमेनोनिर्णोदनं पापक्षयकरं सर्वोपद्रवनाशनं शरीरे न्यसेत् । स्वदेहे न्यसेत्॥

कीदृश्छन्दःपुरुष इत्यपेक्षायां तत्स्वरूपमाह ॥

## तिर्यग्बिलश्चमस ऊर्द्ध्वबुध्नः ॥

तस्य छन्दःपुरुषस्य तिर्यग्बिलस्तिर्यक्छिद्रमिदमेव शिरश्चमसः चमस्यतेऽन्नेनेति रसा इति चमसः कीदृशः ऊर्द्ध्वबुध्नः । ऊर्द्ध्वबन्धनः । उपरि ह्यवस्थितमेतद्बन्धनमस्य शरीरस्य । एतद्वियोगे हि विस्रस्यते शरीरमनेनास्य शिर उक्तम् । एवंविधमेतच्छन्दःपुरुषस्य शिरः । तस्य मुखे न्यासः कर्त्तव्यः । तिर्यक् बिलं मुखं यस्य स तथा । ऊर्द्ध्वं बुध्नं यस्य स तथा । श्रुत्यन्तरमप्युक्तमाह । अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नमितीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्द्ध्वबुध्न इति ॥

## तस्याक्षिणी गौतमभरद्वाजौ ॥

तस्य छन्दःपुरुषस्य गौतमभरद्वाजावक्षिणी ज्ञेये । तत्र न्यासे प्रकारद्वयम् । मुखं स्पृष्ट्वा तिर्यग्बिलश्चमस ऊर्द्ध्वबुध्न इति पठितव्यम् । अक्षिणी स्पृष्ट्वा गौतमभरद्वाजाविति । एकोऽयं प्रकारः । मुखं स्पृष्ट्वा तिर्यग्बिलाय चमसायोर्द्ध्वबुध्नाय नमः । अक्षिणी स्पृष्ट्वा गौतमभरद्वाजाभ्यां नम इति । ततश्च यथारुच्यनुष्ठेयम् । एवं वक्ष्यमाणेष्वपि प्रकारद्वयं द्रष्टव्यम् ॥

## श्रोत्रे विश्वामित्रजमदग्नी ॥

तस्य छन्दःपुरुषस्य विश्वामित्रजमदग्नी श्रोत्रे कर्णौ ॥

## नासिके वशिष्ठकश्यपौ ॥

तस्य छन्दःपुरुषस्य वसिष्ठकश्यपौ नासिके ज्ञेये ॥

## वागत्रिः ॥

अत्रिर्ऋषिरस्य वाग्ज्ञेया ॥

## गायत्रीं छन्दोऽग्निदेवतां शिरसि विन्यसेत् ॥

ततो गायत्रीं छन्दोऽग्निदेवतां शिरसि विन्यसेत् । गायत्र्यै नमोऽग्नये नम इति ॥

एवमेवोष्णिहꣳ सवितारं ग्रीवासु ॥

विन्यसेदिति शेषः । उष्णिह छन्दः सवितारं देवतामेवमेव ग्रीवासु विन्यसेत् । उष्णिहे नमः सवित्रे नम इति ॥

अनूके बृहतीं बृहस्पतिम् ॥

बृहतीछन्दो बृहस्पतिदेवताश्चानूके पृष्ठवंशे विन्यसेत् । बृहत्यै नमो बृहस्पतये नम इति ॥

बाह्वोर्बृहद्रथन्तरे द्यावापृथिवी ॥

बृहद्रथन्तरे छन्दसी बाह्वोर्न्यसेत् । बृहद्रथन्तराभ्यां नमो द्यावापृथिवीभ्यां नम इति ॥

, मध्ये त्रिष्टुभमिन्द्रम् ॥

मध्ये उदरे त्रिष्टुभं छन्द इन्द्रं देवतां न्यसेत् । त्रिष्टुभे नम इन्द्राय नम इति ॥

श्रोण्योर्जगतीमादित्यम् ॥

जगतीं छन्द आदित्यं देवतां श्रोण्योः कट्योर्न्यसेत् । जगत्यै नम आदित्याय नम इति ॥

मेढ्रेऽतिच्छन्दसं प्रजापतिम् ॥

अतिच्छन्दसं छन्दः प्रजापतिं देवतां मेढ्रे लिङ्गे न्यसेत् । अतिच्छन्दसे नमः प्रजापतये नम इति ॥

पायौ यज्ञायज्ञियं वैश्वानरम् ॥

यज्ञायज्ञियं छन्दो वैश्वानरं देवतां पायावपाने न्यसेत् । यज्ञायज्ञियाय नमो वैश्वानराय नम इति ॥

ऊर्वोरनुष्टुभं विश्वान्देवान् ॥

अनुष्टुभं छन्दो विश्वान्देवान् देवता ऊर्वोः सक्थ्नोर्न्यसेत् । अनुष्टुभे नमो विश्वेभ्यो देवेभ्यो नम इति ॥

अष्ठीवतोः पङ्क्तिं मरुतः ॥

पङ्क्तिश्छन्दो मरुतो देवता अष्ठीवतोर्जान्वोर्न्यसेत् । पङ्क्तये नमो मरुद्भ्यो नम इति ॥

पादयोर्द्विपदां विष्णुम् ॥

द्विपदां छन्दो विष्णु देवताञ्च पादयोर्न्यसेत् । द्विपदाय नमो विष्णवे नम इति ॥

प्राणेषु विच्छन्दसं वायुम् ॥

प्राणेषु चक्षुःश्रोत्रादिषु सर्वेषु प्राणेषु प्राणायतनेषु विच्छन्दसं वायुञ्च न्यसेत् । विच्छन्दसे नमो वायवे नम इति ॥

न्यूनातिरिक्तेष्वङ्गेषु न्यूनाक्षरं छन्दो आपो देवतेति ॥

न्यूनाक्षर छन्द आपो देवता न्यूनातिरिक्तेष्वङ्गेषु न्यसेत् । न्यूनाक्षराय छन्दसे नमोऽद्भ्यो नम इति च ॥

एवठं० सर्वाङ्गेषु योजयित्वा वेदमयः सम्पद्यते ॥

एवमनुना प्रकारेण सर्वाङ्गेषु सर्वेषु शिरोग्रीवादिष्ववयवेषु योजयित्वा छन्दोदैवतन्यासं कृत्वा स्वयं वेदमयः सम्पद्यते वेदरूपो भवति ॥

तथा शापानुग्रहसमर्थो भवति ॥

तत्र धनादिहानिर्भवत्विखेवमादिरूपशापेऽपायां तथा तत्र पुत्रधनविद्यादिसम्पत्तिर्भवत्वेवमादिरूपे अनुग्रहे शोभनेपपायाञ्च समर्थो भवति ॥

ब्राह्मं तेजश्च वर्द्धते ॥

चास्य ब्राह्मं तेजो ब्रह्मवर्चसं वर्द्धते ॥

न कुतश्चिद्भयं विन्दति ॥

अयं कुतश्चिदपि चोरव्याघ्रादेर्भयं न विन्दते न प्राप्नोति ॥

ऋङ्मयो यजुर्मयः साममयस्तेजोमयो ब्रह्ममयोऽमृतमयः सम्भूय ब्रह्मैवाभ्येति ॥

ऋगादिरूपो भूत्वा ब्रह्मैवाभ्येति मुक्तिं प्राप्नोतीत्यर्थः ॥

तस्मादेतन्नाब्रह्मचारिणे नातपस्विने नासंवत्सरोषिताय नाप्रवक्त्रेऽनुब्रूयात् ॥

तस्मात्कारणादेतत्पूर्वोक्तमृग्यजुःक्रमणमब्रह्मचारिणे न ब्रूयात् । अतपस्विने च न ब्रूयात् । तपो विद्यते यस्यासौ तपस्वी अतपस्विने न ब्रूयात् । तथा ऽसंवत्सरोषिताय य. संवत्सरं समीपे नोषितो न स्थितस्तस्मा एतन्न ब्रूयात् । तथा ऽप्रवक्त्रे य. स्वयं ज्ञात्वाऽन्यान पाठयति तस्मै च नानुब्रूयात् ॥

अनेनाधीतेन चान्द्रायणाब्दफलमवाप्नोति ॥

अनेन सर्वानुक्रमणिकाख्येन ग्रन्थेनाधीतेन पठितेन चान्द्रायणाब्दस्य फलमवाप्नोति प्राप्नोति । चान्द्रायणव्रतसम्बन्धी अब्दः संवत्सरश्चान्द्रायणाब्दः । संवत्सरं चान्द्रायणव्रताचरणेन यावत्फलं तावदेतद्ग्रन्थाध्ययनमात्रेण प्राप्नोतीत्यर्थ. ॥

अनेन च सम्यग्ज्ञातेन ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोत्याप्नोति ॥

अनेन च प्रागुक्तेन ग्रन्थेन सम्यग्ज्ञानेन यथार्थं बुद्धेनावगतेन ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोति । अत्रापि प्रकृतविदः सायुज्यं प्राप्नोति मन्दतरः सलोकतामिति विशेषः । द्विरभ्यासोऽध्यायपरिसमाप्तिसूचनार्थः ॥

इति श्रीविरञ्चिविसम्राट्स्थपतिर्विश्वकर्तुब्रह्मद्वाराभिकश्रीप्रजापतिसुतमहायाज्ञिकश्रीदेवकृते ऽनुक्रमणीव्याख्याने चतुर्थोऽध्यायः ॥

---

अथ छन्दांसि ॥

अभिधीयन्त इति शेषः। अथानन्तरं छन्दांस्यभिधीयन्ते। अथ तेषां छन्दसां नामान्याह ॥

गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतयः कृतिप्रकृत्याकृतिविकृतिसङ्कृत्यभिकृत्युत्कृतयः ॥

गायत्र्यादय उत्कृतिपर्यन्ता एकविंशतिश्छन्दांश्छन्दसां सञ्ज्ञाः। सञ्ज्ञाकरणं समिधान्निय्ययतस्रो गायत्र्य इत्यादौ संव्यवहारार्थम्। अथैतेषामेव छन्दसामक्षरसंख्यामाह ॥

चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि ॥

एतानि गायत्र्यादीन्युत्कृतिपर्यन्तानि एकविंशतिसंख्यानि छन्दांसि चतुर्विंशत्यक्षरादीनि चतुर्विंशत्यक्षरात्मकं गायत्रीसञ्ज्ञं छन्द उपक्रम्य चतुरुत्तराणि भवन्ति। पूर्वपूर्वछन्दोऽपेक्षया उत्तरमुत्तरं छन्दश्चतुर्भिश्चतुर्भिरक्षरैरधिकं भवतीत्यर्थः। तथाहि। गायत्री चतुर्विंशत्यक्षरा। तदपेक्षया चतुर्भिरक्षरैरधिकोष्णिगष्टाविंशत्यक्षरा। उष्णिगपेक्षयानुष्टुप्चतुर्भिरक्षरैरधिका द्वात्रिंशदक्षरा। अनुष्टुबपेक्षया चतुर्भिरक्षरैरधिका बृहती षट्त्रिंशदक्षरा। एवमेव प्रतिच्छन्दः पूर्वपूर्वापेक्षया चतुरक्षरवृद्धिर्ज्ञेया। चत्वारिंशदक्षरा पङ्क्तिः। चतुश्चत्वारिंशदक्षरा त्रिष्टुप्। अष्टाचत्वारिंशदक्षरा जगती। द्वापञ्चाशदक्षराऽतिजगती। षट्पञ्चाशदक्षरा शक्वरी। षष्ट्यक्षराऽतिशक्वरी। चतुःषष्ट्यक्षरा अष्टिः। अष्टषष्ट्यक्षरा अत्यष्टिः। द्वासप्तत्यक्षरा धृतिः। षट्सप्तत्यक्षराऽतिधृतिः। अशीत्यक्षरा कृतिः। चतुरशीत्यक्षरा प्रकृतिः। अष्टाशीत्यक्षरा आकृतिः। द्वानवत्यक्षरा

विकृतिः । षण्णवत्यक्षरा सङ्कृतिः । शताक्षरा ऽभिकृतिः । चतुरधिकशताक्षरोत्कृतिरिति । एतेषामुदाहरणानि प्रागेव दर्शितानि ॥

## ऊनाधिकेनैकेन निचृद्भुरिजौ ॥

पूर्वोक्तानां नियताक्षराणां गायत्र्यादीनामुत्कृतिपर्यन्तानां छन्दसामेकेनाक्षरेणोनेन न्यूनेनैकेनाधिकेनातिरिक्तेन यथाक्रमं निचृद्भुरिगित्येते सञ्ज्ञे भवतः । तद्यथा । गायत्री चतुर्विंशत्यक्षरा सैकेनाक्षरेणोना त्रयोविंशत्यक्षरा निचृदित्युच्यते । सैवैकाधिका पञ्चविंशत्यक्षरा भुरिगित्युच्यते । एवमनुष्टुबाद्युत्कृतिपर्यन्तानां ज्ञेयम् ॥

## द्वाभ्यां विराट्स्वराजौ ॥

सर्वेषां छन्दसां द्वाभ्यामक्षराभ्यां न्यूनाभ्यां विराट्सञ्ज्ञा भवति । द्वाभ्यामक्षराभ्यामधिकाभ्यां स्वराट्सञ्ज्ञा भवति । अत्रो-नाधिकेनेत्यनुवर्तते । तदूनाधिकाभ्यामिति विपरिणम्य द्वाभ्यामित्यनेन सम्बध्यते । तद्यथा द्वाविंशत्यक्षरा गायत्री विराट् । षड्विंशत्यक्षरा स्वराट् । एवं त्रिंशदक्षरा विराडनुष्टुप् । चतुस्त्रिंशदक्षरा स्वराट् । षड्विंशत्यक्षरा विराडुष्णिक् । त्रिंशदक्षरा स्वराडुष्णिगिति । एवमुत्कृतिपर्यन्तेषूह्यम् । अत्र शास्त्रे निचृदादिसञ्ज्ञाचतुष्टयस्य क्वचिदप्यनुक्तिर्नावधार्या । अन्यथा सर्वत्र न्यूनाधिकाक्षरत्वस्य विद्यमानत्वेन निचृदादिसञ्ज्ञोपबन्धे सति शास्त्र गुरुतरं स्यादतः स्वयमेवोह्लिला यथासम्भवमेतत्सञ्ज्ञाचतुष्टयं ज्ञेयम् ॥

अथ न्यूनाक्षरेष्वक्षरपूरणोपायमाह ॥

## पादपूरणार्थन्तु क्षैप्रसंयोगैकाक्षरीभावान्व्यूहेत् ॥

न्यूनाक्षरेषु पादेषु पादपूरणार्थं क्षैप्रसंयोगानेकाक्षरीभावांश्च

व्यूहेत्। विप्रे संहितायां भवः सन्धिः चैप्रः। चैप्रः संयोगी यका, रवकारसंयोगः। यवसंयोग इत्यपरे। तदुक्तम्।

समानाक्षरमन्त्यस्यां स्वाभकन्त्यं स्वरोदयम्।

न समानाक्षरे स्वे स्वे ते चैप्राः प्राकृतोदयाः॥ इति।

ते सन्धयः चैप्रा इत्यर्थः। एकः पूर्वपरयोरित्यस्मिन्नधिकारे यः सन्धिराद्गुणो वृद्धिरेचीत्यादिभिर्द्वयोरचोः स्थाने य एकादेशः स एकाक्षरीभावः। अनेकाक्षरस्यैकाक्षरभाव एकाक्षरीभावः। एतान्पादपूरणार्थं व्यूहेत्। पृथक्कुर्यात्। तदुक्तम्। व्यूहेदेकाक्षरीभावान्पादेषूनेषु सम्पदे। ऊनेषु पादेषु सम्पदे सम्पदर्थं एकाक्षरीभावान् सन्धीन्व्यूहेत्। पृथक्कुर्यादित्यर्थः। तथा। चैप्रवर्णांश्च संयोगान्व्यवेयात्सदृशैः स्वरैरिति। अस्यार्थः। चैप्रवर्णान् संयोगानन्त्यस्थासंयोगानित्यर्थः। व्यवेयात्। व्यवधानं कुर्यात्। कैः सदृशैः समानस्थानैर्वर्णैः। तद्यथा। त्र्यम्बकं यजामहे। तत्सवितुर्वरेण्यियमिति। अत्र यकारस्य समानस्थानेनेकारेण व्यवायेन पादपूरणम्। तथा त्वंनः सविरासतिरिति। सुवर्णमस्तोहसनस्य गोपामिति। अत्र वकारस्य समानस्थानेनोकारेण व्यवायः। पिङ्गलोऽपि। पादद्वयादिपूरण इति यकारस्य समानस्थानेनेकारेण व्यवायमाह। आदिशब्देनोवादि गृह्यते। क्वचिद्रेफमपि व्यूहेत्। अयं समानस्थानैः स्वरैर्व्यवायः स्वाभाविकेष्वेव यकारवकारसंयोगेषु भवति। यथा समुद्रपर्णायरन्ति नी नर इति। यणादेशेन कृतेषु यकारवकारसंयोगेषु तु अपु अन्तरमृतमिति वामं गयति अध्वर इत्येव पदप्रकृत्या व्यूहः कार्यः। यकारवकारसंयोग एवायं व्यवाय इष्यते। रेफलकारसंयोगयोस्तु नेष्यत इति प्रातिशाख्यभाष्ये। गायत्रविधाने। प्राकृतसस्वयोः सन्देहे सम्प्यो विकल्पः। सदृशयोस्तु परो विकल्प इति। यत्र तु द्विशादिव्यूहस्थानानि तत्र पूर्वव्यूहेनैव पाद-

पूरणे सिद्धे द्वितीयादौ न व्यूहेत् । अथैकाक्षरीभावव्यूहोदाहरणानि । प्र इता जयता नर, इत्यत्राहुण इत्येकादेशस्य गुणस्य व्यूहेन पूरणम् । प्र ऐतु ब्रह्मणस्पतिरित्यत्रैवैषलञ्जृखिति वृद्धेरेकादेशस्य व्यूहः । परिमाग्ने दुश्चरितादित्यत्राकः सवर्णे दीर्घ इत्यनेन सत्यैकादेशस्य दीर्घस्य व्यूहः । अधिव्रवन्तु ते ऽवन्त्वस्मानित्यत्रैङः पदान्तादिति एकादेशस्य पूर्वरूपस्य व्यूहः । छन्दोगपरिशिष्टे ऽपि । सर्वच्छन्दःस्वेकेन पञ्चाक्षरेण मद्गुमती भवत्यथैकाक्षरहीना निवृदेकाधिका भुरिक् । द्व्यूना विराट् । द्व्यधिका स्वराडल्पीयोमध्या त्रिपाल्पिपीलिकमध्या भूयोमध्या यवमध्येति । यवाभ्यां यकारवकारविकर्षेण न्यूनानि छन्दांसि पूरयेच्चाम्बदेन च मदस्त्रवर्जम् । पदप्रकृत्या च । त्वमन्दे न्यूनत्वे तु शब्दपूरण इति । तदेवं यत्र व्यूहः सम्भवति तत्र व्यूहेन पूरणम् । यत्र तु व्यूहेनापि न पूर्यन्ते तत्र निवृद्भुरिग्विराट्स्वराडादिसंज्ञा । यत्र तु सन्देहो जायते यथा क्वचिदष्टाविंशदक्षराणि भवन्ति । तत्र किमियं बृहती वा द्व्यधिका । अथवा पङ्क्तिर्द्व्यूनेति । तत्र विकल्पो बृहती वा पङ्क्तिर्वेति । तथा च सूत्रकारः । स्वतवो बृहती पङ्क्तिर्वा । उपज्मं जगती त्रिष्टुब्वा । चतुस्त्रिंशदक्षरदैवत्या पङ्क्तिस्त्रिष्टुब्वेति । एवं पिङ्गलोक्तेष्वपि छन्दःसुत्कृतिपर्यन्तेषु सन्देहे विकल्पो द्रष्टव्यः । अधिकाक्षरं पूर्वं छन्दो न्यूनाक्षरोत्तरमिति । तथा ॥

अक्षराण्येव सर्वत्र निमित्तं बलवत्तरम् ।
विद्यादिप्रतिपन्नानां पादवृत्ताक्षरैस्तु वाम् ॥ इति ।

अस्यार्थः । पादैर्वृत्तैरक्षरैश्च विप्रतिपन्नानामृचां सर्वत्र बलवत्तरं निमित्तमक्षराण्येव विद्यात् । यथा मोदुष्टमेति पादैर्विप्रतिपन्ना अक्षरैस्त्रिष्टुबध्यवसीयते । यथैषा ते अग्ने समिदिति वृत्तेन विप्रतिपन्ना ऽक्षरैरनुष्टुबवसीयते । यदा काचित्पद्वियत्यक्षरा

ऋग्भवति। तत्र सन्देहः किमियं स्वराट् गायत्री उत विराडुष्णिगिति। एवं सर्वछन्दःसु संशय उक्तः। तदा निर्णयोपायमाह पिङ्गलः। आदितः सन्दिग्धे। सन्दिग्धे छन्दस्यादितः प्रथमपादाच्छन्दो निश्चेतव्यम्। यदा प्रथमः पादोऽष्टाक्षरस्तदा सा गायत्री। यदा द्वादशपादोष्णिगिति। एवं सर्वेषु। तथा दैवतादितः। सन्दिग्धं छन्दो देवतादिभिर्निश्चेतव्यम्। तद्यथा। यदा सन्दिग्धे छन्दस्यग्निर्देवता भवति तदा सा गायत्री। यदा सविता तदोष्णिक्। यदा सोमस्तदानुष्टुबित्यादि॥

आद्ये तु सप्तवर्गे पादविशेषात्संज्ञाविशेषः॥

तुशब्दोऽवधारणे। गायत्र्यादीनामेकविंशतिसंख्यानां छन्दसां त्रयः सप्तवर्गाः। तेषां त्रयाणां सप्तवर्गाणां मध्ये आद्य एव सप्तवर्गे गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीत्येतेषां सप्तानां छन्दसां वर्गे समूहे पादविशेषात् पादानां चतुरक्षरपञ्चाक्षरषडक्षरसप्ताक्षराष्टाक्षरनवाक्षरत्वादिरूपविशेषात् संज्ञाविशेषाः पदपङ्क्त्यादयो भवन्ति न द्वितीयतृतीयसप्तवर्गयोः॥

ताननुक्रामन्त एवोदाहरिष्यामः॥

तान्प्रकृतसंज्ञाविशेषाननुक्रामन्त एव अध्यायानुक्रमणं कुर्वन्त एवोदाहरिष्यामः। पदपाङ्क्तो नवमः। अन्यत्र तु पादनिवृत्। उपरिष्टाज्ज्योतिःप्रभृत्येवम्॥

विराड्रूपा विराट्स्थानाश्च बहूना अपि त्रिष्टुभ एव॥

त्र्यकौ वैराजश्चेत्त्रिष्टुभश्च द्वौ वा वैराजौ नवकश्चेत्त्रिष्टुभश्च विराट्स्थानेति। एकादशिनस्त्रयोऽष्टकश्च विराड्रूपेति च वक्ष्यति। तत्रेदमुच्यते। त्रिष्टुभश्चतुश्चत्वारिंशदक्षरत्वाद्विराड्रूपाया एकचत्वा

रिंशदक्षरत्वाद्विराट्त्वानापत्तेश्चैकोनचत्वारिंशदक्षरत्वाच्चत्वारिंशदक्षरायाश्च त्रिष्टुप्त्वं न भविष्यतीति शङ्कायामाह। विराड्रूपा विराट्स्थानाय ऋचो बह्व्यो अपि बहुभिरक्षरैरूना अपि त्रिष्टुभ एव। ऊनाक्षरत्वात्त्रिष्टुभो न भवन्तीति शङ्का न कार्येत्यर्थः। किं च स्यात्। एकोनचत्वारिंशदक्षराया निचृत्पङ्क्तित्वं चत्वारिंशदक्षरायाः पङ्क्तित्वमेकचत्वारिंशदक्षराया भुरिक्पङ्क्तित्वं स्यात् तन्मा भूदित्येवमर्थमस्यारम्भः ॥

इत्युद्देशः ॥

इतिशब्दः प्रकारे। इति अनेन प्रकारेण सर्वच्छन्दसामुद्देशः। एकद्वित्र्यक्षरैरूनानामपि स्वसंज्ञयैव संकीर्तनम्। सैव संज्ञा ज्ञेयेत्यर्थः। उद्दिश्यते ऽभिधीयते ऽनेनेत्युद्देशः संज्ञा। यथा विराड्रूपादीनां न्यूनाक्षराणामपि त्रिष्टुप्त्वमेव। एवमितरेषामपि छन्दसां न्यूनाधिकत्वेऽपि तत्तच्छन्दस्त्वमेव भवति। न ह्येकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यामिति श्रुतिः। तथा नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्यामिति श्रुतेश्च। यथा त्रयः सप्तकाः पादा निचृदिति त्रिभिरूनापि गायत्र्येव ॥

तत्र दशैकादशद्वादशाक्षराणां वैराजत्रैष्टुभजागता इति संज्ञाः ॥

तत्र छन्दसां पादविशेषेण संज्ञाविशेषाभिधाने दशाक्षरैकादशाक्षरद्वादशाक्षराणां पादानां यथाक्रमं वैराजत्रैष्टुभजागता इति तिस्रः संज्ञाः। दशाक्षराणामित्यत्र पादानामिति शेषः। अक्षरत्रयस्य प्रत्येकं सम्बन्धः। तेन दशाक्षरस्य पादस्य वैराज इति संज्ञा। एकादशाक्षरस्य त्रैष्टुभ इति। द्वादशाक्षरस्य जागत इति। संज्ञाकरणं संव्यवहारार्थम्। संव्यवहारश्च नवको

वैराजस्त्रैष्टुभयैति त्रिजागतोद्दैष्टक्तोत्येवमादी। पिङ्गलोऽपि। पादः। इत्यादिपूरणम्। गायत्र्या वसवः। जगत्या आदित्याः। विराजो दिशः। त्रिष्टुभो रुद्रा इत्याह। दशाक्षरा विराट्। एकादशाक्षरा त्रिष्टुप्। द्वादशाक्षरा वै जगतीत्यादिश्रुतिरपि पादाक्षराभिप्रायेणैव ॥

अनादेशे ऽष्टाक्षराः पादाः ॥

अनादेशे ऽक्षरसङ्ख्यानुक्तौ पादा अष्टाक्षरा भवन्ति ॥

चतुष्पदाश्चर्चः ॥

चकारादनादेशे ऽनुक्तपादसङ्ख्या ऋचश्चतुष्पदा भवन्ति ॥

प्रथमं छन्दस्त्रिपदा गायत्री ॥

चतुर्विंशत्यक्षरं प्रथमं छन्दो गायत्री। सा च त्रिपदा भवति। त्रयः पादा यस्याः सा त्रिपदा। पादस्य लोपोऽहस्त्यादिभ्य इत्यन्त्यलोपः। टाबृचीति टाप्। पादः पत्। अस्या उदाहरणं समिधाग्निं दुवस्यतेत्यादिकम्। अस्या अष्टाक्षरास्त्रयः पादाः। तथा च छन्दोगानम्। त्रयोऽष्टकाः स्वभावस्त्विति। गायत्रीति प्रागुष्णिहोऽधिकारः ॥

पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा षट्पङ्क्तिः ॥

गायत्रीत्यनुवर्तते। पञ्चाक्षराणि परिमाणमस्यासौ पञ्चकः। सङ्ख्याया अतिशदन्तायाः कन्। एवं षट्कादयोऽपि। पञ्चकाः पञ्चाक्षराश्चत्वारः पादाः। एकः षट्कः षडक्षरः। अथवा चतुर्थः पादश्चतुष्कश्चतुरक्षरः सा षड्विंशत्यक्षरा पञ्चविंशत्यक्षरा वा षट्पदपङ्क्तिर्गायत्री। अध्वाध्वन इति प्रथमपक्षस्योदाहरणम्। चतुर्थश्चतुष्को वेत्यस्योदाहरणमन्ते तमेवेति। तदुक्तं पिङ्गले। षट्पङ्क्तिः पञ्च। चतुष्कषट्कौ त्रयश्चेति ॥

## षट्सप्तैकादशा उष्णिग्गर्भा ॥

गायत्रीत्येव । यस्याः षडक्षरसप्ताक्षरैकादशाक्षराः क्रमेण त्रयः पादाः सा चतुर्विंशत्यक्षरोष्णिग्गर्भा गायत्री भवति । उदाहरणमृग्वेदे । ता मे अश्व्यानाम् ॥

## त्रयः सप्तकाः पादनिचृत् ॥

यस्या गायत्र्यास्त्रयः सप्ताक्षराः पादाः सैकविंशत्यक्षरा पादनिचृल्लक्षणा गायत्री । अभीषुणः सखीनामित्युदाहरणम् । तथा च पिङ्गलः । क्वचित्त्रिपादृषिभिः । सा पादनिचृदिति । त्रिपात् पादनिचृत्सप्तका सप्ताक्षरैरिति छन्दोगानाम् । अत्र पिङ्गले विशेषः । आद्यश्चतुष्पाच्चतुर्भिरिति । आद्यं प्रथमं गायत्रीसञ्ज्ञं छन्दश्चतुर्भिः षडक्षरैश्चतुर्भिः पादैश्चतुष्पाद्भवति । छन्दोगानां च । चतुष्पाच्चेद्गायत्री षडक्षरैरिति ॥

## मध्यमः षट्कश्चेदतिनिचृत् ॥

यस्या आद्यतृतीयौ सप्ताक्षरौ मध्यमः षट्कः षडक्षरः सा विंशत्यक्षराऽतिनिचृद्गायत्रीति सञ्ज्ञा । उदाहरणमृग्वेदे । पुरुतमं स्तोतॄणामिति ॥

## दशकश्चेद्यवमध्या ॥

गायत्रीत्यनुवर्त्तते । यस्या गायत्र्याः प्रथमतृतीयौ सप्ताक्षरौ पादौ मध्यमो दशाक्षरः सा चतुर्विंशत्यक्षरा यवमध्या गायत्री । उदाहरणम् । सतन्वेयो वसूनामिति । तदुक्तम् ॥

आद्ये पादे तृतीये च सप्तके मध्यमो यदि ।
दशाक्षरः सा गायत्री यवमध्या प्रकीर्त्तितेति ॥

## यस्यास्तु षट्कसप्तकाष्टकाः सा वर्द्धमाना ॥

गायत्रीत्यनुवर्त्तते । यस्या आद्यः पादः षडक्षरो द्वितीयः

सप्ताक्षरस्तृतीयोऽष्टाक्षरः सा वर्द्धमाना गायत्रीति सञ्ज्ञा भवति। उदाहरणम्। अग्निनद्रेपम्। षट् सप्ताष्टौ च वर्द्धमानेति छन्दोगानाम्॥

विपरीता प्रतिष्ठा॥

या पूर्वोक्तविपरीता प्रथमोऽष्टाक्षरो द्वितीय सप्ताक्षरस्तृतीय. षडक्षर इत्येवंविधा सैकविंशत्यक्षरा प्रतिष्ठासञ्ज्ञा गायत्री। उदाहरणम्। त्वमग्ने व्रतपा इति। पुरीष्योसि विश्वभरा इति च। तदुक्तं पिङ्गले। अष्टौ सप्त षट् चेति प्रतिष्ठा। एषैव विपरीता वर्द्धमानेति। छन्दोगानामपि। अष्टसप्तषड्भिः प्रतिष्ठेति॥

द्वौ षट्कौ सप्तकश्चेति ह्रसीयसी॥

गायत्रीत्यनुवर्त्तते। यस्या द्वौ पादौ षडक्षरावेकः सप्ताक्षर एवंविधा सैकोनविंशत्यक्षरा ह्रसीयसी गायत्रीसञ्ज्ञा भवति। उदाहरणमृग्वेदे। श्रेष्ठमुप्रियाणामिति। एवं दश गायत्र्य उक्ताः। तदुक्तम्। इति पादविभागेन दश गायत्र्य ईरिता इति॥

द्वितीयमुष्णिक्त्रिपदा॥

अष्टाविंशत्यक्षरं द्वितीयं छन्द उष्णिक् सा त्रिपदा भवति। त्रयः पादा यस्याः सा त्रिपदा। उष्णिगित्ययमधिकारः प्रागनुष्टुबधिकारात्॥

अन्त्यो द्वादशकः॥

अस्यास्त्रिपदाया उष्णिहोऽन्त्यस्तृतीयः पादो द्वादशकः। द्वादशाक्षराणि परिमाणमस्यासौ द्वादशकः। प्रथमद्वितीयौ त्वष्टाक्षरावेव। उदाहरणम्। अग्ने वाजस्य गोमत इति। तदुक्तम्। उष्णिमा वाद्यौ जागतश्चेति। छन्दोगानाञ्च। उष्णिगष्टाक्षरौ द्वादशकश्चेति।

अत्राह पिङ्गलः । परोष्णिक् परत इति । छन्दोगानाञ्च । स एवो-परिष्टात्पर उष्णिगिति । स इति द्वादशाक्षरः पादः ॥

आद्यश्चेत्पुर उष्णिक् ॥

यस्या उष्णिह आद्यः पादो द्वादशाक्षरः । अन्त्यावष्टाक्षरौ । सा पुरउष्णिक्संज्ञा भवति । आदौ भव आद्यः । आद्यः प्रथमो द्वादशकश्चेत्सा पुर उष्णिगिति सूत्रार्थः । तदुक्तम् । पुर उष्णिक् परत इति । छन्दोगानामपि । स पुरश्चेत्पुर उष्णिगिति । स इति द्वादशक । उदाहरणम् । अप्स्वन्तरमृतमिति ॥

मध्यमश्चेत्ककुप् ॥

उष्णिहो मध्यमः पादो द्वादशकश्चेत्सा ककुबुष्णिगिति संज्ञा भवति । तदुक्तम् । ककुम्मध्ये चेदन्त्य इति । छन्दोगानामपि । स चेन्मध्ये ककुब्भवतीति । उदाहरणम् । भद्रो नो अग्निराहुत इति ॥

त्रैष्टुभजागतचतुष्काः ककुन्न्यङ्कुशिरा ॥

यस्या उष्णिहस्त्रैष्टुभजागतचतुष्काः क्रमेण पादाः । त्रैष्टुभ एकादशाक्षरः प्रथमः । ततो जागतो द्वादशाक्षरो द्वितीयः । ततश्चतुरक्षरस्तृतीयः । सा सप्तविंशत्यक्षरा ककुन्न्यङ्कुशिरेतिसंज्ञा उष्णिग्भवति । उदाहरणम् । ददीरेक्ण इति ॥

एकादशिनोः परः षट्कस्तनुशिरा ॥

यस्या उष्णिह एकादशिनोरेकादशाक्षरयोर्द्वयोः पादयोः परस्तृतीयः पादः षट्कः षडक्षरः सा तनुशिरेतिसंज्ञा उष्णिक् । अष्टाविंशत्यक्षरा । एकादशिनोरिति व्रीह्यादित्वादिनिः । पञ्च-म्यर्थे व्यत्ययेन षष्ठी । प्रयाघोषेत्युदाहरणमृग्वेदे ॥

४६॥

मध्ये चेत्पिपीलिकमध्या ॥

अयं षडक्षरः पादो मध्ये चेत्सप्ताविंशत्यक्षरा पिपीलिकमध्योष्णिगुच्यते । अग्ने स्वाहा कृणुहीत्युदाहरणम् ॥

आद्यः पञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भा ॥

यस्या उष्णिह आद्यः पादः पञ्चकः पञ्चाक्षरस्ततस्त्रय पादा अष्टका अष्टाक्षराः सा एकोनत्रिंशदक्षरा ऽनुष्टुब्गर्भेतिसञ्ज्ञा उष्णिक् । अस्या उदाहरणम् । पितुस्तुसोममिति ॥

चतुःसप्तकोष्णिगेव ॥

या चतुःसप्तका चत्वारः पादाः सप्तकाः सप्ताक्षराश्चस्याः सा चतुःसप्तका । साष्टाविंशत्यक्षरा उष्णिगेवोच्यते । केवलोष्णिक्शब्दवाच्या सैवेत्यर्थः । नयायुपच्छमदग्नेत्युदाहरणम् । पिङ्गलः । चतुष्पाद्यृषिभिरिति । ऋषिभिः सप्ताक्षरैः पादैरिति । छन्दोगानामपि । चतुष्पासेसप्ताक्षरैरिति । इत्यष्टावुष्णिह उक्ताः । तदुक्तम् । उष्णिहोऽष्टौ समुद्दिष्टा. सम्यक् पादविभागत इति ॥

तृतीयमनुष्टुप् ॥

द्वात्रिंशदक्षरं तृतीयं छन्दोऽनुष्टुप्सञ्ज्ञं भवति । चतुष्पादायचं इत्युक्तत्वात्सा चतुष्पदा भवति । पादाश्चाष्टाक्षराः । अनादेशेऽष्टाक्षराः पादा इति प्रागुक्तत्वात् । अस्या उदाहरणम् । अयन्ते योनिर्ऋत्विय इति । येषामध्येतीति च । पिङ्गल. । अनुष्टुब्गायत्रैरिति । छन्दोगानाञ्च । अनुष्टुप्चत्वारोऽष्टका इति । अनुष्टुबित्ययमधिकारः प्राक् बृहत्यधिकारात् ॥

पञ्च पञ्चकाः षट्कश्चैको महापदपङ्क्तिः ॥

यस्या अनुष्टुभः पञ्च पञ्चकाः पञ्चाक्षरा पञ्च पादा एकः पादः षट्कश्च षडक्षरश्च सैकत्रिंशदक्षरा महापदपङ्क्तिरिति सञ्ज्ञा । तत्र स्वादिष्ठादीत्युदाहरणमृग्वेदे ॥

जागतावष्टकश्च कृतिः ॥

द्वौ पादौ जागतौ द्वादशाक्षरौ तृतीयश्चाष्टकोऽष्टाक्षरो यस्याः सा कृतिसञ्ज्ञानुष्टुप्। सा कस्मै धातमित्युदाहरणम् ॥

मध्ये चेदष्टकः पिपीलिकमध्या ॥

कृतिरित्यनुवर्त्तते। जागताविति च। अयमष्टक पादो जागतयोर्द्वादशाक्षरपादयोर्मध्ये चेद्भवति प्रथमो द्वादशको द्वितीयोऽष्टकस्तृतीयो द्वादशक इत्येवं तर्हि सा पिपीलिकमध्याकृतिरित्येवंसञ्ज्ञानुष्टुबुच्यते। अजोजनोहीत्युदाहरणम्। अत्र पिङ्गल। त्रिपादष्टकैर्जागताभ्याञ्च मध्ये ते चेति। छन्दोगानामपि। त्रिपदाप्यष्टाक्षरौ द्वादशौ चेति ॥

नवकयोर्मध्ये जागतः काविराट्।

यस्या नवकयोर्नवाक्षरयोः पादयोर्मध्ये जागतो द्वादशाक्षरः पाद सा द्वात्रिंशदक्षरा काविराट्सञ्ज्ञानुष्टुब्भवति। ना विदासाह्वमह इत्युदाहरणमृग्वेदे ॥

नववैराजत्रयोदशैर्नष्टरूपा ॥

नवाक्षरदशाक्षरत्रयोदशाक्षरैस्त्रिभिः पादैर्द्वात्रिंशदक्षरा नष्टरूपासञ्ज्ञानुष्टुब्भवति। वाचस्पतये पवस्वेत्युदाहरणम्। रूपेण वो रूपमित्युदाहरणमिति केचित्। विपृच्छामि पाक्यानैदेवानित्युदाहरणमृग्वेदे।

दशकास्त्रयो विराट् ॥

यस्या दशका दशाक्षरास्त्रयः पादाः सा त्रिंशदक्षरा विराडनुष्टुब्भवति। उदाहरणम्। प्रत्नो अग्ने दीदिहि पुरो न इति ॥

